# योगदर्शनम् ।

भगवन्महामुनिपतञ्जलिप्रणीतम् ।

निखिलतन्त्रापरतन्त्रप्रतिभश्रीमद्वाचस्पतिमिश्र
विरचित–तत्त्ववैशारद्याऽऽख्यव्याख्याभूषित
महर्षिकृष्णद्वैपायनप्रणीत
भाष्यालङ्कृतम् ।

श्रीगुरुमण्डलसंस्थापकाचार्य नि० शा० नि० पूज्यपाद
स्वामिश्री १०८ बालरामोदासीनविरचित
विषमस्थलटिप्पणीसनाथीकृतम् ।

YOGADARSANA

by

SRI PATANJALI,

With the Bhashya of Krishna Dvaipayana

& a commentary called "Tatva Vaisarada"

by

Sri Wachaspati Misra,

WITH NOTES BY SRI BAL RAMODASIN.

*PUBLISHED AND SOLD BY H. D. GUPTA & SONS,*

PROPRIETORS, THE CHOWKHAMBA SANSKRIT BOOK DEPOT.

BENARES CITY:

*Printed by Jai Krishna Das Gupta,*

*at the Vidya Vilas Press.*

BENARES.

1911.

ॐ

नमोऽन्तर्यामिणे ।




# पातञ्जलदर्शनस्य योगतत्त्वसमीक्षाख्या भूमिका ।

उदासीना (१) भद्रे शमदमयुतोदासिनिवहै-
र्मुहुः संसेव्या मे प्रियमपि च तेषां मत्कृतम् ॥
न मां पश्यन्तीमे द्रविणमदविभ्रान्तमतयः
इतीमूचे यस्सः परमगुरुरीशो विजयताम् ॥ १ ॥
यायजूकदुरापं यज्जज्ञपूकजनप्रियम् ।
दन्दशूकोपवीताक्तं दन्दशूकेशसूत्रितम् ॥ २ ॥
तन्महःप्रेरितेनेदं बालरामेण साधुना ।
उदासीनपदस्थेन योगतत्त्वं समीक्ष्यते(२) ॥ ३ ॥

इह किल ससप्यदष्टद्दष्टसृष्टनष्टाङ्गयष्टौ निरर्गले सर्गवर्गे विमतिपत्तिविपश्चिव्राते मिथस्तैर्थिकानामिदं तावदविगीतमेवैकस्वरेण जेगीयते जरदन्तर्वाणिभिरनवरतं शमितसमस्ततन्त्रान्तराहितसंशीतिभिः—'यत्किल त्रय्या समाम्नातं तन्नोऽस-

---

(१)कदाचित् खलु सदसदनुग्रहानिग्रहार्हविग्रहग्रहणाऽनुगृहीतसंसारग्राहगृहीतजनतं भागीरथीफेनपटलपाण्डुरपर्य्यङ्कस्थं भगवन्तं बालव्यजनेन वीजयन्तीमविश्लेषादात्मानं वल्लभाम्मन्यमानां भगवतीं रुक्मिणीं तद्दर्पघ्नः श्रीकृष्णः—"उदासीना वयं नूनं न स्त्र्यपत्यार्थकामुकाः। निष्किञ्चना वयं शश्वन्निष्किञ्चनजनप्रियाः ॥ तस्मात्प्रायेण न ह्याढ्या मां भजन्ति सुमध्यमे" इत्यादीनि वचनानि व्याजहार । तान्येवाऽनुच्छायीकृत्य वस्तुनिर्देशात्मकं मङ्गलमुपनिबध्नाति—"उदासीना" इति । यः परमगुरुः, इति ईम् = लक्ष्मीम्, ऊचे स विजयतां = सर्वोत्कर्षेण वर्त्ततामित्यन्वयः । "भद्रे" इति "मे" इति च रुक्मिण्याः सम्बोधनम् ।

(२) शब्दकरणकब्रह्मसाक्षात्कारनिरसनं, मनस इन्द्रियत्वस्थापनं च योगसमीक्षाङ्गत्वेनोपन्यासिष्यत इति न प्रकृताऽसङ्गतिरिति बोध्यम् ।

ध्यक्षे श्रद्दधानानां प्रमाणम्' इति[१]। समाम्नातं चासकृत् पञ्चजनानां, यस्मिन् पञ्च पञ्चजनाः * प्रतिष्ठितास्तदेव विगलितनिखिलदुःखाऽनुषङ्गं चिन्मात्रं तत्त्वमवबोद्धव्यमिति। न केवलमवबोद्धव्यतामात्रं समाम्नायौदासीन्यमत्रालम्बे- ऽपि तु मा चाऽयं संसारोच्चिचच्छित्सुर्जनोऽनुपायेन तत्तत्त्वं प्रतिपित्सन् अन्ध- गोलाङ्गूलन्यायेनाऽनर्थमुपढौकिष्टेत्यनुक्रोशन्ती सती भगवती श्रुतिः तत्तत्त्वं व्यञ्जयन्तीनां चतसृणां प्रतिपत्तीनामुपादेयतामपि तादर्थ्येन वैधेनार्हार्थेन वा[२] प्रत्ययेन समामम्नौ। याः किलाम्नायन्ते—"आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इति। अतश्चैतदेव नो विश्वसनीयमुपादेयं च। तत्रा- द्या[३] प्रतिपत्तिः—उपनिषद्वाक्यानामद्वितीये ब्रह्मणि समन्वयाय बृहत्संहितोक्तै-

---

(१) साम्प्रतं चैतद्। न ह्यन्यथा नखविदलनमुशलावहननयोः शर्कराऽभ्यवहरणसो- मपानयोर्वाऽपूर्वौपयिकत्वाऽनौपयिकत्वादिविशेषाऽवधारणं सम्पनीपद्येत। अत्रेदं बोध्यम्। न वृद्धा ईश्वरप्रणीतत्वेन वेदानां प्रामाण्यमातिष्ठन्ते येन केनचित् सुभगाभिक्षुकन्यायेन बुद्ध- वाक्यप्रामाण्यप्रसङ्गापादनेनोपालभ्येरन्, किन्तर्हि नाऽयमबोधकोऽस्पष्टबोधको वितथबोधको वा येन प्रामाण्यपथं नाश्नुवीताऽपि तु मन्त्रायुर्वेदैकदेशसंवादाविदिततरसंवादो वेदः सर्व प्रमाणमेवेत्येवमातिष्ठन्ते, तत्कथङ्कारमुपालभ्येरन्। वृद्धैः परिगृहीतत्वात्प्रामाण्यमित्यपि केचित्। विप्रलम्भका एव वृद्धा इति चेदत्राहुर्न्यायाचार्य्याः—वृद्धैर्विप्रलब्धत्वाद्बालानामिति चेन्न। वृ- द्धानामपि प्रवृत्तेः। न च विप्रलम्भकाः स्वात्मानमपि विप्रलभन्ते। तेऽपि वृद्धतरैरित्येवमना- दिरिति चेत्, न तर्हि विप्रलिप्सुः कश्चिदत्र यतः प्रतारणशङ्का स्याद्। इदंप्रथम एव कश्चि- दनुष्ठायाऽपि धूर्त्तः पराननुष्ठापयतीति चेत्, किमसौ सर्वलोकोत्तर एव यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्य्येण तपसा श्रद्धया वा केवलं परवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति। कथञ्चैनमेकं प्रेक्षाकारिणोऽप्यनुविदध्युः। केन वा चिह्नेना- ऽयमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निर्णीतः। न ह्येतावतो दुःखराशेः प्रतारणसुखं गरीय' इत्यन्यत्र विस्तरः।

(२) श्रोतव्य इत्यादिषु तव्यत्प्रत्ययस्य विध्यर्थत्वमर्हार्थत्वं च मतभेदेनाऽन्यत्र निरूपितम्।

(३) पाठक्रमाऽपेक्षया दर्शनाख्यायाः प्रतिपत्तेः प्राथम्येऽपि अनुष्ठानक्रममवलम्ब्याद्यां प्रतिपत्तिं निर्वक्ति—'तत्राद्या' इति। एतच्च दर्शनाख्यां प्रतिपत्तिमुद्दिश्य श्रवणादीनि विधीयन्त इति मतेन। ये तु सुरेश्वराचार्य्यमताऽनुयायिनः—द्रष्टव्य इत्यनेन श्रवणाख्यविचारप्रयोजका- ऽऽपातज्ञानमनूद्यत इत्यातिष्ठन्ते तन्मते तु पाठक्रमाऽनुष्ठानक्रमयोरैकरूप्यमेव बोध्यमित्यन्यत्र विस्तरः। *प्राणचक्षुःश्रोत्रान्नमनांसि, प्राणचक्षुःश्रोत्रमनोज्योतींषि वा।

स्तात्पर्य्यनिर्णायकषड्विधलिङ्गैरुपनिषत्तात्पर्य्यगोचराऽज्ञानसंशयादिप्रतिबन्धनिवर्त्तिका तत्तात्पर्य्यनिर्णयाऽनुकूलन्यायविचारात्मकस्त्रान्तवृत्तिविशेषः। यां किलाऽऽचक्षते श्रवणमिति। द्वितीया प्रतिपत्तिः—मतान्तरादिविरोधधीप्रयुक्तप्रमेयासम्भावनादिप्रतिबन्धनिरासफलिकाऽऽगमाऽविरोधितर्कणात्मिकाऽन्तःकरणवृत्तिः। यां किल जगुर्मननमिति। तृतीया प्रतिपत्तिः-अस्थेमबहुललोलीभूतचित्ताऽस्थेम्रादिप्रतिबन्धनिवर्त्तिका विजातीयप्रत्ययाऽनन्तरितसजातीयप्रत्ययप्रवाहरूपा श्रवणमननजनितसंस्कारसाचिव्यचेतोजन्मवृत्तिभेदः। यां किलाऽभिलपन्ति निदिध्यासनमिति। तुरीया प्रतिपत्तिः—अनाद्यविद्यानिवृत्त्युपलक्षितनिरतिशयाद्वयाऽऽनन्दस्वरूपप्रतिष्ठचितिशक्तिरूपकैवल्यफलिका चित्साक्षात्काररूपा ऋतम्भरा प्रज्ञा। यां किलाऽभिव्याहरन्ति विज्ञानमिति। अस्याश्च तुरीयायाः साक्षात्काररूपायाः प्रतिपत्तेरन्तरङ्गं साधनं निदिध्यासनाख्या तृतीया प्रतिपत्तिः। यथाऽऽम्नायते—"ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति। यदेतन्निदिध्यासनं तदेव च ध्यानमिति कीर्त्तयन्ति जरद्विदन्तः। अत एव, निदिध्यासितव्य इति श्रौतनिगदं निश्चयेन ध्यातव्य इत्येवं व्याचक्षतोपनिषद्भाष्यकाराः। यत्तु विश्वरूपाचार्य्यैर्निदिध्यासनमत्र न ध्यानार्थकमपि तु विज्ञानार्थकमित्यभिदधे(१) तत्तु न ध्यानमात्रमेव ब्रह्मसाक्षात्क्रियायायलमपि तु दीर्घकालादरनैरन्तर्य्यसेवनेनं प्रसङ्ख्यानपरमकाष्ठाऽपरपर्य्यायज्ञानप्रसादाऽवस्थापन्नं सद्विज्ञानपदाऽभिधेयमेतच्चितिशक्तेः स्वरूपप्रतिष्ठात्वकरमित्येतत्तात्पर्य्यकम्। एतच्चाऽनुपदमेव विस्पष्टयिष्यामः। तदेतद् ध्यानमेव चाऽभ्यस्यमानं कालक्रमेण परिपाकदशापन्नं समाधिरित्यभिधीयते। "ध्यानद्वादशकेनैव समाधिरभिधीयते" इति स्कन्दाचार्य्योक्तेः ध्यानादस्पन्दनं बुद्धेः समाधिरभिधीयते" इति विश्वरूपाचार्य्योक्तेश्च। अत एव "समाध्यभावाच्च" अ० २ पा० ३ सू० ३९ इति ब्रह्मसूत्रभाष्ये समाधिशब्द-

---

(१) बृहदारण्यकचतुर्थाध्यायगतमैत्रेयीब्राह्मणे 'आत्मा वाऽरे द्रष्टव्य' इत्याद्याम्नाय आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन' इत्याम्नातम्। तत्र दर्शनादीनां समानपदैरेवानुवाददर्शनेन निदिध्यासनस्याऽपि निदिध्यासनेनेत्यनुवादो युक्तो, न तु विज्ञानपदेन विजातीयेन विभिन्नार्थकेनेत्याशयेन वार्त्तिककृता 'अनुवादे यथोक्तानां प्रक्रान्ते दर्शनादिषु। विज्ञानेनेत्यथ कथं निदिध्यासनमुच्यते'. इत्येवमाक्षिप्य "ध्यानाऽऽशङ्कानिवृत्त्यर्थं विज्ञानेनेति भण्यते। निदिध्यासनशब्देन ध्यानमाशङ्क्यते यत" इति समाहितम्। एवञ्च विश्वरूपाचार्य्यमते निदिध्यासपदं विज्ञानार्थकमिति स्पष्टमेव।

विवरणे, 'निदिध्यासितव्य' "ओमित्येवं ध्यायथ" इत्यादिध्यानप्रतिपादकानि वाक्यान्युदाजहुर्भाष्यकारा मस्करीनाः । अत एव च योगसूत्रकारा अपि 'तत्र प्रत्ययैकतानता ध्यानम्' इति ध्यानं निरुच्य, तदेवार्थमात्रनिर्भासम्' इति समाधिमिराहुः । समाधिमेव च महर्षयो योगं व्यपदिशन्ति । यथाहुर्योगियाज्ञवल्क्याः— "समाधिः समताऽवस्था जीवात्मपरमात्मनोः । संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" इति । अत एव स्कान्दादिषु 'यत्समत्वं द्वयोरत्र जीवात्मपरमात्मनोः । स नष्टसर्वसङ्कल्पः समाधिरभिधीयते । परमात्मात्मनोर्योऽयमविभागः परन्तप । स एव तु परो योगः समासात्कथितस्तव' इत्यादिषु वाक्येषु योगसमाध्योः समानलक्षणत्वेन निर्देशाः सङ्गच्छन्ते । यस्तु क्वाचित्कः समाधियोगयोः पुराणे विभिन्नलक्षणनिर्देशः स तु सम्प्रज्ञातसमाधिमारभ्याऽऽज्ञानप्रसादं यावत्योऽवस्थास्ता एव योगपदव्यपदेशनीया, न तु यमाद्यष्टाङ्गपतितसमाध्यवस्थापि तस्य योगसाधनत्वेन योगव्यपदेशानर्हत्वादित्येतदाकूतकः । किं बहुना निदिध्यासनमेव क्षणघटिकाऽर्द्धयामयामाहोऽहोरात्राऽर्द्धमासमासर्त्वब्दादिकालक्रमेणाभ्यस्यमानमुपचीयमानं सत् परप्रसंख्यान-सम्प्रज्ञात-धर्ममेघ-ऋतम्भरप्रज्ञा-गुणवैतृष्ण्य-परवैराग्य-ज्ञानप्रसाद-प्रसंख्यानपरमकाष्ठा -असम्प्रज्ञात-निर्विकल्पसमाधि- प्रतिप्रसव - जीवन्मुक्त्यादि-शब्दव्यपदेशभाग् भवतीति नाऽतिरोहितं बहुदृशामित्यलं तदवान्तरविशेषनिरूपणेन ग्रन्थविस्तरकरेण । अत्रेदं बोध्यम् । प्रसंख्यानधर्ममेघसम्प्रज्ञाताद्यवस्थापन्नं ध्यानं विज्ञानजननद्वारा कैवल्यहेतुः(१), ज्ञानप्रसादपरवैराग्यध्रुवस्मृत्याद्यवस्थापन्नं च साक्षात्कैवल्यहेतुः(२), असम्प्रज्ञातसमाध्यवस्था तु साक्षा-

---

(१) अत्रैतावान् विशेषः—प्रसङ्ख्यानं प्रकृत्यवधिकपुरुषाऽन्यताप्रकारकविवेकोपजननद्वारा ब्रह्मसाक्षात्कारोपायः, धर्ममेघसम्प्रज्ञातौ तु साक्षादेव ब्रह्मसाक्षात्कारहेतू इति । अत एव 'सत्त्वपुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगं चित्तं परं प्रसङ्ख्यानमित्याचक्षते ध्यायिन' इति योगलक्षणसूत्रे भाष्ये धर्ममेघपूर्वरूपत्वं प्रसङ्ख्यानस्य भाषितं व्यासदेवैः । धर्ममेघश्च धर्मं = परब्रह्मदर्शनं, मेहति वर्षति इत्यन्वर्थनामा साक्षादेव विज्ञानहेतुः । एतदभिप्रायेणैव योगियाज्ञवल्क्येन, अयन्तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनमिति गीतम् । 'ततः क्लेशकर्मनिवृत्तिः' इति सूत्रे भाष्ये धर्ममेघलाभादविद्यादिक्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् मुक्तो भवतीत्युक्तेरज्ञानापनोदनद्वारैव धर्ममेघस्य जीवन्मुक्तिहेतुत्वं, न साक्षादिति बोध्यम् ।

(२) ज्ञानप्रसादपरवैराग्ययोः कैवल्यपूर्वरूपत्वे प्रमाणं तु परवैराग्यलक्षणसूत्रस्थं भाष्यं, तत्र ह्युक्तम्—एतस्य हि नान्तरीयकं कैवल्यम् इति । 'सत्त्वशुद्धौ ध्रुवास्मृतिः, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति छान्दोग्यश्रुतिश्च ध्रुवायाः स्मृतेः कैवल्यहेतुत्वे प्रमाणं बोध्यम् ।

स्कैवल्यरूपैव [१]। एतामेवावस्थां परा(दा) र्थाऽभाविनीं तुर्य्यगां च जगुर्वशिष्ठाः। एतामेव चावस्थामापन्नः ब्रह्मविद्वरिष्ठ इति जीवन्मुक्त इति च व्यवह्रियते। ननु ब्रह्मात्मैक्यप्रमोत्पादाय प्रमात्रा द्वयमेव साधनजातमपेक्षणीयं, प्रमायाः करणं तदितिकर्त्तव्यता च। तत्र करणमुपनिषद्वाक्यम्।"तं त्वौपनिषदं पुरुषं पृच्छामि" इति श्रुत्याऽऽत्मन उपनिषद्गम्यत्वाऽऽम्नानाद्। इतिकर्त्तव्यता चाऽप्रामाण्यशङ्कानिरासितर्कानुसरणम्। एवञ्च श्रवणमननाभ्यामेव समीहितसिद्धेः कृतं निदिध्यासनादिना ज्ञानप्रसादपर्य्यन्तेन दुरनुष्ठानेन समाधिना इति चेद्। अत्र ब्रूमः—न[२] वयं प्रमाणतदितिकर्त्तव्यताऽतिरिक्तं साधनजातं प्रमोत्पादायाऽनुष्ठेयमित्येवमाचक्ष्महे येनैवं पर्य्यनुयुज्येमहि। किन्नामेतिकर्त्तव्यतैवेयं निबिडानादिभ्रमज्ञानवासनोद्बुद्धप्रतिबन्धकवैचित्र्यादनेकशाखा या खलु निदिध्यासनादीनङ्गीकृत्यैव जोषं विश्राम्यतीत्येवमाचक्ष्महे तत्कथङ्कारम्पर्य्यनुयुज्येमहि। तथाहि*एका खलु विषयभोगवासना, या किल दहत्याशुशुक्षणिरिव, दशति दन्दशूक इव, वेधयति कुन्त इव, अन्धयति नक्तमिव, आवेष्टयति रज्जुरिव, छिनत्ति करवाल इवेति। अपरा च-वेदान्ता अद्वितीये ब्रह्मणि प्रमाणं न वेत्यादिसंशयात्मिकोपनिषदां ब्रह्मण्यबोधकत्वकल्पनारूपा प्रमाणगताऽसम्भावना। अन्या च-आत्मा देहाद्यतिरिक्तो न वा। देहाद्यतिरिक्तत्वेऽपि कर्त्ता वाऽकर्ता वा। अकर्तृत्वेऽपि चिद्रूपो वा, अचिद्रूपो वा। चिद्रूपत्वेऽऽप्यानन्दरूपो वाऽऽनन्दगुणको वा। आनन्दरूपत्वेऽपि ब्रह्मणा सहैक्यं संभवति न वेत्यादिविविधसंशयशरीरा बोधितेऽपि ब्रह्मणि बाधितत्त्वकल्पनारूपा प्रमेयगताऽसम्भावना। इतरा च अबाधितेऽपि ब्रह्मणि तत्साक्षात्काररूपायां प्रमितावसाक्षात्कारत्वकल्पनात्मिका विपरीतभावनेति। तत्र या विषयभोगवासना सोपनिषच्छ्रवणाऽङ्गभूतया योगाङ्गयमादिसंपत्त्या निवर्त्तते। प्रमाणप्रमेयगताऽसंभावना तु श्रवणमननाभ्यां निवर्त्तिष्यते इति न तदर्थं निदिध्यासनाद्यपेक्षा। तथाऽपि या तु-यद्यपि वेदान्ता ब्रह्म बोधयन्त्येव, ब्रह्म च केनाऽपि मानेन न बाधितमथाऽपि तदहं न साक्षात्कुर्वे किन्तु तन्मम परोक्षमेव भातीत्यादिभ्रान्तितत्संस्कारपरम्परारूपा विपरीतभावना सा यावदनुवर्त्तिष्यते न तावद् विद्याऽप्रतिबद्धं स्वफलं प्रसोतुमर्हेत्यतस्तदपनोदनपुरस्सरमुपनिषद्भि-

(१) अत एव "स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये" इति असम्प्रज्ञातयोगे कैवल्यसादृश्यमुक्तं भाष्यकारैः।

(२) तत्रादौ पराऽभिमतोपनिषद्वाक्यकरणकं ब्रह्मसाक्षात्कारमनुसृत्य समाधत्ते—"न वयम्" इत्यादिना।

*प्रतिबन्धकवैचित्र्यमेवाह—तथाहीत्यादिना।

बोधितं सर्वमानाऽबाधितं सच्चिदादिलक्षणं ब्रह्मैवाऽहमस्मि। तच्च सर्वदा साक्षात्कुर्वे इत्येवं नैजं रूपमध्यक्षयितुं विज्ञानाऽवस्थापर्य्यन्तं निदिध्यासनमवश्यं शरणीकरणीयम्। न च प्रसङ्ख्यानाऽपरपर्य्यायस्य निदिध्यासनस्य ब्रह्मसाक्षात्कारकरणत्वे मानाऽभाव इति रेकणीयम्। बहुश्रुतिस्मृतिसूत्रेतिहासपुराणानामेव मानत्वात्। तथाहि—"ततस्तु तं पश्यति निष्कलं ध्यायमानः" 'अथ तद्दर्शनाऽभ्युपायो योगः' 'श्रद्धाभक्तिध्यानयोगादवेहि' 'अध्यात्मयोगाऽधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' 'ध्यानयोगेन[१] संपश्येद् गतिमस्याऽन्तरात्मनः। सूक्ष्मतां चाऽन्ववेक्षेत योगेन परमात्मनः' इज्याचार[२]दमाऽहिंसादानस्वाध्यायकर्मणाम्, अयन्तु परमो धर्मो यद्योगेनाऽऽत्मदर्शनम्, 'अपि संराधने प्रत्यक्षाऽनुमानाभ्याम्,[३]'युञ्जन्नेवं[४]सदाऽऽत्मानं योगी नियतमानसः शान्तिं निर्वाणपरमां मत्संस्थामभिगच्छति, अग्निष्टोमादिकान् सर्वान्[५] विहाय द्विजसत्तमः। योगाभ्यासरतः शान्तः परं ब्रह्माऽधिगच्छति, 'योगात् संजायते[६] ज्ञानं योगो मय्येकचित्तता' 'आत्मज्ञानेन मुक्तिः स्यात्तच्च योगादृते न हि' स्कन्दः; 'योगाग्निर्दहति[७] क्षिप्रमशेषं पापपञ्जरम्।प्रसन्नं जायते ज्ञानं ज्ञानान्निर्वाणमृच्छति,*'स्वसंवेद्यं हि तद्ब्रह्म कुमारी स्त्रीसुखं यथा। अयोगी नैव जानाति जात्यन्धो हि यथा घटम्'+'दुःसहा राम संसारविषवेगविषूचिका। योगगारुडमन्त्रेण पावनेनोपशाम्यति" इति। किञ्च—"आ प्रायणात् तत्राऽपि हि दृष्टम्" अ०४पा० १ सू०१२ इत्यधिकरणे दहराद्यहंग्रहोपासकानां प्रसङ्ख्यानादुपास्यब्रह्मसाक्षात्काराङ्गीकारात् कामातुरव्यवहितकामिनीसाक्षात्कारे प्रसङ्ख्यानस्य करणत्वक्लृप्तेश्च नेदमपूर्वमेव योगस्य ब्रह्मसाक्षात्कारे करणत्वकल्पनम्। यदाहुर्भामतीकाराः—'सा हि सत्कारदीर्घकालनैरन्तर्य्यसेविता सती दृढभूमिर्विशेषसाक्षात्काराय प्रभवति कामिनीभावनेव स्त्रैणस्य पुंसः इति।

---

(१) श्रुतीरुक्त्वा मानवीं स्मृतिमाह,—'ध्यानयोगेनेति।

(२) याज्ञवल्क्यवचनमाह—'इज्याऽऽचार' इति।

(३) ब्रह्मसूत्रं प्रमाणयति—"अपि" अ० ३ पा० २ सू० २४ इति।

(४) भगवद्गीतावाक्यमुदाहरति—युञ्जन्नेवमिति। *दक्षवचनमाह—"स्वसंवेद्यम्"।

(५) महर्षिमातङ्गोक्तिं प्रमाणयति—"अग्निष्टोम" इति।

(६) आदित्यपुराणवचनमुदाहरति—'योगादिति'। +वाशिष्ठवाक्यमाह—दुःसहा।

(७) कूर्मपुराणस्थं शिववाक्यमुपन्यस्यति—"योगाऽग्निः" इति।

न च प्रसङ्ख्यानस्य प्रमाकरणेष्वपरिसङ्ख्यानात्तज्जन्यो ब्रह्मसाक्षात्कारः कामिनीसाक्षात्कारवत्प्रमा न स्यात्प्रमाणाऽजन्यत्वादिति साम्प्रतम्। प्रमाणाऽजन्यत्वेऽपि विषयाबाधेन प्रमात्वसंभवात्, कामिनीसाक्षात्कारस्य तु बाधितविषयत्वेनाऽप्रमात्वं, न प्रसङ्ख्यानजन्यत्वेनेति बोध्यम्। एतच्च, पाणौ पञ्चवराटकान् पिधाय[1] इत्यादिना प्रमालक्षणखण्डने खण्डने स्पष्टम्। किञ्च प्रसङ्ख्यानस्योपनिषद्विचाराऽधिगतब्रह्मात्मैक्याऽवगतिमूलकतया प्रसङ्ख्यानजन्यस्याऽपि ब्रह्मसाक्षात्कारस्य प्रमाणमूलकत्वेनोक्तदोषानुदय एव। तदेतदाहुः कल्पतरुकाराः—"वेदान्तवाक्यजज्ञानभावनाजाऽपरोक्षधीः॥ मूलप्रमाणदार्ढ्येन न भ्रमत्वं प्रपद्यते" इति। वस्तुतस्तु[2] पूर्वोक्तश्रुत्यादिभ्यः "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः। मनसैवेदमाप्तव्यम्। एषोऽणुरात्मा चेतसा वेदितव्यः" सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियं, "यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति" इति भगवद्वाक्याच्च। शास्त्राचार्य्योपदेशशमादिसंस्कृतं मन आत्मज्ञाने करणमिति गीताभाष्याच्च। महावाक्यविचाराऽधिगतब्रह्मात्मैक्याऽवगतिमूलकप्रसङ्ख्यानसहकृतमन्तःकरणमेव ब्रह्मसाक्षात्कारे करणं, न महावाक्यमात्रं प्रसंख्यानमात्रं वा, सर्वशाखाप्रत्ययन्यायेन तथैव लाभात्। कामिनीसाक्षात्कारेऽपि प्रसङ्ख्यानसहकृतमनस एव करणत्वाऽङ्गीकाराच्च। तथा चाहुर्भामतीपतयः—'न ब्रह्मज्ञानमात्रं सांसारिकधर्मनिवृत्तिकारणमपि तु साक्षात्कारपर्य्यन्तम्। ब्रह्मसाक्षात्कारश्चान्तःकरणवृत्तिभेदः। श्रवणमननादिजनितसंस्कारसचिवमनोजन्मा षड्जादिभेदसाक्षात्कार इव गान्धर्वशास्त्रश्रवणाऽभ्याससंस्कृतमनोयोनिरिति। ये तु मनसोऽनिन्द्रियत्वात्तज्जन्यज्ञानस्य कथं प्रत्यक्षत्वमित्येवं प्रत्यवतिष्ठन्ते ते प्रष्टव्याः, किं व्युत्पत्तिनिमित्तविरहान्मनसोऽनिन्द्रियत्वम्, उत प्रवृत्तिनिमित्ताऽभावाद्, आहो स्मृत्यादिप्रमाणाभावाद्, अथ ब्रह्मसूत्रकृताऽनङ्गीकृतत्वाद्, यद्वा शङ्कराचार्य्याद्यनभिमतत्वाद्, बाधकसद्भावाद्वा। न तावदाद्यः। इन्द्रलिङ्गत्वरूपस्य मनसि प्रवृत्तिनिमित्तस्य सुतरां सम्भ-

---

(१) पाणौ पञ्च वराटकान् पिधाय केनचित् करे कति वराटकाः सन्तीति पृष्टे पञ्चवराटका इति तदुत्तरवक्तुर्वाक्यप्रयोगमूलभूतसंख्याविशेषज्ञानस्य मूलप्रमाणशून्यस्याऽऽहार्यारोपस्याऽपि यथा यथार्थत्वं तद्वदत्राऽपि विषयाऽबाधेन यथार्थत्वमिति भावः। एतच्च "मणिप्रदीपप्रभयोः" इत्यादिना ध्यानदीपे स्पष्टम्।

(२) गुणोपसंहारन्यायमाश्रित्य स्वाऽभिमतं सिद्धान्तं वक्तुमुपक्रमते—'वस्तुतस्तु' इत्यादिना।

वाद् । नाऽपि द्वितीयः । साङ्ख्याद्यभिमतस्य सात्त्विकाहङ्कारोपादानकत्वस्य वेदान्त्य-भिमतभौतिकसात्त्विकांशोपादानकत्वस्य(१) तार्किकाद्यभिमतशब्देतरोद्भूतविशेष-गुणानाश्रयत्वेसतिज्ञानकारणमनःसंयोगाश्रयत्वस्य च प्रवृत्तिनिमित्तस्य निष्प्रत्यूह-त्वाद् । नाऽपि तृतीयः । "एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः" 'कर्मेन्द्रियन्तु पाय्वादि मनोनेत्रादि धीन्द्रियम्; "इन्द्रियाणां मनश्चास्मि" इन्द्रियाणि दशैकं च" इत्यादिस्मृतीनामेव प्रमाणत्वाद् । नाऽपि चतुर्थः । "त इन्द्रियाणि तद्व्यपदे-शादन्यत्र श्रेष्ठाद्" अ० २। पा० ४ । सू०१७ । इतिसूत्रेणैकादशेन्द्रियाणामुक्त-त्वाद् । अत एव च न पञ्चमः कल्पः । एतस्मिन्नेव सूत्रे भाष्ये शङ्कराचार्य्यादि-भिर्मनस इन्द्रियत्वस्वीकाराद् । नापि षष्ठः । इन्द्रियेभ्यः परं मन इत्यादिवाक्या-नां मनस उभयात्मकत्वेन सर्वार्थग्रहणसामर्थ्ययोगादितरेन्द्रियाऽपेक्षयोत्कृष्टत्वाऽभि-धाने तात्पर्य्याद् । अन्यथा मनसस्तु परा बुद्धिरित्युत्तरवाक्याद्बुद्धेरप्यन्तःकर-णत्वं दुरुपपादमापद्येत । "एतस्मात्प्रजायन्ते मनः सर्वेन्द्रियाणि च" इति श्रुतौ पृथगुपादानं तु गोबलीवर्दन्यायेन । तदेतदुक्तं वाचस्पतिमिश्रैः 'मनसस्त्विन्द्रियत्वे स्मृतेरवगते क्वचिद्भेदेनोपादानं गोबलीवर्दन्यायेन । अथवेन्द्रियाणां वर्त्तमान-मात्रविषयत्वान्मनसस्तु त्रैकाल्यगोचरत्वाद् भेदेनाऽभिधानम् इति ।

यत्तु "तद्धाऽस्य विजज्ञौ" "तमसः पारं दर्शयति" इत्यादिश्रुतिषु आचा-र्य्योपदेशाऽनन्तरमेव ब्रह्मसाक्षात्कारश्रवणाद् "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यत्र सुनिश्चितपदेन वेदान्तवाक्यजज्ञानोत्तरमितरनैराकाङ्क्ष्यश्रवणाच्च, तंत्वौ-पनिषदं पुरुषं पृच्छामि" इति ब्रह्मण उपनिषन्मात्रगम्यत्वश्रवणाच्चौपनिषद-महावाक्यमेव ब्रह्मसाक्षात्कारे करणं, न मनः । तस्य "यन्मनसा न मनुते" इत्यादि-श्रुत्या ब्रह्मज्ञानकरणत्वनिषेधाद् । इत्थं च कृतं समाधिनाऽलं वा प्रसङ्ख्यानसहकृ-तेन मनसा । शब्दादेवापरोक्षज्ञानस्य सिद्धत्वाद । तथाचोक्तं नारदीये—"तत्त्वम-स्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्" इति । अत एव वाक्यजन्यया दृष्ट्या-ऽऽत्मानं परब्रह्मत्वेन पश्यन् सन्निन्द्रो नाम देवता मामेव विजानी हीति प्रतर्दनं प्रत्युपदिशतीत्यर्थकं "शास्त्रदृष्ट्या तूपदेशो वामदेवादिवद्" १अ०१ पा०१ सू०

---

(१) नेदमिन्द्रियत्वसामान्ये प्रवृत्तिनिमित्तं, कर्मेन्द्रियेष्वव्याप्तेः, किन्तु ज्ञानेन्द्रियत्व-सामान्य इति बोध्यम् । तत्रैष विशेषः । मनसः समष्टिभौतिकसात्त्विकांशोपादानकत्वं, ज्ञानेन्द्रि-याणान्तु व्यस्तसात्त्विकांशोपादानकत्वमिति ।

इति ब्रह्मसूत्रं सङ्गच्छते(१) इति मतं, तन्न पेशलम्। शब्दस्य कुत्राऽपि साक्षात्कारकरणत्वस्याऽक्लृप्तत्वेन—"यतो वाचो निवर्त्तन्ते" 'यद्वाचाऽनभ्युदितम्' इत्यादिश्रुतिसहकृतेन, शब्दो नाऽपरोक्षधीहेतुः शब्दत्वात्स्वर्गाऽपूर्वबोधकशब्दादिवदित्यनुमानेन विजज्ञाविति सूत्रस्य षष्ठप्रपाठकान्तःस्थविजज्ञाविति वत्परोक्षज्ञानपरत्वेनाऽपि चारितार्थ्यसम्भवात्, तमसः पारं दर्शयतीत्यत्राऽपि ग्राममार्गोपदेष्टरि, ग्रामं दर्शयतीत्यत्रेव परम्परया प्रयोजकत्वोपचारसंभवाच्च। उपनिषत्प्रतिपाद्यमनोगम्यत्वस्य चोपासनादिष्विव विरोधाऽभावेनौपनिषदमित्यस्याऽपि साधकत्वाऽसम्भवाच्च, यतश्च इति पदस्वरसेन वेदान्तवाक्यसहकृतविज्ञानाऽवस्थापन्ननिदिध्यासनेन निश्चितार्था इत्यर्थाऽऽश्रयणेन वेदान्तविज्ञानेतिश्रुतेरपि शब्दकरणकसाक्षात्कारे तात्पर्य्याभावाच्च। 'मनसा तु विशुद्धेन' इत्यादिश्रुतेः। 'यन्मनसा न मनुते' इत्यादिश्रुतीनां प्रसङ्ख्यानाऽसहकृतमनोऽग्राह्यत्वेऽभिप्रायकल्पनाच्च, मनःकरणकब्रह्मसाक्षात्कारे त्वदुदाहृतवचसामबाधकत्वाद्। अत एव काठके वैवस्वतेन मृत्युनोपसन्नं नचिकेतसं प्रति विज्ञेयार्थस्य दुरवबोधत्वप्रदर्शनेन विविधभोगवितरणप्रलोभेन चैनं परीक्ष्योपदेशयोग्यतामभिज्ञाय परावरात्मतत्त्वविज्ञानोपदेशार्थं प्रवृत्तेन "शृण्वन्तोऽपि बहवो यं न विद्युः" इत्यादिना शब्दस्याऽप्रतिबद्धापरोक्षज्ञानसाधनत्वाऽभावाऽभिधानपुरस्सरम् "अध्यात्मयोगाऽधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" इत्यादिना योगशब्दितप्रसङ्ख्यानसहकृतमनःकरणकं ब्रह्मसाक्षात्कारमुपक्रम्य 'सर्वे वेदा' इत्यादिना 'एतदालम्बनं श्रेष्ठम्' इत्यन्तेन देशबन्धाख्यां धारणामुपन्यस्य "न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्य"(२) इत्यनेन ध्यानसंभजनाऽपरपर्य्यायं वरणमुक्त्वा "नाऽशान्तो नासमाहित" इत्यनेन व्यतिरेकमुखेन ध्यानोत्तरकालिकं समाधिञ्चाऽभिधाय "आत्मानं रथिनं विद्धि" इत्यादिना "सोऽध्वनः पारमाप्नोति" इत्यन्तेनार्थवादप्रणाड्या समाधेरवश्यकर्त्तव्यताकथनद्वारा, सफलत्वं च परिकीर्त्य 'दृश्यते त्वग्र्यया बुद्ध्या' इत्यादिना ऋतम्भराख्यप्रज्ञायाः सूक्ष्मार्थग्रहणे सामर्थ्यमुपवर्ण्य "यच्छेद् वाङ्मनसी प्राज्ञ" इत्यादिना

---

(१) उपलक्षणं चैतद् 'अविद्याघातिनः शब्दाद् याऽहं ब्रह्मेति धीर्भवेद्। नश्यत्यऽविद्यया सार्द्धं हत्वा रोगमिवौषधमित्यन्तेन वार्तिककारैः शब्दकरणकब्रह्मसाक्षात्कारस्य स्पष्टमुक्तत्वाच्चेत्यपि बोध्यम्,

(२) वृणुते इत्यस्य सम्भजत इत्यर्थः। वृङ् सम्भक्ताविति स्मरणाद्, यमिति प्रथमार्थे द्वितीया, एष इति च द्वितीयार्थे प्रथमा। एवञ्च यः साधक एतमात्मानं वृणुते—सम्भजते =एकतानतया चिन्तयति तेन साधकेन लभ्य इत्यर्थो बोध्यः।

समाधेरनुष्ठानप्रकारं च परिभाष्य "आवृत्तचक्षुरमृतत्वमिच्छन्" 'हृदा मनीषा मनसाऽभिक्लृप्त' इत्यादिना योगमभ्यस्य 'यदा पञ्चाऽवतिष्ठन्ते, इत्यादिना योगस्वरूपमभिधाय "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः। अथ मर्त्यो अमृतो भवत्यत्र ब्रह्म समश्नुते" इत्यादिना ब्रह्मसाक्षात्कारफलो योग एव मुक्त्युपायत्वेनोपसंहृतः सङ्गच्छते। अत एव च बृहदारण्यके चतुर्थे मैत्रेयीब्राह्मणे "आत्मनो वा अरे दर्शनेन" इतिश्रुतिविवरणे "यदैकत्वमेतान्युपगतानि तदा सम्यग्दर्शनं ब्रह्मैकत्वविषयं प्रसीदति, नान्यथा श्रवणमात्रेण" इत्यादिना वाक्यमात्रस्यापरोक्षज्ञानकरणत्वनिषेधो भाष्यकारैरुक्तः सङ्गतो भवति। अत एव च कथं तत्त्वज्ञानमुत्पद्यत इत्याकाङ्क्षामुत्थाप्य 'समाधिविशेषाऽभ्यासाद्' इत्यादीनि योगतत्त्वप्रतिपादकाऽक्षपादीयसूत्राण्यवतारयामासुर्न्यायदर्शनभाष्यकारा वात्स्यायनाऽऽचार्य्याः। अत एव च याज्ञवल्क्येनाऽपि "व्याचक्षाणस्य तु मे निदिध्यासस्व" इत्येवं ध्यानमेव प्रियाम्प्रति सम्यग्दर्शनसाधनत्वेनाऽऽम्नातम्, अत एव च 'तपसा ब्रह्म विजिज्ञासस्व' इति वरुणेन स्वपुत्रं भृगुं प्रति 'मनसश्चेन्द्रियाणां चैकाग्र्यं परमं तप' इतिलक्षणलक्षितं तप एव ब्रह्मविज्ञानोपायतयाऽऽम्नातम्, न तु श्रवणमात्रम्। किञ्च यदि हि तत्त्वमसीति सकृदेवोच्यमाने, तद्धास्य विजज्ञाविति श्रुत्याऽऽम्नायेत स्यादपि तदा शब्दापरोक्षवादिनां मनोरथपूरणं, तदेव तु न। नवकृत्व उपदेशानन्तरं विजज्ञावित्याम्नातवती श्रुतिः। एवञ्चात्राप्यर्थतः प्रसंख्यानापरपर्य्यायोऽभ्यास एव श्रुत्यादृत इति भातीति न सा श्रुतिरपि शब्दकरणब्रह्मसाक्षात्कारतात्पर्य्यवतीति, तमसः पारं दर्शयतीत्यत्राऽपि 'सत्त्वशुद्धौ ध्रुवास्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इतिपूर्वश्रुतिपर्य्यालोचनेन निदिध्यासनपरमकाष्ठारूपाया ध्रुवायाः स्मृतेरेव तमःपारदर्शनहेतुत्वमवगम्यते, नोपदेशमात्रस्य। औपनिषदमित्यस्याप्युपनिषदि भवम्,उप निषादि साधुम् उपनिषदा प्रतिपाद्यमित्येवार्थो,न तु मात्रपदघटितत्वेनावधारणगर्भितत्वादुपनिषन्मात्रगम्यत्वरूपोऽर्थो येनमनोग्राह्यत्वे श्रुतिर्विरुध्येतेत्युक्तिःसमञ्जसा भवेत्। किञ्च भाष्यवार्त्तिककारादिभिरुपनिषच्छब्दस्य विद्यार्थत्वोपवर्णनेन(१) ज्ञेयं यन्निर्गुणं ब्रह्म तत्र पृच्छामि, न तु ध्येयं सगुणमित्यर्थपरत्वेनाप्यौपनिषदमित्यस्य चारितार्थ्यसम्भवान्न औपनिषदमिति शब्द-

(१) 'सेयं ब्रह्मविद्योपनिषच्छब्दवाच्या तत्पराणां सहेतोः संसारस्याऽवसादनात्, उपनिपूर्वस्य सदेस्तदर्थत्वात्, तादर्थ्याद् ग्रन्थोऽप्युपनिषदुच्यत' इत्यादिना बृहदारण्यकभाष्ये 'अत्र चोपनिषच्छब्दो ब्रह्मविद्यैकगोचर इत्यादिना 'यथोक्तविद्याहेतुत्वाद् ग्रन्थोऽपि तदभेदतः। भवेदुपनिषन्नामा लाङ्गलं जीवनं तथा' इत्यन्तेन च बृहद्वार्त्तिके स्पष्टोऽयमर्थः।

करणकसाक्षात्कारे दृढमुपोद्बलकम्, उपनिषच्छब्दो महावाक्यार्थवाचक इतिमतेऽपि[१] महावाक्यगम्यत्वमित्येवार्थो न तु महावाक्यमात्रगम्यत्वमितीति तदपि नो नः प्रतिकूलम्। किञ्चास्मदुक्तमनसो[२] वेदजन्यज्ञानाऽनन्तरमेव प्रवृत्ततया वेदोपजीवित्वाद् वेदाऽनुपजीविमानान्तरगम्यत्वस्यैव वेदगम्यत्वविरोधान्नौपनिषदत्वश्रुतिव्याकोपः। शास्त्रदृष्टिसूत्रमपि ब्रह्मविषयमानसप्रत्यक्षस्य शास्त्रप्रयोज्यत्वादुपपन्नम्। तदुक्तं कल्पतरौ-'अपि संराधने सूत्राच्छास्त्रार्थध्यानजा प्रमा। शास्त्रदृष्टिर्मता तां तु वेत्ति वाचस्पतिः परमिति। किञ्च "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य" इति श्रुतेः। 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः', इति भगवद्वाक्याच्च प्रयाणकालिकोद्बुद्धवासनाऽनुसारेणैव सदसद्योनिं जीवः प्राप्नोतीति स्फुटम्प्रतीयते एवञ्च मरणसमय उद्भूतवैक्लव्यस्याऽयोगिना वारयितुमशक्यत्वादन्तकालेऽप्याऽऽत्मभावनार्थं योगबलोऽपेक्ष्यत एवेति न श्रवणमात्रेण निर्वाहः। तथा चाह भगवान्—"प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव। भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम्" इति। यत्तु सुखादीनां साक्षिभास्यत्वाङ्गीकारेण मनसः कुत्रापि करणत्वस्याक्लृप्तत्वेन दशमस्त्वमसीत्यादौ साक्षात्कारकरणत्वेन क्लृप्तस्य शब्दस्यैव ब्रह्मसाक्षात्कारकरणत्वं युक्तमिति। तन्न। सुखादिसाक्षात्कारे मनसः करणत्वाऽभावेऽपि, 'अहमेवेदं सर्वं सर्वोऽस्मीति मन्यते सोऽस्य परमो लोक' इति श्रुत्युक्ते स्वाप्ने ब्रह्मसाक्षात्कारे गर्भस्थवामदेवसाक्षात्कारे च करणान्तरासंभवेन मनस एव करणत्वसम्प्रतिपत्तित्वादक्लृप्तकल्पनाऽभावाद्, दशमस्त्वमसीत्यत्राऽपि शब्दस्य सहकारित्वेनेन्द्रियस्यैव साक्षात्कारकरणत्वाऽभ्युपगमाच्च। न च बहुलतमे तमसि लोचनहीनस्याऽपि तद्वाक्यादपरोक्षभ्रमनिवर्त्तकस्य दशमोऽस्मीत्यपरोक्षज्ञानस्य दर्शनान्ने-

---

( १ ) 'उपनिषदिति वेद इत्यपीदं समभिवदन्ति महावचो महान्तः' अ० ३ श्लो० २९७ इति सर्वज्ञमुन्युक्तिजुषां मतेऽपि इत्यर्थः।

( २ ) यथा द्वादशकपालेऽष्टाकपालानां सत्त्वेऽपि नाष्टकपालसंस्कृतत्वव्यवहारो यथा वा द्विपुत्रादौ नैकपुत्रत्वव्यवहारस्तद्वदत्राऽपि मनोगम्यत्व उपनिषद्गम्यत्वाऽनुपपत्तेरुपनिषन्मात्रगम्यत्वमर्थादवसीयते, न ह्युपनिषदच्छब्दो वेदमात्रवाचको येनाऽन्यगम्यत्वेऽप्युपासनादिवदौपनिषदत्वव्यवहारः सम्भवेत्, किन्तर्हि महावाक्यमात्रवाचकः। तच्चाऽन्यगम्यत्वेऽनुपपन्नम् इत्याशङ्क्य मात्रपदेन "मनसैवेदमाप्तव्यम्" इत्यादिश्रुतिबलाद् वेदाऽनुपजीविमानान्तरगम्यत्वमेव वार्य्यते, न महावाक्यार्थभावनासंस्कृतमनोगम्यत्वमपीत्याशयेनाह 'किञ्च' 'अस्मदुक्तमनस' इति।

न्द्रियकरणकं तदिति वाच्यम् । एतादृशस्थले भ्रमस्यैवाऽभावाद्, भ्रमसत्त्वेऽपि निश्चयाऽभावेनाऽस्य दशमस्त्वमसीत्युपदेशे प्रवृत्तेरसम्भवाच्च । किञ्च, न हि दशमस्त्वमऽसीति श्रवणमात्रेण दशमोऽस्मीत्यभिमन्यतेऽपि तु वक्तुराप्तत्वनिश्चयायेतरान् सर्वान्परिगणय्यात्मानं दशमत्वेन प्रत्येति । इत्थं च प्रसङ्ख्यानाऽपरपर्य्यायं गणनमेव दशमप्रत्यक्षहेतुः, शब्दस्तु सहकारिमात्रमिति न शब्दस्य प्रत्यक्षकरणत्वोक्तिसम्भव इत्यलं विस्तरेण । अत्रेदमवधेयम्—आगमानुमाने हि परोक्षार्थावगाहिनो सामान्यमात्रमेवाऽभिनिविशेते, न तु विशेषमपि साक्षात्कुरुतः । समाधिप्रकर्षजन्या ऋतम्भरा प्रज्ञा तु योगजाऽलौकिकसन्निकर्षेण योगिनो व्यवहितविप्रकृष्टसूक्ष्मपदार्थसाक्षात्कारवत्तत्तद्विशेषसाक्षात्क्रियाया अलमिति ब्रह्मसाक्षात्काराय ऋतम्भराप्रज्ञालाभाय योगोऽभ्यसनीय इति तथाचाऽऽह भगवान् पतञ्जलिः "ऋतम्भरा तत्र प्रज्ञा" । सा तु श्रुताऽनुमानविषयाभ्यामन्यविषया विशेषार्थत्वाद्" इति । ननु जनकादीनां योगाऽभ्यासमन्तरैव शब्दादप्रतिबद्धज्ञानमोक्षयोः श्रवणात् कथं योगादेवाऽप्रतिबद्धज्ञानमोक्षाऽभ्युपगमो युक्त इति चेद् । अत्रोच्यते । यथा महावाक्यकरणकब्रह्मसाक्षात्कारवादिभिर्महताऽऽरभ्या संन्यासस्य जिज्ञासाङ्गत्वं ज्ञानपरिपाकाङ्गत्वं च प्रतिपाद्य जनकादिषु व्यभिचारमाशङ्क्य "जन्मान्तरेषु यदि साधनजातमासीत्संन्यासपूर्वकमिदं श्रवणादिकं च । विद्यामवाप्स्यति जनः सकलोऽपि यत्र तत्राश्रमेष्वसत्र निवारयाम" इति समाहितम् । तथाऽत्राऽपि पूर्वजन्माऽभ्यस्तयोगेनास्मिन् जन्मनि तदनुष्ठानं विनैव जनकादीनां ज्ञानोत्पाद इति समः समाधिः(१) । एतादृशाऽधिकारिभेदमादायैव 'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव' इत्यादिना वासिष्ठे विकल्पोऽभिहितः । एतच्च 'येषामेतौ पदार्थविज्ञानसंशयविपर्य्ययप्रतिबद्धौ तेषां तत्त्वमसीति वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति' इत्यादिनाऽऽवृत्त्यधिकरणे शाङ्करे स्पष्टम् । किम्बहुना । येऽपि महावाक्यकरणकं ब्रह्मसाक्षात्कारमभ्युपयन्ति तैरपि विपरीतभावनापनोपदाय ध्रुवास्मृतिरवश्यमभ्युपेया । न च वाक्यात्साक्षात्कारे जाते विपरीतभावनैव नोदीयादिति साम्प्रतम् । सर्व-

---

(१) "जैगीषव्यो यथा विप्रो यथा चैवाऽसितादयः ।
क्षत्रिया जनकाद्यास्तु तुलाधारादयो विशः ॥
सम्प्राप्ताः परमां सिद्धिं पूर्वाऽभ्यस्तस्वयोगतः"
इत्यादिपुराणवाक्यान्यप्यत्र प्रमाणत्वेनाऽनुसन्धेयानि ।

ऋमुनिभिरेव भर्त्तृदृष्टान्तेन तथोपपादितत्वाद् । तथा चाहुः—"पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदयाऽपि यथा। न फलाय भर्त्तृविषया भवति श्रुतिसम्भवाऽपि तु तथात्मनि धीः"(१) इति ।

केचित्तु प्राग्भवीयाऽनुष्ठितादस्मिन् जन्मनि तीव्रसंवेगेनानुष्ठिताद्वा शमदमश्रवणादेस्तत्त्वज्ञानोदये सति "यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य" "ब्रह्म वेद ब्रह्मैव भवति" "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः क्षीयन्ते चाऽस्य कर्माणि तस्मिन् दृष्टे परावरे" "सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता" "तमेव विदित्वाऽतिमृत्युमेति" "यस्तु विज्ञानवान् भवत्समनस्कः सदा शुचिः स तु तत्पदमाप्नोति यस्माद् भूयो न जायते" "य एवं वेदाऽहं ब्रह्मास्मीति स इदं सर्वं भवति" इत्यादिश्रुतिभ्यो यथाक्रमम्—अविद्याग्रन्थिः, अब्रह्मत्वम्, हृदयग्रन्थिः सर्वसंशयाः, प्रारब्धेतरकर्माणि, असर्वकामत्वं, मृत्युः, पुनर्जन्म, असर्वज्ञत्वम् इत्येतेषां बन्धानां निवृत्तौ देहे सत्यपि ज्ञानोत्पत्तिसमकालिकायां विदेहमुक्तौ सत्यपि परन्तु प्रारब्धकर्मणो बलवत्त्वात्तत्प्रयुक्तं दृष्टदुःखमनुवर्त्तत एवायोगिनो ज्ञानिनः । एतच्च 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशाद्' अ० ४ पा० १ सू० १३ इत्यादिसूत्रेषु स्पष्टम् । अपिच दृष्टदुःखनिवृत्तिस्तु दूराऽपास्ता, ज्ञाने सति प्रयाणाऽनन्तरं कैवल्यं भविष्यतीत्यप्यनियतम् । 'यावदधिकारमवस्थितिराधिकारिकाणामिति ब्रह्मसूत्राद्। एवं विद्यासाधनाऽनुष्ठाने सतीहैव जन्मनि विद्या प्रसिद्ध्यतीत्यप्यनियमोऽत एव यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित्प्रतिबन्धो न क्रियत उपस्थितविपाकेन कर्मान्तरेण तदेहैव विद्योत्पद्यते। यदा तु खलु प्रतिबन्धः क्रियते तदाऽमुत्रेत्यर्थकेन "ऐहिकमप्यप्रस्तुतप्रति-

---

(१) अत्रेदमाख्यानं—भर्त्तृर्नाम कश्चित् कस्यचिद् राज्ञोऽत्यन्तं वल्लभो ब्राह्मणो राजोपजीविभिर्मात्सर्य्याद् द्विष्यमाण आसीत्। स कदाचिद् दैवयोगान्नेत्रे पिधायारण्ये निक्षिप्तश्चिरं तत्र स्थितो दैवयोगेनाऽऽरण्यकैः सह पुरसमीपमागतोऽपि विद्वेषिराजकीयाऽवरुद्धपुरमार्गः पुरं प्रवेष्टुं न शशाक । राजा च भर्त्तृर्मृतः प्रेतो जात इति तैः प्रबोधितः सँस्तथैवनिश्चयमकरोद् । दैवात् कदाचिद्बहिर्गतो राजा बाह्योपवने तं दृष्ट्वाऽपि ब्रह्मराक्षसं मेने इति । एवञ्च यथा निर्दोषचक्षुर्जनिता प्रमाणभूताऽपि भर्त्तृविषया मतिः, मृतो भर्त्तृर्द्रष्टुमयोग्य एव किन्तु प्रेत एवायं दृश्यत इत्यसम्भावनादिरूपचेतोदोषेणाऽभिभूता सती भर्त्तृरेवायमिति निश्चयफलाय पर्य्याप्ता न भवति, तथा निर्दोषवेदान्तवाक्यजन्या प्रमाणभूताऽप्यहं ब्रह्मास्मीति धीर्विपरीतभावनादिप्रातिबद्धत्वादज्ञाननिवृत्तिफलाय न समर्थेत्यर्थः ।

बन्धे तद्दर्शनात्" अ० ५ पा० ४ सू० १ सूत्रेणानियमोऽभिहितः। तदेवं सर्वसम्पत्तिविपत्तिभाजनं प्रारब्धं कर्म यावन्न निवर्त्तिष्यते तावन्न श्वःश्रेयसं पश्यामः, प्रारब्धनिवृत्तिस्तु "नास्ति योगसमं बलं" "विनिष्पन्नसमाधिस्तु मुक्तिस्तत्रैव जन्मनि" इत्यादिवाक्येभ्यो योगाभ्याससाध्या। अतश्च जीवन्मुक्तिसाधनमनोनाशवासनाक्षयसम्पादनाय सर्वैरेव मुमुक्षुभिरुपादेयोऽयं योग इत्याहुः। जीवन्मुक्तिलक्षणप्रयोजनफलाख्यानं प्रारब्धकर्माऽपेक्षया योगस्य प्राबल्यं च, मनोनाशवासनाक्षयप्रकारश्च सविस्तरं सप्रमाणं च जीवन्मुक्तिविवेके विद्यारण्यस्वामिभिर्न्यरूपीति तत एव कणेहत्य निरीक्षणीयमित्युपरम्यते बहुजनानाभिमतलिखितलेखनभीत्या। किञ्च वाशिष्ठोक्तज्ञानसप्तभूमिषु भूमिकात्रितयस्य जाग्रदवस्थाख्यस्य कथञ्चिद् योगमन्तरा लाभेऽपि भूमिकाचतुष्टयस्य स्वप्नसुषुप्तिगाढसुषुप्त्याद्याख्यस्य लाभायाऽसम्प्रज्ञातसमाधिरवश्यमभ्यसनीय इति न योगमन्तरा भद्रमित्यलम्बहुना। योगबीजे तु 'ज्ञानादेव हि मोक्षं च वदन्ति ज्ञानिनः सदा। न कथं सिद्धयोगेन योगः किं मोक्षदो भवेद्' इति गौरीप्रश्ने 'ज्ञानेनैव हि मोक्षो हि तेषां वाक्यन्तु नान्यथा। सर्वे वदन्ति खड्गेन जयो भवति तर्हि किम्। विना युद्धेन वीर्य्येण कथं जयमवाप्नुयात्। तथा योगेन रहितं ज्ञानं मोक्षाय नो भवेद्' इत्यादिना भगवता शिवेन ज्ञानयोगयोः समुच्चयः स्पष्ट एवाऽभिहितः। बहूनि चात्र लिङ्गगरुडस्कन्दमार्कण्डेयाऽग्निपुराणादीनां वचनानि प्रमाणानि विस्तरभयान्नोल्लिख्यन्ते। यथा चैतद् दर्शनं वेदान्तेन न विरुद्ध्यते तथा नाऽपरोक्षं बहुज्ञानामित्यलं तदुपन्यासेन।

तदेतद् विज्ञानजीवन्मुक्त्याद्यौपयिकं योगं प्रशशासादिविद्वान् प्रथमशरीरी हिरण्यगर्भो भगवान्। तमेव च साङ्गोपाङ्गं योगमनुशासतीं चतुष्पादीं प्रणिनाय भगवान् परमपुरुषार्थाऽभ्यर्थिजनसार्थं कृतार्थयितुमर्हीनः पतञ्जलिः, यत्र खलु प्रथमे पादे मृदितकषायत्वेनैकाग्रचित्तानामुत्तमाऽधिकारिणां क्रियायोगादिसकलाङ्गनैरपेक्ष्येणाऽभ्यासवैराग्यमात्रसाध्यौ सम्प्रज्ञाताऽसंप्रज्ञातयोगावुपदर्शितौ। द्वितीये पादे क्षिप्तचित्तानां मन्दाऽधिकारिणां तपः स्वाध्यायादिक्रियायोगः, विक्षिप्तचित्तानां मध्यमाऽधिकारिणां यमाद्यष्टाङ्गयोगश्च प्रदर्शितः। तृतीये पादे सम्प्रज्ञातसमाध्यन्तरङ्गसाधनधारणादित्रिकनिरूपणपुरस्सरं संयमजा योगसंसिद्धिसूचिका विभूतयः प्रदर्शिताः। तुरीये च पादे कैवल्ययोग्यं चित्तं निर्धारयितुं पञ्चविधसिद्धिमुपन्यस्य क्षणिकविज्ञानातिरिक्तमात्मानं व्युत्पाद्य कैवल्यमुपदर्शितं तस्याश्चैतस्याश्चतुष्पाद्या अतिसङ्क्षिप्ततयाऽनतिप्रौढधियो जनानुपचिकीर्षुर्भगवान्

वासवीनन्दनः कृष्णद्वैपायनो व्यासो भाष्यं व्याख्यायाम्बभूव । तदेतदपि क्षणिकपरमाणुपुञ्जनिरासैकभविकस्फोटादिनिगूढग्रन्थग्रन्थिसंघट्टिततया दुरवबोधमालक्ष्य जाताऽनुकम्पो निखिलदर्शनासाधारणधिषणः श्रीवाचस्पतिमिश्रस्तत्त्ववैशारद्याख्यया व्याख्यया समुपबबृंहे। यद्यपि सांख्यप्रवचनभाष्यकारेण विज्ञानभिक्षुणाऽप्येतद् योगवार्त्तिकाख्यया व्याख्यया भाष्यं समभूषि, तथाऽपि तदाऽऽहोपुरुषिकामात्रम्, अर्थतो ग्रन्थतश्च वाचस्पत्यस्यैव तत्रोपनिबद्धत्वात् । सङ्क्षिप्तस्पष्टबह्वर्थत्वरूपव्याख्यालक्षणाऽनाक्रान्तत्वेनाऽप्रासङ्गिकबहुकथागुम्फिततया चाऽनुपयुक्तत्वेन मुमुक्षुभिरनुपादेयत्वाच्च। यच्च तेन क्वचित् क्वचिद् वाचस्पत्यं प्रदूष्य व्याख्यान्तरमनुसृतं, तत्तु मया, २२, २४, २८, ३४, ३२, ३७, ४६, ४८, ४९, ५२, इत्यादिपृष्ठेषु खण्डितमिति तत एव निरीक्षणीयम् । यथा चाऽयं वाक्यकारद्रविड़ाचार्यबोधायनाचार्यशङ्कराचार्यभास्कराचार्यरामानुजाचार्यवल्लभाचार्यादिदर्शनबहिष्कृतस्तत्सर्वं सांख्यतत्त्वसमीक्षायामेतन्मतखण्डनाऽवसरे व्युत्पादितं मयेत्यलमत्राम्रेडितेन ।

परन्त्विदमत्राऽवसेयं—यथा चतुष्टयसाधनसम्पन्नोऽधिकारी प्रथमं सृष्टिवाक्यादिसमन्वयालोचनेन ब्रह्मैव जगत उपादानं मृदिव घटस्येत्यवगच्छतु, तदनन्तरं च, नेति नेतीत्यादिनिषेधवाक्यतात्पर्य्यालोचनेन सृष्टिवाक्यार्थो विवर्त्त इत्यवगच्छतु। यत्र यदवगतं तत्रैव तन्निषेधे तस्य मिथ्यात्वनिश्चयेन परिणामबुद्धिं विना प्रपञ्चस्य विवर्त्तत्वनिश्चयाऽसम्भवाद् ब्रह्मणि प्रपञ्चासञ्जकपरिणामधीरपेक्षितेत्याशयेन ब्रह्मसूत्रकृता 'भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवद्' २ अ० १ पा० १३ सू० । इत्यादिना भेदाऽभेदजीवनः परिणामवाद आश्रितो, न तु परमार्थतः। तदनन्यत्वमित्यारम्भणाद्यधिकरणन्यायेन विवर्त्तवादस्यैवाग्रे सिद्धान्तितत्वात् । एवमत्राऽपि दर्शने प्रकृत्यापूराद्यपेक्षणात् परिणामवाद अभ्युपगतो, न तु वस्तुतः। तथा चाऽऽह योगशास्त्रं व्युत्पादयिता भगवान् वार्षगण्याऽऽचार्य्यः—"गुणानां परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथं प्राप्तं तन्मायैव सुतुच्छकम्" इति। एवं जीवभेदाऽभ्युपगमोऽपि व्यावहारिकीं दृष्टिमवलम्ब्यैव, न तत्त्वतोऽधिकमन्यत्र निरूपितम् ।

तदिदं दर्शनं निखिलल्ब्धवर्णमानोमोदकमप्यमुद्रिततत्वेन बहुपठन-

पाठनाऽगोचरीभूतम् आलक्ष्य मुद्रितत्वेऽपि लेखकशोधकादिप्रमादोद्रेकेण विपरीतार्थज्ञानजननपर्यवसानत्वेन दुर्दशमुद्रितप्रायश्चावगत्य मुद्रणमन्तरा पुस्तकवैपुल्यं चाऽनुपलभ्य निखिलदर्शनरसिकधौरेयैः (१) श्रीयुत-रासविहारिशर्ममुखोपाध्यायमहाशयैर्यथा चैतत् सुसंस्कृतं विषमस्थलविशेषे विशदीकृतं च प्रचुरं प्रचुरेत् तथा चेद् भवद्भिः परिश्रमणीयं तदात्मानं कृतोपकारम्मन्य इत्येवं विज्ञापनयोत्तेजितेन मयैतच्छोधने विषमस्थलविशेषे विशदीकरणे च प्रावर्त्ति,निर्वाहितं च तत्तथैव भगवता। परञ्च कालस्याल्प-तया नैसर्गिकमतिविभ्रान्तितया च यान्यत्र स्खलतानि कतिपयानि क्षाम्यन्तु तानि दयोदन्वन्तः सन्तः, सफलयन्तु चैतदवलोकयन्तो याथातथ्येन वैया-सिकभाष्यार्थमवगच्छन्तश्च सन्तो मामकीनं परिश्रमम्, प्रसीदतु चाऽनेन परिश्रमेण भगवानन्तर्य्यामीति मुहुरभ्यर्थयते कश्चिदुदासीनो बालरामः ॥

एतद् ग्रन्थ समादरणे तु—

नाऽभ्यर्थ्या इह सन्तः स्वयम्प्रवृत्ता न चेतरे शक्यः।

मत्सरपित्तनिबन्धनमाचिकित्स्यमरोचकं येषाम्, इति भामतीस्थं पद्यमेव दृढमुपोद्बलकमित्यलं स्वोक्तिन्यासेनेति शम्।

---

१ यद्यपीमे बहु स्तुत्यास्तथाऽपि, न मनुष्यस्तुतिं कुर्य्याद्, निःस्तुतिर्निर्नम-स्कार इत्यादिशास्त्रमनुरुध्य नश्लाघ्यन्ते, मा स्म भूत्सम्प्रदायविरुद्धाचरणम्।

## अनुभूमिका ।

---

श्रीबालरामरचिताऽतुलटिप्पणीद्ध्यं
श्रीव्यासभाष्यमनुवाक्पतिमिश्रटीकम् ॥
श्रीयोगशास्त्रमखिलार्थकरं करे मे
श्रीदेशिकैः करुणयार्पितमेकरत्नम् ॥ १ ॥
बाबूरासविहारिणो गुरुपदाम्भोजैकनिष्ठात्मनो-
ऽत्यन्तप्रार्थनया मया द्रुततरं मुद्रापितं यन्मुदा
तच्छ्रीत्यागिनि बालराममुगुरौ कैवल्यमुक्तिं गते
तन्नाम्नापरितोऽर्पितं तत इदं भूयोऽभवद् दुर्लभम् ॥ २ ॥
बाबूश्रीहरिदासेन श्रीदेशिकशिरोमणेः ॥
भक्त्या परमयाऽऽरब्धं पुनस्तन्मुद्रणं मुदा ॥ ३ ॥
अपूर्ण एव तत्कार्ये हरिदासो दिवं ययौ ॥
सनयैस्तनयैस्तस्य प्रेम्णा मुद्रापितं च तत् ॥ ४ ॥
परं स्थलेषु बहुषु प्रायो दूषणदर्शनात् ॥
मदीयं हृदयं दूरं दूयतेऽनुदिनोदयम् ॥ ५ ॥
तदावृत्तौ तृतीयायामदूषणकुदर्शनम् ॥
कर्तास्मीव जनस्थानं बालरामप्रसादतः ॥ ६ ॥
श्रीसद्गुरुदयालोकलहर्येकावलम्बिनः ॥
इयमात्मस्वरूपस्य प्रार्थना प्रतिसज्जनम् ॥ ७ ॥

नि० आत्मस्वरूपोदासीनः ॥

# पातञ्जलदर्शने समाधिपादः प्रथमः ॥ १ ॥

ॐ

भा० यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोऽनेकधाऽनुग्रहाय
प्रक्षीणक्लेशराशिर्विषमविषधरोऽनेकवक्त्रः सुभोगी ।
सर्वज्ञानप्रसूतिर्भुजगपरिकरः प्रीतये यस्य नित्यं
देवोऽहीशः स वोऽव्यात् सितविमलतनुर्योगदो योगयुक्तः[१] १ ।

टि० कलधौतायते मुक्तास्फोटो वा जगदात्मना
विवरीवृत्यते तस्मै कस्मै चिन्महसे नमः ॥ १ ॥
कलिकलुषितस्वान्तानुद्धारोपदिश्य, श्रुतिनुतमतनिष्ठां सामनिष्ठामरिष्टम् ।
अकुरुत कटु मिष्टं नानको योगिवर्य्यः, स विजयत इहेशो वेदिवंशावतंसः ॥ २ ॥
आधारे सिन्धुपत्रे वशषसमथ लिङ्गे बकारादिलान्तान् ।
षट्पत्रे डादिफान्तान् दशदलसहिते नाभिदेशेऽनुचित्ते ।
पद्मे मार्त्तण्डपर्णे कमुखठचरगान् कण्ठदेशेऽथ कूर्चे ।
पञ्चैकाष्टद्विपत्रे नयनदलयुते भावयेऽहं क्षमादीन् ॥ ३ ॥
भाष्यं विस्पष्टयेऽस्पष्टं वाचस्पत्यं तथा दृढम् ।
योगवार्त्तिककारं च लघयिष्ये सदुक्तितः ॥ ४ ॥

निरन्तरायाऽऽरिप्सितसमाप्तये योगाचार्य्यमनन्तं प्रणिदधत्, शिष्याणां शास्त्रग्रहण-धारणादिप्रतिबन्धकप्रत्यूहव्यूहशमनं च प्रार्थयन् ' मङ्गलाचरणं शिष्टाचारात् फलदर्शना-च्छ्रुतितश्च" अ० ५ । सू० १ । इति कपिलस्मृत्यनुमितश्रुतिबोधितकर्त्तव्यताकं मङ्गलमुप-निबध्नाति—"यस्त्यक्त्वे"ति । योऽनेकवक्त्रोऽहीशः स्वस्याद्यं रूपं=शेषाख्यं त्यक्त्वा भुव्यवतीर्य्य जगतोऽनेकधाऽनुग्रहाय = शब्दयोगभेषजाऽनुशासनप्रणयनेन वाङ्मनःकायमलक्षालनाय प्रभवति = ईष्टे स योगयुक्तो भगवत्पतञ्जलिः, वो = युष्मान् शिष्यान् अव्यात् = पालयेत् शास्त्रग्रहणधारणादिप्रतिबन्धकप्रत्यूहं निवारयत्विति यावद् इति श्लोकार्थः । अनेकधा बलरामादिरूपेण प्रभवति = आविर्भवतीत्यर्थ इति विज्ञानभिक्षुर्व्याचष्ट ।

(१) योगयुक्त इत्यनेनाऽसम्प्रज्ञातसमाधिनिष्ठत्वमुक्तम् । तथाचोक्तं स्कन्दपुराणे—"वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि । एकीकृत्य विमुच्येत योगयुक्तः स उच्यते" इति

टी० नमामि जगदुत्पत्तिहेतवे वृषकेतवे ।
क्लेशकर्मविपाकादिरहिताय हिताय[१] च ॥ १ ॥
नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते[२] ।
संक्षिप्तस्पष्टबह्वर्थो भाष्ये व्याख्या विधास्यते ॥ २ ॥

---

टि० यद्यपि वाचस्पतिमिश्रैरविवृतत्वान्नेदं पद्यं कृष्णद्वैपायनाऽऽननोद्गलितमिति संशीतिरुन्मिषति, तथाऽपि प्राचीनपुस्तकेषु सर्वत्रोपलम्भाद्, विज्ञानभिक्षुणा व्याख्यातत्वाच्च, निमीलनीया सा ।

(१) क्लेशकर्मविपाकादिरहितत्वेऽपि यज्जगदुत्पत्तिहेतुत्वं तत् कारुण्यनिबन्धनमेवेत्याह "हिताय" इति ।

(२) 'वेदव्यासेन भाषित' इत्यनेन 'परमर्षिप्रणीतत्वेन सूपादेयमिदं भाष्यमिति ध्वनितम् । ये त्वाहुः "एतेन योगः प्रत्युक्तः" अ० २ । सू० ३ । इति सूत्रेण भगवता व्यासेन योगस्य प्रत्याख्यातत्वान्नेदं वैयासिकं भाष्यमिति । तन्न स्थाने । तत्सूत्रस्य योगप्रत्याऽऽख्याने तात्पर्य्याऽभावात् । तथा हि, मा नाम श्रुतिविरोधात् कापिलस्मृतेर्जगदुपादानस्वतन्त्रप्रधानादिसद्भावो निश्चायि, योगशास्त्रात्तु तत्सद्भावो निश्चेष्यते । यतो बहुलं ह्युपनिषत्सु "तां योगमिति मन्यन्ते" "त्रिरुन्नतं स्थाप्य समं शरीरमि"त्यादिना योगः प्रतिपाद्यते । अतः प्रमाणभूताद् योगशास्त्रात् प्रधानादिप्रतीतेर्न प्रधानस्याऽशब्दत्वमिति प्राप्ते, भवेदेतदेवं यदि नाम प्रधानादिसत्तापरं योगशास्त्रं भवेत् । तच्च न तथा, किन्तु योगस्वरूप-तत्साधन-तदवान्तरफलविभूति-तत्परमफलकैवल्य-व्युत्पादनपरम् । तच्च किंचिन्निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतं, न तु तद्विवक्षितमतो योगशास्त्रादपि न प्रधानकारणवादस्य प्रामाण्यम् । तस्य तत्र तात्पर्य्याऽभावाद् इति सिद्धान्त इति सूत्राशयः । एतेन 'यदि प्रधानादावप्रमाणं योगशास्त्रं, तर्हि यमनियमादावपि तदप्रमाणम् । अर्द्धजरतीयत्वाऽयोगादिति निर्दलितम्, । अविषयेऽप्रामाण्येऽपि विषये तदभावात् । न हि चक्षू रसादावप्रमाणमिति रूपेऽपि न प्रमाणमिति साम्प्रतम् । स्पष्टं चैतदेतत्सूत्रे "नाऽनेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्वथा प्रामाण्यं निराक्रियते" इत्यादिना भामतीनिबन्ध इति तत एव कणेहत्य निरीक्ष्यतामित्यलम् ॥ नारायणतीर्थैरप्येतदभिहितं "स्वातन्त्र्यसत्यत्वमुखं प्रधाने सत्यं च चिद्भेदगतं च वाक्यैः । व्यासो निराचष्ट न भावनाख्यं योगं स्वयं निर्मितब्रह्मसूत्रैः ॥ अपि चाऽऽत्मप्रदं योगं व्याकरोन्मतिमान् स्वयम् । भाष्यादिषु ततस्तत्र आचार्य्यप्रमुखैर्मतः" । माधवाचार्य्यैरपि पराशरस्मृतिव्याख्यानादिषु ग्रन्थेषु भाष्यस्य वैयासिकत्वमुक्तमिति नाऽत्र व्यामोहाऽवकाशः ।

## सू० अथ योगाऽनुशासनम् ॥ १ ॥

भा० अथ इत्ययमधिकाराऽर्थः[१] ।

---

टी० इह हि भगवान् पतञ्जलिः प्रारिप्सितस्य शास्त्रस्य सङ्क्षेपतस्तात्पर्य्यार्थं प्रेक्षावत्प्रवृत्त्यङ्गं[२] श्रोतुश्च सुखाऽवबोधाऽर्थमाचिख्यासुरिदं सूत्रं रचयाञ्चकार—

"अथ योगाऽनुशासनम्" ॥ १ ॥ तत्र प्रथमाऽवयवम् अथशब्दं व्याचष्टे "अथेत्ययमधिकारार्थ" इति । "अथैष ज्योतिरितिवद्",[३] न त्वाऽऽनन्तर्य्याऽर्थः । अनुशासनमिति[४] हि शास्त्रमाहाऽनुशिष्यतेऽनेनेति व्युत्पत्त्या । नचाऽस्य शमाद्यनन्तरम्प्रवृत्तिरपि तु तत्त्वज्ञानचिख्यापयिषाऽनन्तरं, जिज्ञासाज्ञानयोस्तु स्याद्, यथाऽऽम्नायते "तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येद्"

---

टि० (१) अधिकारः-प्रस्ताव-आरम्भ इति नार्थान्तरम् । प्रस्तूयत इत्यध्याहारे तात्पर्य्यग्राहकमथ-पदम् । वाचकत्वपक्षे त्वथ—शब्द एवाऽऽरम्यत इत्यर्थवाचक इति भावः ।

(२) हेयोपादेयविवेक्त्री शेमुषी प्रेक्षा, तद्वन्तः प्रेक्षावन्तस्तेषां प्रवृत्तेः, अङ्गम्=उपोद्घलकम्, अधिकारिसंबन्धविषयप्रयोजनाऽभिधानरूपं तदाऽऽचिख्यासुरित्यर्थः । तत्र योगनिर्वाणयोः शास्त्रयोगयोश्च साध्यसाधनभावः, प्रतिपाद्यप्रतिपादकभावश्च संबन्धः । कैवल्यं च परमप्रयोजनम्, अवान्तरफलं च योगव्युत्पादनम् । तज्जिज्ञासुश्चाऽधिकारी । विषयश्च व्युत्पाद्यतया ससाधनः सफलो योग इति बोध्यम् ।

(३) यथा, अथैष ज्योतिरित्यत्र क्रतुविशेषप्रारम्भार्थकोऽथशब्दस्तथा प्रकृतेऽपि योगशास्त्रारम्भार्थको, न तु 'अथातो ब्रह्मजिज्ञासे' तिवदानन्तर्य्यार्थक इत्यर्थः ।

(४) आनन्तर्य्यार्थत्वव्युदासायाऽनुशासनशब्दं विगृह्य शास्त्रपरत्वं समर्पयति "अनुशासनमिति हि" इति । अनुशिष्यते व्युत्पाद्यते लक्षणभेदोपायोपेयसहितो योगोऽनेनेति योगेनाऽनुशासनपदं शास्त्रवाचकमित्यर्थः । ननु भवतु तथा, तथाऽपि कथमानन्तर्य्यार्थत्वव्युदास इत्यत आह "नचाऽस्येति" अस्य=शास्त्रस्य । अत्रेदमाकूतम्—अत्राऽऽनन्तर्य्यमथ-शब्दार्थ इति वदन् पृष्टो व्याचष्टां किं यतः कुतश्चित् पूर्ववृत्तादानन्तर्य्यम् ? उत ब्रह्मजिज्ञासाया इव शमाद्याऽऽनन्तर्य्यमिति ? । नाद्योऽनुपयुक्तत्वाद्, अभिधानमन्तराऽपि तस्य लाभाच्च । अवश्यं हि जनः किञ्चित् कृत्वा किञ्चिदनुतिष्ठति, "नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृद्" इत्युक्तेः । न द्वितीयः । योगाऽनुष्ठानस्य शमाद्यनन्तरं प्रवृत्तिसंभवेऽपि योगशास्त्रस्य शमाद्याऽऽनन्तर्य्यनियमाऽभावात् । प्रतिपाद्यतत्त्वज्ञानप्रतिपिपादयिषाऽनन्तरं

टी० इत्यादि। शिष्यप्रश्नतपश्चरणरसायनाद्युपयोगानन्तर्य्यस्य च सम्भवेऽपि नाभिधानं, शिष्यप्रतीति(*) प्रवृत्त्योरनुपयोगात्। प्रामाणिकत्वे† योगानुशासनस्य तदभावे (१)ऽप्युपेयत्वाद्, अप्रामाणिकत्वे च तद्भावेऽपि हेयत्वात्। एतेन(२) तत्त्वज्ञानचिख्यापयिषयोरानन्तर्य्याऽभिधानं परास्तम्। अधिकारार्थत्वे तु शास्त्रेणाऽधिक्रियमाणस्य(३) योगस्याऽभिधानात् सकलशास्त्रतात्पर्य्यार्थव्याख्यानेन शिष्यः सुखेनैव बोधितश्च प्रवर्त्तितश्च भवतीति। निःश्रेयसस्य हेतुः समाधिरिति हि श्रुतिस्मृतीतिहासपुराणेषु प्रासिद्धः(४)। ननु किं सर्वसन्दर्भगतोऽथशब्दोऽधिकारार्थस्तथा सति "अथातो ब्रह्मजिज्ञासा" इत्यादावपि प्रसङ्ग इत्यत आह "अयम्" इति। ननु "हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातन" इति। योगियाज्ञवल्क्यस्मृतेः कथं "पतञ्जलेर्योगशास्त्रवक्तृत्वम्(५) इत्याशङ्क्य सूत्र कारेणोक्तम्(६)—"अनुशासनम्" इति।

* प्रतिपत्तीति पाठान्तरम्।

† कस्य तर्हि जिज्ञासुप्रवृत्तावुपयोग इति चेदन्वयव्यतिरेकाभ्यां प्रामाणिकत्वस्यैवेत्याह "प्रामाणिकत्वे" इति।

टि० प्रवृत्तिसंभवेऽपि तस्यैतेनेत्यग्रिमग्रन्थेनाऽन्यथासिद्धत्वाऽऽख्यानाद् इति। 'स्याद्' इत्यस्याग्रे शमाद्यनन्तरं प्रवृत्तिरिति शेषो बोध्यः। तत् कुतः?, आम्नातत्वादित्याह "यथाऽऽम्नायत" इति।

(१) शिष्यप्रश्नाद्यानन्तर्य्याभावेऽपीत्यर्थः।

(२) एतेन=प्रामाणिकत्वस्यैव शिष्यप्रवृत्तावुपयुक्तत्वेनेत्यर्थः।

(३)प्रस्तूयमानस्येत्यर्थः। क्वचित्तु, अधिक्रियमाणस्य=प्रस्तूयमानस्येत्येवं टीकास्थ एव पाठो दृश्यते।

(४) ननु प्रामाणिकत्वाभावे शिष्यः सुखेनैव कथं प्रवर्त्तितो भवेदित्यत आह, "निःश्रेयसस्य हेतुः समाधिरि" ति। "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति" "तत्कारणं साङ्ख्ययोगाऽभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः" श्रु०। "स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा" "अयन्तु परमो धर्मो यद् योगेनात्मदर्शनम्" स्मृ०। "नास्ति योगसमं बलम्" "तत्र योगी निरालम्बे निरातङ्के निरामये। षडङ्गयोगविधिना परे ब्रह्मणि लीयते" पु० इत्यादि श्रुतिस्मृतीतिहासपुराणेषु योगस्य निःश्रेयसहेतुत्वं प्रसिद्धम्। तथा च न प्रामाणिकत्वाभाव इत्यर्थः।

(५) योगशास्त्रकृत्त्वमिति पाठान्तरम्।

(६) क्वचित्तु सूत्रकारेणाऽनुशासनमित्युक्तमिति पाठव्यत्ययः प्रतीयते।

भा० योगानुशासनं शास्त्रमधिकृतं वेदितव्यम् । योगःसमाधिः[१]

टी० शिष्टस्य शासनमनुशासनमित्यर्थः । यदाऽयमथशब्दोऽधिकारार्थस्तदैष वाक्यार्थः संपद्यत इत्याह—

"योगानुशासनं शास्त्रमधिकृतम्" इति । ननु व्युत्पाद्यमानतया योगोऽत्राधिकृतो, न तु शास्त्रमित्यत आह "वेदितव्यम्" इति । सत्यं व्युत्पाद्यमानतया योगः प्रस्तुतः[२] । स तु तद्विषयेण शास्त्रेण करणेन व्युत्पाद्यः । करणगोचरश्च व्युत्पादकस्य व्यापारो, न कर्मगोचर इति कर्तृव्यापारवि-

टि० (१) यद्यपि "संयोगो योग इत्युक्तो जीवात्मपरमात्मनोः" या० "परेण ब्रह्मणा सार्धमेकत्वं यन्नृपात्मनः । स एव योगो विख्यातः किमन्यद् योगलक्षणम्" महाभा० "जलसैन्धवयोः साम्यं यथा भवति योगतः । तथात्ममनसोरैक्यं समाधिरिह भण्यते" स्कन्द० इत्यादि स्मृतिभ्यः प्रत्यगात्मपरात्मनोरैक्यं योगः साध्यः, आत्ममनसोरैक्यं समाधिः साधनम्, इति साध्यसाधनभावेन योगसमाध्योर्भेदः प्रतीयते; तथापि "आयुर्वै घृतम्" "लाङ्गलं जीवनम्" इत्यादिवच्छुद्धसारोपलक्षणयोपकार्य्योपकारकयोरभेदविवक्षया "योगः समाधिरिति वैयासिकं विवरणं समर्थनीयम् । एतेन समाधेर्योगाङ्गत्वेन सूत्रणादङ्गाङ्गिभावस्य च दर्शपूर्णमासप्रयाजादौ भिन्नायतनत्वेन दृष्टत्वाद् योगशब्दार्थः समाधिरिति न साम्प्रतमितिं व्युदस्तम् ॥ वस्तुतस्तु समाधीयत एकाग्रीक्रियते चित्तमनेनेति करणसाधनः समाधिशब्दो योगाङ्गवाचकः । समाधीयन्ते=निरुद्ध्यन्ते चित्तवृत्तयो यस्मिन्नवस्थाविशेष इत्यधिकरणसाधनो योगार्थकः । अत एव योगमुपक्रम्य धर्ममेघसमाधिनोपसंहृत्य कैवल्यं फलमुक्तं सूत्रकृता । यथा च योगसमाध्योरेकार्थवाचकत्वं तथा सप्रमाणं विस्तरेण भूमिकायां निरूपितं मयेति तत एव निरीक्ष्यतामित्यलमत्राम्रेडितेन ।

(२) प्रस्तुत इत्यस्याऽग्रे, न तु शास्त्रमिति शेषः । तथाच योग एव प्राधान्येन व्युत्पाद्यमानतया प्रस्तुतो, न तु शास्त्रमिति यदात्थ तत् सत्यम् । परन्तु नासौ प्रवक्तृव्यापारगोचरः, किन्तर्हि वक्त्राऽऽरभ्यमाणशास्त्रव्यापारविषयोऽसौ, प्रवक्त्रा शास्त्रमारभ्यते, आरभ्यमाणेन च तेन योगो व्युत्पाद्यत इति यावत् । तदेवाऽऽह—स त्वित्यादिना । यथा वर्द्धकिव्यापारभूतं कुठारोद्यमननिपातनादिकर्म करणीभूतकुठारगोचरं, न तु कर्मीभूतद्रुमगोचरं, तथाऽत्राऽपि प्रवक्तृव्यापारः शासनकरणीभूतशास्त्रगोचरो, न प्रतिपादनकर्मीभूतयोगगोचरः । एवञ्च भगवत्पतञ्जलेः प्रवचनव्यापारापेक्षया योगविषयस्य शास्त्रस्याधिकृतता शास्त्रस्याऽभिधानव्यापारापेक्षया तु योगस्याऽधिकृतत्वमिति भावः ।

भा० स च सार्वभौमश्चित्तस्य धर्मः[१] ।

टी० वक्षया योगविषयस्य शास्त्रस्याऽधिकृतत्वं वेदितव्यम् शास्त्रव्यापारगोचरतया तु योग एवाधिकृत इति भावः ॥ अधिकारार्थस्य चाऽथशब्दस्याऽन्यार्थं नीयमानोदकुम्भदर्शनमिव श्रवणं मङ्गलायोपकल्पत इति मन्तव्यम् ॥ शब्दसन्देहनिमित्तमर्थसन्देहमपनयति "योगः समाधिः" इति। "युज समाधौ" इत्यस्माद् व्युत्पन्नः समाध्यर्थो, न तु "युजिर् योग" इत्यस्मात् संयोगार्थ इत्यर्थः ॥

ननु समाधिरपि वक्ष्यमाणस्याऽङ्गिनो योगस्याऽङ्गं, न चाऽङ्गमेवाऽङ्गीत्यत आह "स च" इति। चस्त्वर्थोऽङ्गादङ्गिनं भिनत्ति। सार्वभौमः=भूमयोऽवस्था वक्ष्यमाणा, मधुमती-मधुप्रतीका-विशोका-संस्कारशेषास्ताश्चित्तस्य तासु सर्वासु विदितः सार्वभौमश्चित्तनिरोधलक्षणो योगः तदङ्गन्तु समाधिर्नैवम्भूतः। व्युत्पत्तिनिमित्तमात्राऽभिधानं चैतद्। "योगः समाधिः" इति, अङ्गाङ्गिनोरभेदविवक्षामात्रेण। प्रवृत्तिनिमित्तं तु योगशब्दस्य चित्तवृत्तिनिरोध एवेति परमार्थः। वृत्तयो ज्ञानान्यात्माश्रयाण्यतस्तन्निरोधोऽप्या*त्माश्रय एवेति ये पश्यन्ति तन्निरासायाऽऽह - "चित्तस्य धर्म" इति। चित्तशब्देनान्तःकरणं बुद्धिमुपलक्षयति। न हि कूटस्थनित्या चितिशक्तिरपरिणामिनी ज्ञानधर्मा भवितुमर्हति, बुद्धिस्तु भवेदिति भावः[२]। स्यादेतत्, सार्वभौमश्चेद् योगो हन्त भोः क्षिप्त-

* प्रागभावप्रध्वंसयोः प्रतियोगिसमानाश्रयत्वनियमाद्।

टि० (१) धर्म इत्यस्याग्रे, तथा च क्षिप्तादिष्वतिप्रसङ्ग इति शेषयित्वा, तथाऽपीत्यध्याहृत्य, क्षिणोति च क्लेशानित्यग्रिमभाष्येण सम्बद्ध्य व्याकरणीयम्। तथा च यद्यपि योगः समाधिः, स एव च चित्तवृत्तिनिरोधः, स च सार्वभौमः सर्वासु क्षिप्तादिभूमिषु भव एवं च क्षिप्तादिष्वतिप्रसङ्गस्तत्रापि हि यत्किञ्चिद्वृत्तिनिरोधसत्त्वात्, तथाऽपि यो निरोधः क्लेशादीन् क्षिणोति स एव योगः, स च संप्रज्ञाताऽसम्प्रज्ञातभेदेन द्विविध इति नातिप्रसङ्ग इत्यर्थः।

(२) "केवलो निर्गुणश्च" इति श्रुतेः। "ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन। ज्ञानस्वरूप एवात्मा नित्यः पूर्णः सदाशिव" इति स्मृतेः। "निर्गुणत्वान्न चिद्धर्मा" इति साङ्ख्यसूत्राच्च न चितिशक्तिर्ज्ञानधर्मेत्यर्थः। "धी ह्री भीरित्येतत्सर्वं मन एव" इति श्रुतेः। "अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्य्यम्" इतीश्वरकृष्णोक्तेः। "तत्कार्य्यं धर्मादिरि"ति साङ्ख्यसूत्राच्च बुद्धिधर्म एव ज्ञानमिति भावः।

भा० क्षिप्तं मूढं, विक्षिप्तम्, एकाग्रं, निरुद्धम् इति चित्तभूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः * समाधिर्न योगपक्षे वर्त्तते† ।

टी० मूढविक्षिप्ता अपि चित्तभूमयः, अस्ति च परस्परापेक्षया वृत्तिनिरोधोऽप्यास्विति तत्राऽपि योगप्रसङ्ग इत्याशङ्क्य हेयोपादेयभूमीरुपन्यस्यति । "क्षिप्तम्" इत्यादि । क्षिप्तं(१)=सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणमत्यन्तमस्थिरम्। मूढं(२) तु तमःसमुद्रेकान्निद्रावृत्तिमत्। विक्षिप्तं(३) क्षिप्ताद्विशिष्टम्। विशेषो ऽस्थेमबहुलस्य(४)कादाचित्कः स्थेमा। सा चाऽस्याऽस्थेमबहुलता सांसिद्धिकी(५) वा, वक्ष्यमाणव्याधिस्त्यानाद्यन्तरायजनिता वा। एकाग्रम् = एकतानम्। निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धम् । तत्र क्षिप्तमूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्य्येणाऽपि निःश्रेयसहेतुभावाऽभावात् तदुपघातकत्वाच्च योगपक्षाद् दूरोत्सारितत्वमिति न तयोर्योगत्वं निषिद्धम्। विक्षिप्तस्य तु कादाचित्कसद्भूतविषयस्थेमशालिनः संभाव्येत योगत्वमिति निषेधति । "तत्र" इति । विक्षिप्ते चेतसि समाधिः= कादाचित्कः सद्भूतविषयस्य चित्तस्य स्थेमा न योगपक्षे वर्त्तते। कस्माद्,

* बहुलविक्षेपशेषीभूतः ।

† किन्तु तीव्रवातविक्षिप्तप्रदीपवज्झटित्येव नश्यतीति शेषो वर्त्तत इत्यस्याग्रे बोध्यः

टि० (१)यथा दैत्यदानवादीनां चित्तं, यथा वा द्रविणमदविभ्रान्तानां विषयिणां पुरुषाणां तत् क्षिप्तमित्यर्थः ।

(२) यादृशं रक्षःपिशाचादीनां चित्तं, यादृशं वा मादकद्रव्योन्मत्तानां पामराणां नराणां चित्तं तादृशं मूढमित्यर्थः ।

(३) देवानां प्रथमभूमिकाऽऽरूढानां जिज्ञासूनां च चित्तं विक्षिप्तमित्यर्थः ।

(४) अस्थैर्य्यप्रवणस्य विपुलचाञ्चल्यस्येति वा ।

(५) चित्तस्य चाञ्चल्यविपुलता स्वाभाविकीत्यर्थः ।

भा० यस्त्वेकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति,(१) क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति,(२) निरोधमभिमुखं करोति,(३) स सम्प्रज्ञातो(४) योग इत्याऽऽख्यायते।

टी० यतस्तद्विपक्षविक्षेपोपसर्जनीभूतः। विपक्षवर्गान्तर्गतस्य स्वरूपमेव दुर्लभं, प्रागेव(५) कार्य्यकरणम्। न खलु(६) दहनाऽन्तर्गतं बीजं त्रिचतुःक्षणावस्थितमुप्तमप्यङ्कुराय कल्पत इति भावः। यदि विक्षेपोपसर्जनीभूतः समाधिर्न योगः कस्तर्हीत्यत आह "यस्त्वेकाग्रे चेतसि" इति, "भूतम्" इति समारोपितमर्थं निवर्त्तयति। निद्रावृत्तिरपि स्वालम्बने तमसि भूते भवत्येकाग्रेत्यत उक्तं "सद्" इति। शोभनं नितान्ताऽऽविर्भूतसत्त्वम्। तमःसमुद्रेकस्त्वशोभनस्तस्य क्लेशहेतुत्वादिति। द्योतनं हि तत्त्वज्ञानमागमाद्वाऽनुमानाद्वा भवदपि परोक्षरूपतया न साक्षात्कारवतीमविद्यामुच्छिनत्ति, द्विचन्द्रदिङ्मोहादिष्वनुच्छेदकत्वादत आह "प्रे" ति। प्र=शब्दो हि प्रकर्षं द्योतयन् साक्षात्कारं सूचयति। अविद्यामूलत्वादस्मितादीनां क्लेशानां, विद्यायाश्चाऽविद्योच्छेदरूपत्वाद्विद्योदये चाविद्यादिक्लेशसमुच्छेदो विरोधित्वात् कारणविनाशाच्चेत्याह। "क्षिणोति च" इति। अत एव कर्मरूपाणि बन्धनानि श्लथयति। कर्म चाऽत्रापूर्वमभिमतं, कार्ये कारणोपचारात्। श्लथयति= स्वकार्य्यादवसादयति वक्ष्यति हि "सति मूले तद्विपाक(७)" इति। किञ्च, निरोधमभिमुखं करोति = अभिमुखीकरोति।

टि० (१) सद्भूतं=परमार्थभूतम्, अर्थं=ध्येयं वस्तु, प्रद्योतयति = साक्षात्कारयतीत्यर्थः।

(२) अविवेकं द्वारीकृत्य यानि बन्धकारणानि धर्माऽधर्मरूपाणि कर्माणि तानि श्लथयति = अदृष्टोत्पादनाऽक्षमाणि करोतीत्यर्थः।

(३) असम्प्रज्ञातयोगं प्रत्यासन्नं करोतीत्यर्थः।

(४) सम्यक् प्रज्ञायते = साक्षात्क्रियते ध्येयं यस्मिन्निरोधविशेषे स सम्प्रज्ञातः।

(५) प्रागेव = दूरत एवेत्यर्थः।

(६) विरोधिमध्यपातितस्य कार्य्यकरणाऽसामर्थ्ये दृष्टान्तमाह। "न खलु" इति।

(७) जात्यायुर्भोगा इति सूत्रशेषः। क्लेशरूपे कर्माशयस्य मूले सत्येव कर्माशयस्य फलं भवतीति च तदर्थः।

भा० स च वितर्कानुगतो, विचारानुगत, आनन्दानुगतोऽस्मिताऽनुगत इत्युपरिष्टात्प्रवेदयिष्यामः। सर्ववृत्तिनिरोधे त्वसम्प्रज्ञातः समाधिः ॥१॥ तस्य लक्षणाऽभिधित्सयेदं सूत्रं प्रववृते

सू० योगश्चित्तवृत्तिनिरोधः ॥ २ ॥

भा० सर्वशब्दाऽग्रहणात् सम्प्रज्ञातोऽपि योग इत्याऽऽख्यायते।

---

टी० स च सम्प्रज्ञातश्चतुष्प्रकार इत्याह। "स च" इति। असम्प्रज्ञातमाह। "सर्ववृत्ति" इति। रजस्तमोमयी किल प्रमाणादिवृत्तिः, सात्त्विकीं वृत्तिमुपादाय सम्प्रज्ञाते निरुद्धा। असम्प्रज्ञाते तु सर्वासामेव निरोध इत्यर्थः। तदिह भूमिद्वये समाप्ता या मधुमत्यादयो भूमयस्ताः सर्वास्तासु विदितः सार्वभौम इति सिद्धम् ॥ १ ॥

द्वितीयं सूत्रमवतारयति। "तस्य लक्षण" इति। "तस्य" इति पूर्वसूत्रोपात्तं द्विविधं योगं परामृशति। "योगश्चित्तवृत्तिनिरोधः"। निरुध्यन्ते यस्मिन् प्रमाणादिवृत्तयोऽवस्थाविशेषे चित्तस्य सोऽवस्थाविशेषो योगः। ननु सम्प्रज्ञातस्य योगस्याऽव्यापकत्वादलक्षणमिदम्, अनिरुद्धा हि तत्र सात्त्विकी चित्तवृत्तिरित्यत आह "सर्वशब्दाऽग्रहणाद्" इति। यदि सर्वचित्तवृत्तिनिरोधो योग इत्युच्येत भवेदव्यापकं सम्प्रज्ञातस्य, क्लेशकर्माऽऽशयपरिपन्थी(१) चित्तवृत्तिनिरोधस्तु तमपि सङ्गृह्णाति। तत्राऽपि राजसतामसचित्तवृत्तिनिरोधात्, तस्य च तद्भावादित्यर्थः।

---

टि० (१) ननु सर्व-शब्दाऽग्रहणान्मा नाम भूदप्रसङ्गः, क्षिप्तमूढविक्षिप्तभूमिष्वतिप्रसङ्गस्तु निरुपसर्गः। निरुद्धा हि तास्वपि सात्त्विकी वृत्तिरित्यत आह "क्लेशकर्म" इति। तथा च क्लेशकर्मादिप्रतिपक्षत्वे सति चित्तवृत्तिनिरोधो योग इति लक्षणाऽऽश्रयणेन नाऽव्याप्त्यतिव्याप्ती इति भावः। तदेवाह "तमपि" इति। तं=सम्प्रज्ञातयोगमित्यर्थः। क्षिप्तादिष्वतिप्रसङ्गं च निवारयतीत्यस्याऽप्युपलक्षणमिदम्। लक्षणं समन्वयति "तत्राऽपि" इति। तत्र=संप्रज्ञाते। अस्तु निरोधः किन्तेनेत्यत आह। "तस्य" इति। तस्य=राजसतामसवृत्तिनिरोधस्य। तद्भावात्=क्लेशादिविघटकत्वादित्यर्थः। उपलक्षणं चैतत्। क्षिप्तादीनां क्लेशाद्यविघटकत्वादित्यस्याऽपीति बोध्यम्। परिपन्थिशब्दस्य छान्दसत्वेऽपि कवीनां निरङ्कुशत्वेन न दोषः। यत्त्वत्र विज्ञानभिक्षुणाऽतिव्याप्तिपरिहाराय, तदा द्रष्टुः स्वरूपेऽवस्थानम् इत्युत्तरसूत्रसाहि-

भा० चित्तं हि प्रख्या[१] प्रवृत्ति-स्थिति शीलत्वात् त्रिगुणम्[२] । प्रख्यारूपं हि[३] चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्यविषयप्रियं भवति ।

---

टी० कुतः पुनरेकस्य चित्तस्य क्षिप्तादिभूमिसम्बन्धः ? किमर्थं चैवमवस्थस्य चित्तस्य वृत्तयो निरोद्धव्या ? इत्याशङ्क्य प्रथमं तावदवस्थासम्बन्धे हेतुमुपन्यस्यति । "चित्तं हि" इति । प्रख्याशीलत्वात् सत्त्वगुणं, प्रवृत्तिशीलत्वाद्रजोगुणं, स्थितिशीलत्वात् तमोगुणम् । प्रख्याग्रहणमुपलक्षणार्थं, तेनान्येऽपि सात्त्विकाः प्रसादलाघवप्रीत्यादयः सूच्यन्ते । प्रवृत्त्या च परितापशोकादयो राजसाः[४] । प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिः । स्थितिग्रहणाद् गौरवाऽऽवरणदैन्यादय उपलक्ष्यन्ते ।

---

टि० स्येनाऽस्य लक्षणत्वान्नाऽतिव्याप्तिः । क्षिप्ताद्यवस्थासु द्रष्टुः स्वरूपाऽवस्थितिहेतुचित्तनिरोधाऽभावादित्युपायान्तरमनुसृतम् । तदसमञ्जसम् । इदं सूत्रं प्रववृते इति भाष्ये, इदमित्येकवचनेनास्यैवैकस्य सूत्रस्य लक्षणपरत्वमिति बोधात् । किञ्चैवं भानेऽप्यतिप्रसङ्गेऽप्रसङ्गो दुर्वारः । सम्प्रज्ञातस्य स्वरूपाऽवस्थितिहेतुत्वाऽभावादित्यलम् । अत एवारुचेः,परे त्वित्यादिना वाचस्पत्योक्त एव पन्था आश्रितस्तेनाऽपि । ध्वनितं चैतत्,क्षिणोति च क्लेशानिति ब्रुवता भाष्यकारेणेति दिक्

(१) प्रख्या—तत्त्वज्ञानम् ।

(२) रज्जुवत् सत्त्वादिगुणत्रयनिर्मितम् ।

(३) क्लेशादिविघटकचित्तवृत्तिनिरोधाख्ययोगलक्षणसमन्वयाय यथाक्रमं त्रिक्षिप्तादिभूमीः स्वरूपाऽऽख्यानेनाऽऽवेदयति "प्रख्यारूपं हि" इति । हि-शब्द एवकारार्थकः । प्रख्यारूपमित्यस्मात्पूर्वं, यद्यपीति पूरयित्वा, चित्तसत्त्वमित्यस्याऽग्रे तथाऽपीति शेषयित्वा, यदा तदेति पदद्वयञ्चाऽध्याहृत्येदं भाष्यमन्वयनीयम् । तथाहि, यद्यपि सत्त्वप्राधान्येन प्रख्यारूपमेव चित्तसत्त्वं तथाऽपि यदा रजस्तमोभ्यां संसृष्टं भवति तदाऽणिमाद्यैश्वर्ये शब्दादिविषये चाऽनुरागि भवति, तदनेन क्षिप्ताऽवस्था दर्शिता । "तदेव तमसाऽनुविद्धम्" इत्यग्रिमभाष्येण च मूढाऽवस्था प्रदर्श्यते । "तदेव प्रक्षीणमोहावरणम्"इत्यनेन च विक्षिप्ताऽवस्था निर्दिश्यते । तदेतासां तिसृणामवस्थानां क्लेशादिविघटकत्वाऽभावेन न योगलक्षणातिप्रसङ्ग इति भावः । "तदेव रजोलेश" इत्यादिना च भाष्येण यथाक्रमं सम्प्रज्ञाताऽसम्प्रज्ञातोपयोगिन्यावेकाग्रनिरोधाऽवस्थे निर्दिश्येते । अनयोश्च क्लेशादिविघटकत्वेन योगलक्षणाऽऽक्रान्तत्वमिति नाऽप्रसङ्गोऽपीति भावः ।

(४) अत्रोपलक्ष्यन्त इत्यनुषञ्जनीयम् ।

भा० तदेव तमसाऽनुविद्धमधर्माऽज्ञानाऽवैराग्याऽनैश्वर्य्योपगं[१] भवति। तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं[२] रजोमात्रया धर्मज्ञानवैराग्यैश्वर्य्योपगं भवति। तदेव रजोलेश-मलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषाऽन्यताख्यातिमात्रं धर्ममेघ-ध्यानोपगं भवति।

टी० एतदुक्तं भवति। एकमपि चित्तं त्रिगुणनिर्मिततया गुणानां च वैषम्येण परस्परविमर्दवैचित्र्याद्विचित्रपरिणामं सदनेकाऽवस्थामुपपद्यत इति। क्षिप्ताद्या एव चित्तस्य भूमीर्यथासम्भवमवान्तराऽवस्थाभेदवती-रादर्शयति। "प्रख्यारूपं हि" इति। चित्तरूपेण परिणतं सत्त्वं चित्तसत्त्वम्। तदेवं प्रख्यारूपतया सत्त्वप्राधान्यं चित्तस्य दर्शितम्। तत्र चित्ते सत्त्वात् किञ्चिदूने रजस्तमसी यदा[३] मिथः समे च भवतस्तदै-श्वर्य्यञ्च विषयाश्च शब्दादयस्तान्येव प्रियाणि यस्य तत्तथोक्तम्[४] सत्त्वप्राधान्यात् खलु चित्तं तत्त्वं प्रणिधित्सदपि[५] तत्त्वस्य तमसा-ऽपिहितत्वादणिमादिकमैश्वर्य्यमेव तत्त्वमभिमन्यमानं तत्प्रणिधित्सति। प्रणिधत्ते च क्षणमथ रजसा क्षिप्यमाणं तत्राप्यलब्धस्थिति तात्प्रियमा-त्रं भवति। शब्दादिषु पुनरस्य स्वरसवाही[६] प्रेमा निरूढ एव। तदनेन विक्षिप्तं चित्तमुक्तम्। क्षिप्तं चित्तं दर्शयन् मूढमपि सूचयति। "तदेव तमसा" इति। यदा हि[७] तमो रजो विजित्य प्रसृतं तदा

टि० (१) उपगम् = उन्मुखमित्यर्थः।

(२) रजोमात्रयाऽनुविद्धमित्यन्वयः। = रजोलेशेनानुविद्धमित्यर्थः।

(३) यदा सत्त्वगुणान्न्यूने परस्परं च तुल्ये रजस्तमसी चित्ते भवतस्तदा चित्तमैश्व-र्य्यादिप्रियं भवतीत्यर्थः।

(४) ऐश्वर्य्यविषयप्रियमित्यर्थः।

(५) प्रणिधातुमिच्छदपीत्यर्थः। प्रणिधानं चात्रैकतानतया चिन्तनं, समाधानं वा।

(६) नैसर्गिक इत्यर्थः।

(७) यदा रजो विजित्य तमः प्रसृतं तदाऽभिभूतस्य रजसाश्चित्तसत्त्वाऽऽवरकतमः-समुत्सारणे = तन्निवारणेऽशक्तत्वात्तमसाऽऽवृतं चित्तमधर्माद्युपगच्छतीत्यर्थः।

टी० चित्तसत्त्वावरकतमःसमुत्सारणेऽशक्तत्वाद्रजसस्तमःस्थगितं[1]चित्तमधर्माद्युपगच्छति। अज्ञानं च विपर्य्ययज्ञानमभावप्रत्ययालम्बनं च निद्राज्ञानमुक्तम्। ततश्च मूढाऽवस्थाऽपि सूचितेति। अनैश्वर्य्यं सर्वत्रेच्छाप्रतीघातः। अधर्मादिव्याप्तं चित्तं भवतीत्यर्थः। यदा तु तदेव चित्तसत्त्वमाविर्भूतसत्त्वमपगततमःपटलं सरजस्कं भवति तदा धर्मज्ञानवैराग्यैश्वर्य्याण्युपगच्छतीत्याह "प्रक्षीण" इत्यादि। मोहस्तमस्तदेव चावरणं प्रकर्षेण क्षीणं यस्य तत्तथोक्तम्। अत एव सर्वतो[2] विशेषाऽविशेषलिङ्गमात्रालिङ्गपुरुषेषु प्रद्योतमानम्। तथाऽपि न धर्माद्यैश्वर्य्याय च कल्पते, प्रवृत्त्यऽभावादित्यत आह। "अनुविद्धं रजोमात्रया" इति। रजसः प्रवर्त्तकत्वादस्ति धर्मादिरित्यर्थः। तदनेन सम्प्रज्ञातसमाधिसंपन्नयोर्मधुभूमिकप्रज्ञाज्योतिषोर्मध्यमयोर्योगिनोश्चित्तसत्त्वं सङ्गृहीतम्। संप्रत्यतिक्रान्तभावनीयस्य ध्यायिनश्चतुर्थस्य चित्तावस्थामाह "तदेवे" ति। चित्तं रजोलेशान्मलादपेतमत एव स्वरूपप्रतिष्ठम्। अभ्यासवैराग्यपुटपाकप्रबन्धविधूतरजस्तमोमलस्य*हि बुद्धिसत्त्वतपनीयस्य† स्वरूपप्रतिष्ठायां विषयेन्द्रियप्रत्याहृतस्याऽनवसिताऽधिकारतया[3] च कार्य्यकारिणी विवेकख्यातिः परं कार्य्यमवशिष्यत इत्याह "सत्त्व" इति। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघध्यानोपगं भवति। धर्ममेघश्च वक्ष्यते। अत्रैव योगिजनप्रसिद्धिमाह—

---

* अभ्यासवैराग्ये एव पुटपाकप्रबन्धे काञ्चनशोधनसाधने इव मृत्पात्रे ताभ्यां विधूतो रजस्तमोरूपो मलो यस्येत्यर्थः।

† तपनीयम् = काञ्चनम्।

---

टि० (१) तमसाऽऽवृतम्।

(२) सर्वत इत्यत्र सार्वविभक्तिकस्तसिः, सर्वत्रेत्यर्थः। सर्वत्रेत्यस्याऽर्थमाह "विशेषे" त्यादिना। विशेषाः = पञ्चमहाभूतानि सूक्ष्मशरीराणि स्थूलदेहाः घटादयः। अविशेषाः = तन्मात्राणि। लिङ्गमात्रं = महत्तत्त्वम्। अलिङ्गं = प्रधानम्। पुरुषः = चेतनाशक्तिरित्येतेषु प्रद्योतमानमित्यर्थः।

(३) अचरितार्थाऽऽधिकारतया, असमाप्तकर्त्तव्यतयेति वार्थः।

भा० तत्परं प्रसङ्ख्यानमित्याचक्षते ध्यायिनः। चितिशक्तिरपरिणामिन्य[1]प्रतिसङ्क्रमा[2] दर्शितविषया शुद्धा चानन्ता च, सत्त्वगुणात्मिका चेयमतो विपरीता[3] विवेकख्यातिरिति ।

टी० "तत्परम्" इति। सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघपर्यन्तं परं प्रसङ्ख्यानमित्याचक्षते ध्यायिनः। चित्तसामानाऽधिकरण्यं च धर्मधर्मिणोरभेदविवक्षया द्रष्टव्यम् । विवेकख्यातेर्हानहेतुं चितिशक्तेश्चोपादानहेतुं निरोधसमाधिमवतारयितुं चितिशक्तेः साधुतामसाधुताञ्च विवेकख्यातेर्दर्शयति "चितिशक्तिरि" त्यादिना। सुखदुःखमोहात्मकत्वमशुद्धिः। सुखमोहावपि हि विवेकिनं दुःखाकुरुतोऽतो दुःखवद् हेयौ। तथाचातिसुन्दरमप्यन्तवद् दुनोति[4] तेन तदपि हेयमेव विवेकिनः। सेयमशुद्धिरन्तश्च चितिशक्तौ पुरुषे न स्त इत्यत उक्तं "शुद्धाचानन्ता च" इति। ननु सुखदुःखमोहात्मकशब्दादीनियं चेतयमाना तदाकाराऽऽपन्ना कथं विशुद्धा? तदाकारपरिग्रहपरिवर्जने च कुर्वती कथमनन्तेत्यत उक्तं "दर्शितविषया" इति । दर्शितो विषयः शब्दादिर्यस्यै सा तथोक्ता । भवेदेतदेवं यदि बुद्धिवच्चितिशक्तिर्विषयाकारतामापद्येत, किन्तु बुद्धिरेव विषयाकारेण परिणता सती अतदाकारायै चितिशक्त्यै विषयमादर्शयति, ततः पुरुषश्चेतयत इत्युच्यते। ननु विषयाकारां बुद्धिमनारूढायाश्चितिशक्तेः कथं विषयवेदनं विषयारोहे वा कथं न तदाकारापत्तिरित्यत उक्तम् "अप्रातिसङ्क्रमा" इति। प्रतिसङ्क्रमः = संचारः स चितेर्नास्तीत्यर्थः। स एव कुतोऽस्या नास्तीत्यत उक्तम्। "अपरिणामिनी" इति । न चितेस्त्रिविधोऽपि धर्मलक्षणाऽवस्थालक्षणः परिणामोऽस्ति येन क्रियारूपेण परिणता सती बुद्धिसंयोगेन परिणमेत चितिशक्तिः। असङ्क्रान्ताया अपि विषयसंवेदनमुपपादयिष्यते। तत्सिद्धं चितिशक्तिः शोभनेति । विवेकख्यातिस्तु बुद्धिसत्त्वात्मिकाऽशोभनेत्युक्तम् ।

टि० (१) पूर्वधर्मापचये धर्मान्तरोपजनः परिणामस्तद्रहिता कूटस्थनित्या परमार्थसत्येत्यर्थः।
(२) नास्ति प्रतिसङ्क्रमः=सङ्गो विषयेषु यस्याः साऽप्रतिसङ्क्रमा, निर्लेपेति यावत्।
(३) अतः = चितिशक्तेः। इयं = विवेकख्यातिर्विपरीता परिणामिनी प्रतिसञ्चारवती जडा परिच्छिन्ना सुखदुःखाद्यशुद्धिमतीत्यर्थः।
(४) दुनोति = उपतापयति, स्ववियोगेन पुरुषं दुःखितं करोतीति यावत्।

**भा० अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि । तदवस्थं संस्कारोपगं भवति । स निर्बीजः समाधिः। न तत्र किञ्चित् सम्प्रज्ञायत इत्यसम्प्रज्ञातः । द्विविधः स योगश्चित्तवृत्तिनिरोध इति ॥२॥ तदवस्थे(१)चेतसि विषयाभावाद् बुद्धिबोधात्मा(२) पुरुषः किं(३)स्वभाव इति ॥**

टी० "अतः" चितिशक्तेः । "विपरीता" इति । यदा च विवेकख्यातिरपि हेया तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानामिति भावः ॥ ततस्तद्धेतोर्निरोधसमाधेरवतारो युज्यत इत्याह "अतस्तस्याम्" इति । ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः ॥ अथ निरुद्धाऽशेषवृत्ति चित्तं कीदृशमित्यत आह । "तदवस्थम्" इत्यादि । स-निरोधोऽवस्था यस्य तत्तथोक्तम्। निरोधस्य स्वरूपमाह । "स निर्बीज" इति । क्लेशसहितः कर्माशयो जात्यायुर्भोगा बीजं, तस्मान्निर्गत इति निर्बीजः ॥ अस्यैव योगिजनप्रसिद्धामन्वर्थां सञ्ज्ञामादर्शयति । "न तत्र" इति । उपसंहरति । "द्विविधः स योगश्चित्तवृत्तिनिरोध इती" ति ॥२॥ सम्प्रत्युत्तरसूत्रमवतारयँश्चोदयति "तदवस्थे चेतसि" इति। किमाक्षेपे । तत्तदाकारपरिणतबुद्धिबोधात्मा खल्वयं पुरुषः सदाऽनुभूयते, न बुद्धिबोधरहितोऽतोऽस्य पुरुषस्य बुद्धिबोधः स्वभावः सवितुरिव प्रकाशः । न च संस्कारशेषे चेतसि सोऽस्ति । न च स्वभावमपहाय भावो वर्त्तितुमर्हति । स्यादेतत् । संस्कारशेषामपि बुद्धिं कस्मात् पुरुषो न बुध्यत इत्यत आह । " विषयाभावाद् " इति । न बुद्धिमात्रं पुरुषस्य विषयोऽपि तु पुरुषार्थवती बुद्धिः । विवेकख्यातिविषयभोगौ च पुरुषार्थौ तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषयाभावः ।

टि० (१) निरुद्धे चेतस्यसम्प्रज्ञाताऽवस्थे सतीत्यर्थः ।

(२) शान्तघोरमूढाकारपरिणतबुद्धिवृत्तिविषयकबोधस्वरूपस्तत्साक्षीत्यर्थः ।

(३) किं वस्तुतस्तार्किकवज्जड एवाऽऽत्मा, व्युत्थानकाले तु तत्तदाकारपरिणतबुद्धिसन्निधानाच्चेतयिता भवति । असम्प्रज्ञाताऽवस्थायान्तु बुद्धिवृत्त्यभावात् काष्ठवदप्रकाशरूप एव तिष्ठति? किं वा प्रकाशरूप एव पुरुषो व्युत्थानकाले बुद्धिवृत्त्युपाधानेनाऽविवेकाज्ज्ञातृत्वं तस्मिन्नुपचर्य्यते। निरुद्धे तु चित्तवृत्त्याख्यदृश्याऽभावाज्जपासुमनोऽपाये स्फाटिकस्याऽलोहिते स्वस्वरूपेऽवस्थितिरिव वृत्तिप्रतिबिम्बशून्ये चिन्मात्रे स्वस्वरूपे पुरुषस्यावस्थितिर्भवति ? इति शङ्काशयः

सू० तदा द्रष्टुः स्वरूपेऽवस्थानम्[१] ॥ ३ ॥

भा०स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये। व्युत्थानचित्ते तु सति [२]तथाऽपि भवन्ती न तथा ॥ ३ ॥ कथं तर्हि ।

टी० सूत्रेण परिहरति।"तदा द्रष्टुः स्वरूपेऽवस्थानम्" ॥३॥ स्वरूप इत्यारोपितं शान्तघोरमूढस्वरूपं निवर्त्तयति। पुरुषस्य हि चैतन्यं स्वरूपमनौपाधिकं,न तु बुद्धिबोधः शान्तादिरूपः। औपाधिको हि सः, स्फटिकस्येव स्वभावस्वच्छधवलस्य जपाकुसुमसन्निधानोपाधिररुणिमा। नचोपाधिनिवृत्तावुपहितनिवृत्तिरतिप्रसङ्गादिति भावः ॥ स्वरूपस्य चाभेदेऽपि विकल्प्याऽधिकरणभाव उक्त इति। अयमेवार्थो भाष्यकृता द्योत्यते "स्वरूपप्रतिष्ठा" इति ॥ तदानीं=निरोधावस्थायां, न व्युत्थानावस्थायामिति भावः। स्यादेतद्,व्युत्थानावस्थायामप्रतिष्ठिता स्वरूपे चितिशक्तिर्निरोधाऽवस्थायां प्रतितिष्ठन्ती परिणामिनी स्याद्, व्युत्थाने वा स्वरूपप्रतिष्ठाने व्युत्थाननिरोधयोरविशेष इत्यत आह "व्युत्थानचित्ते त्वि"ति। न जातु कूटस्थनित्या चितिशक्तिः स्वरूपाच्च्यवते। तेन यथा निरोधे तथैव व्युत्थानेऽपि। न खलु शुक्तिकायाः प्रमाणविपर्य्ययज्ञानगोचरत्वेऽपि स्वरूपोदयव्ययौ भवतः। प्रतिपत्ता तु तथाभतमप्यतथात्वेनाभिमन्यते। निरोधसमाधिमपेक्ष्य सम्प्रज्ञातोऽपि व्युत्थानमेवेति ॥३॥

सूत्रान्तरमवतारयितुं पृच्छति "कथन्तर्हि" इति। यदि तथाऽपि भवन्ती न तथा, केन तर्हि प्रकारेण प्रकाशत इत्यर्थः । हेतुपदमध्याहृत्य

टि० (१) किंस्वभाव इत्यनेनाशङ्कितयोः पक्षयोर्द्वितीयं पक्षं सिद्धान्तयति। "तदा द्रष्टुः" इति। यत्तु भोजदेवेन, "तदा द्रष्टुरिति" वृत्तिसारूप्यमिति सूत्रद्वयेन चित्तं लक्ष्यते। तथा हि यस्मिन्नेकाग्रतया परिणते चितिशक्तेः स्वस्मिन् स्वरूपे प्रतिष्ठानं भवति, यस्मिंश्चेन्द्रियवृत्तिद्वारेण विषयाकारेण परिणते पुरुषस्तदाकार एव भाव्यते। यथा चलत्सु जलतरङ्गेषु चलन्निव चन्द्रः। तच्चित्तम्"इत्यभिहितम्। तन्न। अक्षरमर्यादयैतस्यार्थस्यालाभाद्। एकाग्रतया परिणतेऽपि सम्प्रज्ञाते द्रष्टुः स्वरूपावास्थित्यभावेनासम्प्रज्ञाते द्रष्टुः स्वरूपे प्रतिष्ठानसत्त्वेऽपि एकाग्रतापरिणामाऽभावेन च तदुक्तार्थस्याऽसङ्गतत्वाच्चेति ।

(२) वस्तुत इति शेषः। वस्तुतस्तथाऽपि भवन्ती = असम्प्रज्ञातसमानरूपाऽपि परन्तु व्युत्थानचित्ते तथा न प्रकाशत इत्यर्थः।

भा० दर्शितविषयत्वात्[१] ।

सू० वृत्तिसारूप्यमितरत्र ॥ ४ ॥

व्युत्थाने याश्चित्तवृत्तयस्तदविशिष्टवृत्तिः पुरुषः । तथा च सूत्रम् "एकमेव दर्शनं ख्यातिरेव दर्शनम्" इति ।

टी० सूत्रं पठति, दर्शितविषयत्वाद् "वृत्तिसारूप्यमितरत्र" ॥४॥ इतरत्र व्युत्थाने याश्चित्तवृत्तयः=शान्तघोरमूढास्ता एवाऽविशिष्टा=अभिन्ना वृत्तयो यस्य पुरुषस्य स तथोक्तः ॥ "सारूप्यम्" इत्यत्र स—शब्द एकपर्य्यायः । एतदुक्तं भवति । जपाकुसुमस्फटिकयोरिव बुद्धिपुरुषयोः सन्निधानादभेदग्रहे बुद्धिवृत्तीः पुरुषे समारोप्य शान्तोऽस्मि दुःखितोऽस्मि मूढोऽस्मीत्यध्यवस्यति । यथा मलिने दपर्णतले प्रतिबिम्बितं मुखं मलिनमारोप्य शोचत्यात्मानं मलिनोऽस्मीति । यद्यपि पुरुषसमारोपोऽपि शब्दादिविज्ञानवद्बुद्धिवृत्तिर्यद्यपि च प्राकृतत्वेनाचिद्रूपतयाऽनुभाव्यस्तथाऽपि बुद्धेः पुरुषत्वमापादयन् पुरुषवृत्तिरिवानुभव इवाऽवभासते । तथा चाग्रमविपर्य्ययोऽप्यात्मा विपर्य्ययवानिवाऽभोक्ताऽपि भोक्तेव विवेकख्यातिरहितोऽपि तत्सहित इवाऽविवेकख्यात्यां प्रकाशते। एतच्च,चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम्" पा०४सू० २२ इत्यत्र "सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोग" ३ पा० ३५सू० इत्यत्र चोपपादयिष्यते ॥ एतच्च मतान्तरेऽपि[२] सिद्धमित्याह "तथा च" इति। पञ्चशिखाचार्य्यस्य सूत्रम् "एकमेव दर्शनं ख्यातिरेव दर्शनम्" इति । ननु कथमेकं दर्शनं यावता बुद्धेः शब्दादिविषया विवेकविषया च वृत्तिः प्राकृततया जडत्वेनानुभाव्या दर्शनं,ततोऽन्यत् पुरुषस्य चैतन्यमनुभवो दर्शनमित्यत आह । "ख्यातिरेव दर्शनम्" इति ।

टि० (१) दर्शितविषयत्वादित्यनेनौपाधिकं वृत्तिसारूप्यमिति सूचयति । दर्शितो बुद्ध्या निवेदितो विषयो यस्मै तत्तथा, तस्य भावस्तत्त्वं, तस्माद्=बुद्ध्या समर्पितविषयत्वादित्यर्थः समर्पणं च स्वोपगृहीतविषयस्य प्रतिबिम्बरूपे चित्याधानम् । तदुक्तं विष्णुपुराणे— "गृहीतानिन्द्रियैरर्थानात्मने यः प्रयच्छति । अन्तःकरणरूपाय तस्मै विश्वात्मने नमः" इति ॥

(२) निरीश्वरसाङ्ख्यवादेऽपीत्यर्थः ।

भा० चित्तमयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन स्वं भवति पुरुषस्य स्वामिनः[१]। तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिसम्बन्धो हेतुः ॥ ४ ॥

टी० उदयव्ययधर्मिणीं वृत्तिं ख्यातिं लौकिकीमभिप्रेत्यैतदुक्तम् "एकमेव" इति। चैतन्यन्तु पुरुषस्य स्वभावो न ख्यातिः। चैतन्यं तु न लोकप्रत्यक्षगोचरोऽपि त्वागमानुमानगोचर इत्यर्थः। तदनेन व्युत्थानावस्थायां मूलकारणमविद्यां दर्शयता तद्धेतुकः संयोगो भोगहेतुः स्वस्वामिभावोऽपि सूचित इति तमुपपादयन्नाह "चित्तम्" इति। चित्तं स्वं भवति पुरुषस्य स्वामिन इति संबन्धः। ननु चित्तजनितमुपकारं भजमानो हि चेतनश्चित्तस्येशिता, नचाऽस्य तज्जनितोपकारसंभवस्तदसंबन्धादनुपकार्य्यत्वात्, तत्संयोगतदुपकारभागित्वे च परिणामित्वप्रसङ्गादित्यत आह। "अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन" इति। न पुरुषसंयुक्तं चित्तमपि तु तत्सन्निहितं सन्निधिश्च पुरुषस्य न देशतः कालतो वा तदसंयोगात्, किन्तु योग्यतालक्षणः। अस्ति च पुरुषस्य भोक्तृशक्तिश्चित्तस्य भोग्यशक्तिस्तदुक्तं "दृश्यत्वेन" इति। शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः॥ भोगश्च यद्यपि शब्दाद्याकारा वृत्तिश्चित्तस्य धर्मस्तथाऽपि चित्तचैतन्ययोरभेदसमारोपाद् वृत्तिसारूप्यात् पुरुषस्येत्युम्। तस्माच्चित्तेनाऽसंयोगेऽपि तज्जनितोपकारभागिता पुरुषस्याऽपरिणामिता चेति सिद्धम्॥ ननु स्वस्वामिसंबन्धो भोगहेतुरविद्यानिमित्तोऽविद्या तु किन्निमित्ता? न खलु निर्निमित्तं कार्य्यमुत्पद्यते। यथाहुः "स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता" इति शङ्कामुपसंहारव्याजेनोद्धरति। "तस्माच्चित्तवृत्तिबोध" इति। शान्तघोरमूढाकारचित्तवृत्त्युपभोगेऽनाद्यविद्यानिमित्तत्वादनादिसंयोगो हेतुः। अविद्यावासनयोश्च सन्तानो बीजाङ्कुरवदनादिरिति भावः ॥ ४ ॥

टि० (१) यथाऽयस्कान्तमणिः स्वस्मिन्नयःसन्निधिकरणमात्राच्छल्यनिष्कर्षणाख्यमुपकारं कुर्वन् स्वामिनः स्वं भवति। भोगसाधनत्वात्। तथैव चितमप्ययःसदृशविषयजातस्य स्वस्मिन् सन्निधीकरणमात्राद् दृश्यत्वरूपमुपकारं कुर्वत् पुरुषस्य स्वं भवति। भोगसाधनत्वात्। अतश्चित्तपुरुषयोरनादिः स्वस्वामिभावः संबन्ध इति विज्ञानभिक्षुः।

भा० ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य[1] ।

सू० **वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः ॥ ५ ॥**

क्लेशहेतुकाः कर्माशयप्रचयक्षेत्रीभूताः[2] क्लिष्टाः ।

---

टी० स्यादेतत्, पुरुषो हि शक्य उपदिश्यते, न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यो, न च सहस्रेणापि पुरुषायुषैरलमिमाः कश्चित् परिगणयितुम्, असङ्ख्याताश्च कथं निरोद्धव्या इत्याशङ्क्य तासामियत्तास्वरूपप्रतिपादनपरं सूत्रमवतारयति "ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य" इति ॥ "वृत्तयः पञ्चतय्यः क्लिष्टाऽक्लिष्टाः"॥ वृत्तिरूपोऽवयव्येकस्तस्य प्रमाणादयोऽवयवाः पञ्च ततस्तदवयवा पञ्चतयी पञ्चावयवा वृत्तिर्भवति। ताश्च वृत्तयश्चैत्रमैत्रादिचित्तभेदाद् बह्वय इति बहुवचनमुपपन्नम्। एतदुक्तं भवति। चैत्रो वा मैत्रो वा अन्यो वा कश्चित् सर्वेषामेव तेषां वृत्तयः पंचतय्य एव, नाधिका इति। "चित्तस्य" इति चैकवचनं जात्यभिप्रायम्। चित्तानामिति तु द्रष्टव्यम्। तासामवान्तरविशेषमनुष्ठानोपयोगिनं दर्शयति "क्लिष्टाऽक्लिष्टा" इति। अक्लिष्टा उपादाय क्लिष्टा निरोद्धव्यास्ता अपि परेण वैराग्येणेति। अस्य व्याख्यानमाह "क्लेशहेतुका" इति। क्लेशा=अस्मितादयो हेतवः=प्रवृत्तिकारणं यासां वृत्तीनां तास्तथोक्ताः। यद्वा पुरुषार्थप्रधानस्य[3] रजस्तमोमयीनां हि वृत्तीनां क्लेशकारित्वेन क्लेशायैव प्रवृत्तिः। क्लेशः=क्लिष्टं तदासामस्तीति क्लिष्टा[4] इति। यत एव क्लेशोपार्जनार्थममूषां प्रवृत्तिरत एव कर्माशयप्रचयक्षेत्रीभूताः। प्रमाणादिना खल्वयं प्रतिपत्ताऽर्थमवसाय तत्र सक्तो द्विष्टो वा कर्माशयमाचिनोतीति भवन्ति धर्माऽधर्मप्रसवभूमयो वृत्तयः

---

टि० (१) तद्व्यक्तित्वेन वृत्तीनां बहुत्वे सत्यपि निरोद्धव्याश्चित्तस्य वृत्तयः क्लिष्टाऽक्लिष्टभेदभिन्नाः पञ्चतय्य एवेत्येवं सूत्रेण सहान्वयो ज्ञेयः। लज्जादिलक्षणानां वृत्तीनां सत्त्वेऽपि पञ्चस्वेवेतरासामन्तर्भावात् प्रमाणादिपञ्चकनिरोधेनैवेतरासां निरुद्धत्वान्न तासां निरोधाय पृथग् उपायान्वेषणमिति भावः। (२) कर्माशयप्रचयानां=धर्माधर्मवासनासमूहानां क्षेत्रीभूताः=प्रसवभूमय इत्यर्थः।

(३) पुरुषस्येति शेषः।

(४) भावक्तान्तादर्शआद्यचि क्लिष्टशब्दो दुःखफलकार्थवाचक इति भावः।

भा० ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः। क्लिष्टप्रवाहपतिता अप्यक्लिष्टाः, क्लिष्टच्छिद्रेष्वप्य[१]क्लिष्टा भवन्ति, अक्लिष्टच्छिद्रेषु क्लिष्टा इति।

टी० क्लिष्टा[२] इति॥अक्लिष्टा व्याचष्टे "ख्यातिविषया" इति॥विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिः। तया विषयिण्या तद्विषयं सत्त्वपुरुषविवेकमुपलक्षयति। तेन सत्त्वपुरुषविवेकविषया यतोऽत एव, गुणाधिकारविरोधिन्यः, कार्य्यारम्भणं हि गुणानामधिकारो, विवेकख्यातिपर्य्यवसानं च तदिति चरिताऽधिकाराणां[३] गुणानामधिकारं निरुन्धन्तीत्यतस्ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः। स्यादेतत्—वीतरागजन्मादर्शनात्[४] क्लिष्टवृत्तय एव सर्वे प्राणभृतः। न च क्लिष्टवृत्तिप्रवाहे भवितुमर्हन्त्यक्लिष्टा वृत्तयो, नचामूषां भावेऽपि कार्य्यकारिता, विरोधिमध्यपातित्वात्। तस्मात् क्लिष्टानामक्लिष्टाभिर्निरोधस्तासां च वैराग्येण परेणेति मनोरथमात्रमित्यत आह। "क्लिष्टप्रवाह" इति[५]॥ आगमानुमानाचार्य्योपदेशपरिशीलनलब्धजन्मनी अभ्यासवैराग्ये क्लिष्टच्छिद्रम् = अन्तरं, तत्र पतिताः स्वयमक्लिष्टा एव यद्यपि क्लिष्टप्रवाहपतिताः। न खलु शालग्रामे किरातशतसङ्कीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति। अक्लिष्टच्छिद्रेष्विति निदर्शनं, क्लिष्टान्तर्वर्त्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टाः स्वसंस्कारपरिपाकक्रमेण क्लिष्टा एव तावदभिभवन्तीत्याह।

टि० (१) निरपि पाठमपि सम्यञ्चं प्रतिपद्ये।

(२) प्रतिपत्ता = परीक्षकः प्रमाणादिना कर्त्तव्याऽकर्त्तव्यमर्थं निश्चित्य आनुकूल्यज्ञानेन तत्र रक्तो धर्ममाचिनोति प्रातिकूल्यज्ञानेन च द्विष्टोऽधर्ममाचिनोतीति हेतोः राजस्यस्तामस्यश्च प्रमाणादिवृत्तयः क्लिष्टा इत्यर्थः।

(३) समाप्तकृत्यानाम्।

(४) सरागजन्मदर्शनादित्यर्थः।

(५) यत्तु, ननु सूत्रकारेण तामसीनां सात्त्विकीनां द्विविधानामेव निरोद्धव्यत्वमुक्तं न तु राजसीनां क्लिष्टाक्लिष्टरूपमिश्रवृत्तीनामिति न्यूनतेत्याशङ्क्य मिश्रवृत्तीनामुक्तास्वेवान्तर्भावमाह—क्लिष्टप्रवाहेतीत्यवतारितं विज्ञानभिक्षुणा। तन्न सम्यक्। क्लिष्टशब्देनैव राजसीनां तामसीनां च ग्रहणस्य सूत्रकृतोऽभिमतत्वात्। परपीड़ानुग्रहाभ्यां धर्माधर्मावुपचिनोति ततश्च दुःखधारा भवतीति दुःखफलिकाः क्लिष्टा इति तेनैव धर्माधर्माविति वदतोभयोर्ग्रहणस्य ध्वनितत्वाच्चेति।

भा० तथा जातीयकाः संस्कारा वृत्तिभिरेव क्रियन्ते संस्कारैश्च वृत्तय इत्येवं वृत्तिसंस्कारचक्रमनिशमावर्त्तते। तदेवम्भूतं चित्त-मवसिताऽधिकारमात्मकल्पेन[१] व्यवतिष्ठते, प्रलयं वा गच्छ-तीति,[२] ताः क्लिष्टाश्चाऽक्लिष्टाश्च पञ्चधा वृत्तयः ॥५॥[३]

सू० ४ प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥

टी० "तथा जातीयका" इति। अक्लिष्टाभिर्वृत्तिभिराक्लिष्टाः संस्कारा इत्यर्थः तदिदं वृत्तिसंस्कारचक्रमनिशमावर्त्तते आनिरोधसमाधेः। तदेवम्भूतं चित्तं निरोधावस्थं संस्कारशेषं भूत्वाऽऽत्मकल्पेन व्यवतिष्ठत इत्यापाततः, प्रलयं वा गच्छतीति परमार्थतः। पिण्डीकृत्य सूत्रार्थमाह "ता" इति। पञ्चधेत्यर्थ-कथनमात्रं, न तु शब्दवृत्तिव्याख्यानम्। तयपः प्रकारे अस्मरणात्[४] ॥५॥ ॥ ताः स्वसञ्ज्ञाभिरुद्दिशति—"प्रमाणविपर्य्ययविकल्पनिद्रास्मृ-तयः" ॥६॥ निर्देशे[५] यथावचनं विग्रहः। चाऽर्थे द्वन्द्वः समास इतरे-तरयोगः। यथा—"अनित्याऽशुचिदुःखानाऽऽत्मसु नित्यशुचिसुखात्म-

टि० (१) अवसिताधिकारम् = विवेकख्यात्युदयेन समाप्तेतिकर्त्तव्यताकमित्यर्थः। आत्म-कल्पेन = आत्माऽविभागेन आत्मस्वरूपेणेति यावत्। "स आत्मा सर्वगो राम! नित्योदि-तमहावपुः। यन्मनाङ्मननीं शक्तिं धत्ते तन्मन उच्यते" इति वशिष्ठोक्तेर्मननशक्तिम-त्त्वेनोपाधिनात्मन एव मनस्त्वव्यवहाराऽऽस्पदत्वाऽवगमान्निरुद्धायां च मननशक्तावात्म-स्वरूपेणावतिष्ठत इत्यर्थादायातमिति भावः।

(२) प्रलयं वा गच्छतीत्यनेन सरूपाऽरूपभेदेन द्विविधो मनोनाश उच्यते। तदुक्तं वाशिष्ठे "द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च जीवन्मुक्तौ सरूपः स्यादरूपो देहमुक्तिगः" इति।

(३) पूर्वसूत्रेण सह योजनार्थं "ताः क्लिष्टाश्चाऽक्लिष्टाश्च पञ्चधा वृत्तय इति पूर-यित्वोत्तरं सूत्रं पठति" इत्येवं व्याचक्षाणेन विज्ञानभिक्षुणा यद्यप्येतद् भाष्यमुत्तरसूत्रा-ऽन्वयीत्यभिहितं, तथाऽपि पिण्डीकृत्य सूत्रार्थमाह 'ता' इतीति वाचस्पत्याऽनुसारेण पूर्वान्वय्येव स्थापितम्।

(४) लक्षणया तयपः प्रकारवाचित्वमस्माद् भाष्याद् इति केचित्।

(५) निर्देश = प्रमाणादिलक्षणसूत्रे यादृशं लक्ष्ये वचनमुपात्तं तदनतिक्रम्य विग्रहः कर्त्तव्यः। तद्यथा—प्रमाणानि च विपर्य्ययश्च विकल्पश्च निद्रा च स्मृतिश्चेति तथेत्यर्थः।

सू० प्रत्यक्षाऽनुमानाऽऽगमाः प्रमाणानि ॥ ७ ॥

भा० इन्द्रियप्रणालिकया[१] चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषाऽऽत्मनोऽर्थस्य विशेषाऽवधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम् ।

---

टी० ख्यातिरविद्या'' इत्युक्तेऽपि न दिङ्मोहाऽलातचक्रादिविभ्रमा व्युदस्यन्त एवमिहाऽपि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरसद्भावशङ्का न व्युदस्येतेति तन्निरासाय वक्तव्यं—"पञ्चतय्य" इति । एतावत्य एव वृत्तयो नाऽपराः सन्तीति दर्शितं भवति ॥ ६ ॥

तत्र प्रमाणवृत्तिं विभजन् सामान्यलक्षणमाह[२] "प्रत्यक्षाऽनुमानाऽऽगमाः प्रमाणानि" ॥ अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुः प्रमा, तत्करणं प्रमाणम् । विभागवचनं च न्यूनाधिकसङ्ख्याव्यवच्छेदार्थम् । तत्र सकलप्रमाणमूलत्वात् प्रथमतः प्रत्यक्षं लक्षयति "इन्द्रिय"इति । 'अर्थस्य' इति समारोपितत्वं निषेधति । 'तद्विषया' इति बाह्यगोचरतया ज्ञानाकारगोचरत्वं वारयति[३] । चित्तवर्त्तिनो ज्ञानाऽऽकारस्य बाह्यज्ञेय-

---

टि० (१) इन्द्रियाण्येव प्रणालिका = कुल्या इव चित्तवृत्तिसञ्चरणमार्गस्तयेत्यर्थः । इन्द्रियद्वारा बाह्यवस्तूपरागात् तद्विषया = उपरक्तवस्तुविषया या चित्तस्य वृत्तिः सा प्रत्यक्षं प्रमाणमिति यावत् । एतेन चित्तवृत्तेरेव प्रमाणत्वं मुख्यं, चक्षुरादीनां तु द्वारत्वमेवेति प्रमाणत्वव्यवहारो भाक्त इति बोध्यम् । शङ्खपैत्याद्याकारताया नेत्रादिगतकामलादिदोषाऽन्वयव्यतिरेकाऽनुविधायित्वाच्चित्तस्येन्द्रियसाहित्येनैवार्थाऽऽकारपरिणामो न केवलस्येत्यत एव चक्षुरादीनामपि करणत्वव्यवहार इत्येके ।

(२) यद्यपि विभागपरमेतत्सूत्रं तथाऽपि प्रमीयतेऽनेनेति निर्वचनेन प्रमाणसामान्यमपि लक्षयति तन्त्रयुक्त्येति भावः । एतेनास्य सूत्रस्य विभागपरत्वेन लक्षणपरत्वाऽभावादेकं किंचिदुपसङ्ग्राहकं सामान्यलक्षणमन्तरा विभागाऽयोगाल्लक्षणाऽनभिधानेन न्यूनतेति निराकृतं बोध्यमित्यन्यत्र विस्तरः ।

(३) उपलक्षणं चैतत् स्मृतिमपि व्यावर्त्तयतीत्यस्याऽपि । तस्या अपि उपरक्तवस्तुविषयाऽभावात् ।

भा० फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः(१)। बुद्धेः प्रतिसंवेदी पुरुष इत्युपरिष्टादुपपादयिष्यामः।

टी० संबन्धं दर्शयति "बाह्यवस्तूपरागाद्" इति। व्यवहितस्य तदुपरागे हेतुमाह "इन्द्रियप्रणालिकया" इति। सामान्यमात्रमर्थ इत्येके, विशेषा एवेत्यन्ये, सामान्यविशेषतद्वत्तेत्यपरे वादिनः प्रतिपन्ना-

टि० (१) चित्तवृत्तिबोधः=इन्द्रियप्रणालिकयाऽर्थसन्निकर्षाऽनन्तरं जायमाना याऽयं घट इत्याकारा चित्तवृत्तिस्तस्या यो बोधः=तत्तदर्थोपरक्तचित्तवृत्तिविषयकोऽहं घटं जानामीत्याद्याकारोऽनुभव इति यावत् स प्रमाणभूतायाश्चित्तवृत्तेः फलमित्यर्थः। स चायं बोधः फलरूपो न बौद्धोऽपि तु बुद्धौ प्रतिबिम्बितत्वेन तत्तादात्म्याऽऽपत्त्या पुरुषस्य ज्ञानादिमत्त्वोपचारात्पौरुषेय इत्याह "पौरुषेय" इति। पौरुषेय इत्यनेन न बोधस्य पुरुषनिष्ठत्वमुच्यते येन प्रमातृत्वादिधर्मेण पुरुषस्य परिणामित्वं स्याद् इत्याह "अविशिष्टः= बुद्धिवृत्त्या सहाऽविशिष्टः, चितिचित्तयोरभेदग्रहात् पुरुष उपचर्य्यमाणोऽपि वस्तुतो बुद्धिवृत्त्यात्मक इत्यर्थः। तथा चोक्तं पञ्चशिखाचार्य्यैः "प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याऽऽख्यायत" इति। बोधस्य बुद्धिवृत्त्यात्मकत्वेऽपि यथा पौरुषेयत्वं तथा "द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययाऽनुपश्यः" पा० २सू० २०। "चितेरप्रतिसङ्क्रमायास्तदाऽऽकाराऽऽपत्तौ स्वबुद्धिसंवेदनम्" पा० ४ सू० २२ इत्यादिसूत्रेषु स्पष्टं, तत्रैव च वयं विस्पष्टयिष्याम इत्याह "बुद्धेः प्रतिसंवेदी" इत्यादिना। बुद्धेः प्रतिसंवेदी=संवेदिन्या बुद्धेः प्रतिरूपस्तत्तादात्म्याऽऽपन्नत्वेन तत्समानाऽऽकार इति यावत्। बुद्धिदर्पणे पुरुषप्रतिबिम्बसंक्रान्तिरेव बुद्धिप्रतिसंवेदित्वं पुंसः। तथा च यथा ह्यन्तरेणाऽपि चन्द्रमसः क्रियामुपसङ्क्रान्तचन्द्रप्रतिबिम्बममलं जलं स्वयं चलत्सदचलमपि चन्द्रमसं चलमिवाऽवभासयत्येवं विनाऽऽपि चितिव्यापारमुपसङ्क्रान्तचितिप्रतिबिम्बा बुद्धिरसङ्गतामपि चितिशक्ति स्वगतया ज्ञानादिक्रिययाऽवभासयन्ती सती प्रमातृभावमापादयति। परमार्थतस्तु न पुरुषस्य प्रमातृत्वं, न वा तन्निष्ठो बोधः फलम्। तथाचोक्तमादित्यपुराणे—"नित्यः सर्वगतो ह्यात्मा बुद्धिसन्निधिसत्तया। यथा यथा भवेद् बुद्धिरात्मा तद्वदिहेष्यते" इति। एतेन यदत्र विज्ञानभिक्षुणा "पुरुषनिष्ठो बोधः फलम्" इति "प्रमाता चेतनः शुद्ध" इति च प्रलपितं, तन्निराकृतम्। पूर्वोक्तयुक्त्युपेतवचनेभ्यो बुद्धितत्त्वप्रतिबिम्बितस्य पुंसः कथञ्चित्प्रमातृत्वेऽपि शुद्धस्य तदयोगात्। "असङ्गोऽह्ययं पुरुषः, ध्यायतीव लेलायतीव" इत्यादिश्रुतिविरोधाच्च। "पुरुषस्तु प्रमासाक्ष्येव न प्रमाता" इति साङ्ख्यप्रवचनभाष्यस्थस्वोक्तिविरोधाच्च। यच्चोक्तं बुद्धेरेव प्रमातृत्वे पुरुषो न सिद्ध्येदिति, तदतिफल्गु। न वयं केवलं बुद्धितत्त्वं प्रमातृ इत्याचक्ष्महे येनैवमुपालभ्ये-

टी० स्तन्निरासायाऽऽह "सामान्याविशेषात्मन(१)" इति। न तद्वत्ता, किन्तु तादात्म्यमर्थस्य। एतच्च "एकान्ताऽनभ्युपगमाद्" इत्यत्र प्रतिपादयिष्यते। अनुमानाऽऽगमविषयात् प्रत्यक्षविषयं व्यवच्छिनत्ति "विशेषाऽवधारण-प्रधाना" इति। यद्यपि सामान्यमपि प्रत्यक्षे प्रतिभासते तथाऽपि विशेषं प्रत्युपसर्जनीभूतमित्यर्थः। एतच्च साक्षात्कारोपलक्षणपरम्। तथा च विवेकख्यातिरपि लक्षिता भवति। फलविप्रतिपत्तिं निराकरोति "फलं पौरुषेयश्चित्तवृत्तिबोध" इति। ननु पुरुषवर्त्ती बोधः कथं चित्तगतायाः वृत्तेः फलं, न हि खदिरगोचरव्यापारेण परशुना पलाशे छिदा क्रियते इत्यत आह "अविशिष्ट" इति। न हि पुरुषगतो बोधो जन्यतेऽपि तु चैतन्य-मेव बुद्धिदर्पणप्रतिबिम्बितं बुद्धिवृत्त्याऽर्थाऽऽकारया तदाकारतामापद्य-मानं फलम्।

तच्च(२) तथाभूतं बुद्धेरविशिष्टं = बुद्ध्याऽऽत्मकं, वृत्तिश्च बुद्ध्यात्मिके-ति सामानाधिकरण्याद् युक्तः प्रमाणफलभाव इत्यर्थः। एतच्चो-पपादयिष्याम इत्याह "बुद्धेः प्रतिसंवेदी" इति।

---

टि० महि, किन्तु "उपरागात्कर्तृत्वं चित्सान्निध्याद्" "तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्" इत्यादिसाङ्ख्यस्मृतिभ्य उपसङ्क्रान्तचितिप्रतिबिम्बमेव तत्प्रमातृ इति। तथा च प्रतिबिम्बत्वाऽन्यथाऽनुपपत्त्या बुद्धिसाक्षितया च पुरुषसिद्धेर्न दोष इत्यलं बहुना। केचित्तु चित्तवृत्तिजन्यो यः पौरुषेयो बोधः स फलं प्रमेत्यर्थ इत्येवमिमं भाष्यं व्याचक्षते। अपरे तु 'पुरुषवर्त्ती बोधः कथं चित्तगताया वृत्तेः फलम्' इति व्याख्या-तृशङ्काऽनुसारेण चित्तवृत्तेरिति षष्ठ्यन्तं पाठं कल्पयित्वा पौरुषेयो बोधश्चित्तवृत्तेः फलमित्येवमर्थापयन्ति। परन्तु न स पाठः कुत्राऽप्युपलभ्यत इत्युपेक्षितोऽस्माभिरिति बोध्यम्।

(१) सामान्यविशेषशब्देन धर्मधर्मिणौ गृह्येते। यथा च धर्मधर्मिणोस्तादात्म्यं तथा "एतेन" पा० ३ सू० १३ इति सूत्रे स्पष्टमिति नाऽत्र किञ्चिद्वक्तव्यमस्ति।

(२) तच्चेति चकारो हेत्वर्थे, यतस्तथाभूतं तद्=बुद्धिप्रतिबिम्बितं फलरूपं चैतन्यं बुद्ध्या-ऽऽत्मकं, प्रमाणभूता बुद्धिवृत्तिरपि च बुद्ध्यात्मिका, इति=अतः, सामानाऽधिकरण्यात्= चितिचित्तयोरभेदग्रहाद् युक्तः पौरुषयबोधस्य प्रमाणभूताया बुद्धिवृत्तेः फलभाव इत्यर्थः। एवञ्च बुद्धावेव प्रमाख्यं फलं जायते, न पुरुषे। तस्याऽसङ्गत्वाद् "ज्ञानं नैवा-ऽऽत्मनो धर्मो न गुणो वा कथञ्चन। ज्ञानस्वरूप एवाऽऽत्मा नित्यः सर्वगतः शिवः"

टि० इत्यादिवाक्याच्च। उपपादितं चैतत् पूर्वमिति व्याख्यातुराकूतम्। विज्ञानभिक्षुस्तु 'न बुद्धौ प्रमाण्यं फलं जायते तथा सति पौरुषेय-शब्दस्य यथाश्रुताऽर्थत्यागापत्तेः। किन्तु बुद्धिवृत्तिप्रतिबिम्बोपहितायाश्चितेरेव फलत्वं युक्तम्। प्रतिबिम्बस्याऽर्थक्रियाकारितायाः क्वाप्यदर्शनाद्' इत्येवं वाचस्पत्यं निराचष्ट। एतच्च पूर्वत्रोपपादितरीत्याऽसंगतमेव। किञ्च "चितेरप्रतिसङ्क्रमाया" इत्यादिसूत्रतद्भाष्यपूर्वोक्तपञ्चशिखाचार्यवचनेभ्यो बुद्धौ चैतन्यप्रतिबिम्बस्य प्रामाणिकत्वेऽपि पुरुषे बुद्धिप्रतिबिम्बस्याप्रामाणिकत्वात्। यास्तु "तस्मिँश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः। इमास्ता प्रतिबिम्बन्ति सरसीव तटद्रुमा" इत्यादयः स्मृतयस्ता अपि सूत्राद्याऽनुगुण्येन 'बुद्धिदर्पणप्रतिबिम्बितत्वेन तत्तादात्म्यापन्ने दर्पणवत्स्वच्छे चिति इमा वस्तुदृष्टयः=बुद्धेर्धर्मभूतानि ज्ञानान्यविवेकात् प्रतिभासन्त इत्येवमर्थपरतया नेयाः। अपि च, न हि पारमार्थिकत्वघटितं पुरुषनिष्ठत्वमेव यथाश्रुतः पौरुषेयशब्दस्यार्थः, किन्तर्हि पुरुषस्वत्वं तन्निष्ठत्वमात्रं वा। तच्च पारमार्थिकं वौपचारिकं वेति नाऽऽग्रहः। प्रकृते च मुख्यस्याऽसम्भवादौपचारिकं तन्निष्ठत्वमाश्रीयतेऽतो न यथाश्रुताऽर्थत्यागापत्तिः। किञ्च, प्रतिबिम्बरूपयाऽऽरोपितक्रियया कल्पितं दर्शनकर्तृत्वं, वस्तुतस्तु बुद्धेः साक्ष्येव पुरुष इति, "द्रष्टा दृशिमात्र" इति सूत्रस्थस्वोक्त्या विरोधाद् अश्रद्धेयमेतद् व्याख्यानम्। यच्चोक्तं प्रतिबिम्बस्याऽर्थक्रियाकारित्वं नास्तीति। तदपि न। जडप्रतिबिम्बस्याऽर्थक्रियाकारित्वाऽभावेऽपि चेतनप्रतिबिम्बस्याऽर्थक्रियाकारित्वसम्भवादित्यलमधिकेन। नन्वेतद्भाष्याच्चित्तवृत्तेः प्रमाकरणत्वेन प्रमाणत्वं पौरुषयबोधस्य च प्रमात्वमिति लभ्यते। एवं च चक्षुरादीनां यत् प्रमाकरणत्वेन प्रमाणत्वं तैर्थिकैराख्यातं तत्कुत्रोपयुक्तम्, इति चेदत्र केचित् "द्वयोरेकतरस्य वाऽप्यसन्निकृष्टाऽर्थपरिच्छित्तिः प्रमा" अ० १ सू० ८७ इति साङ्ख्यसूत्रात् पौरुषेयो बोधो बुद्धिवृत्तिश्चेत्युभयमपि प्रमेत्याख्यायते साङ्ख्यैः। एवं च बौद्धप्रमाऽपेक्षया चक्षुरादीनां करणत्वव्यवहारः, पौरुषेयबोधापेक्षया च बुद्धिवृत्तेः करणत्वव्यवहार इति, अयं घट इत्याद्याकारां बौद्धप्रमां प्रति चक्षुरादे, करणत्वम्, अहं घटं जानामीत्याद्याकारं पौरुषयबोधं प्रति बुद्धिवृत्तेः करणत्वमिति यावद् इति प्राहुः। अत्रेदं तत्त्वं, साङ्ख्यनये कश्चिदर्थः प्रमाण यथा चक्षुरादिः, कश्चित्प्रमाप्रमाणोभयरूपो यथा बुद्धिवृत्ति, कश्चित्प्रमातैव यथा बुद्धिप्रतिबिम्बितं चैतन्यं, कश्चित्साक्षी, यथा बुद्धिवृत्त्युपहिता चितिरित्यादि। अपरे तु न प्रमाद्वयस्वीकार आवश्यकस्तथा हि अर्थसन्निकृष्टेष्विन्द्रियेषु सत्सु बुद्धितत्त्वस्य तमोऽभिभवे सति यः सत्त्वसमुद्रेकः सोऽध्यवसायो बुद्धिवृत्तिः प्रमाणम्। अनेन यश्चितिशक्तेरनुग्रहः=स्वप्रतिबिम्बिते स्वधर्माणां चैतन्ये समर्पणं तत्फलं प्रमेति। अत एवैतद्भाष्ये पौरुषेयबोधस्यैव प्रमात्वमुक्तं, न बौद्धबोधस्य। अत एव च 'द्वयोरेकतरस्य वा, इत्यनियमोऽभिहितो वाकारेण। चक्षुरादिषु प्रमाणव्यवहारस्तु परम्परयैवेत्यवधेयमिति प्राहुरत्र युक्ताऽयुक्तत्वं सुधीभिरालोचनीयम् इति।

भा० अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः संबन्धो यस्तद्विषया सामान्याऽवधारणप्रधाना वृत्तिरनुमानम्।

टी० प्रत्यक्षाऽनन्तरं[1] प्रवृत्त्यादिलिङ्गकश्रोतृबुद्ध्यनुमानप्रभवसंबन्धदर्शनसमुत्थतयाऽऽगमस्याऽनुमानजत्वादनुमितस्य चाऽऽगमेनान्वाख्यानाद् आगमात्प्रागनुमानं लक्षयति "अनुमेयस्य" इति। जिज्ञासितधर्मविशिष्टो धर्म्यनुमेयः[2]। तस्य तुल्यजातीयाः = साध्यधर्मसामान्येन समानाऽर्थाः सपक्षास्तेष्वनुवृत्त इत्यनेन विरुद्धत्वम्, असाधारणधर्मत्वं[3] च साधनधर्मस्य निराकरोति। भिन्नजातीया असपक्षास्ते च सपक्षादन्ये तद्विरुद्धास्तदभाववन्तश्च तेभ्यो व्यावृत्तस्तदनेन साधारणाऽनैकान्तिक-

टि० (१) "उभयं महाविषयं शब्दश्च प्रत्यक्षं च। कथमिति? प्रत्यक्षेणाऽपि सामान्यविशेषतद्वतां ग्रहणं, शब्देनाऽपि" इत्युद्द्योतकराऽऽचार्य्योक्तेः प्रत्यक्षशब्दयोः सारूप्येण, अनुमानस्य च सामान्यविषयत्वेन वैरूप्यात् प्रत्यक्षाऽनन्तरमागम एव निर्वक्तव्य इति ये मन्यन्ते तान् प्रत्याह "प्रत्यक्षाऽनन्तरम्" इति। प्रत्यक्षाऽनन्तरमागमात् प्रागनुमानं लक्षयतीति संबन्धः। प्राङ्निरूपणीयत्व उपजीव्यत्वं हेतुमाह "आगमस्याऽनुमानजत्वादित्यादि"। तथा चागमस्याऽनुमानोपजीवकत्वादनुमानाऽनन्तरमेव निरूपणीयत्वमित्यर्थः। यत्त्वनुमितिग्रन्थे मथुरानाथेनोक्तं "यद् यदुपजीवकं तत् तन्निरूपणाऽनन्तरं निरूप्यमिति—नियमोऽसार्वत्रिक" इति तत् प्रौढिवादेनैव। अत एवाग्रे, स्वतन्त्रेच्छस्येतिन्यायेनेच्छाया एव बीजत्वादिलेवोक्तं तेन, न तु काचिद्युक्तिरुपन्यस्तेत्यलम्। अनुमानस्योपजीव्यत्वे हेतुमाह "प्रवृत्त्यादिलिङ्गक" इत्यादि। प्रवृत्त्यादिलिङ्गकं यत् श्रोतृज्ञानाऽनुमानं तदेव प्रभवः=कारणं यस्य संबन्धदर्शनस्य=शक्तिग्रहस्य तस्मात् समुत्पन्नत्वेनेत्यर्थः। अत्रेदं बोध्यम्। गामानयेतिप्रयोजकवृद्धवचनश्रवणसमनन्तरं मध्यमवृद्धस्य गवानयनं दृष्ट्वा व्युत्पित्सुर्बाल इत्थमाकलयति। एतत्प्रवृत्तिरेतत्कार्य्यज्ञानपूर्विका स्वतन्त्रप्रवृत्तित्वान्मदीयस्वतन्त्रप्रवृत्तिवदिति। तथैव स्वात्मदृष्टान्तेन प्रवर्त्तकज्ञाने शब्दपूर्वकत्वं चाऽनुमाय शब्दाऽनन्तरभाविनि तस्मिन् शब्दस्य शक्तिं गृह्णाति। तदनु च प्रयोगान्तरेषु गां बधानाऽश्वमानयेत्यादिषु आनयनगोशब्दयोरुद्वारे तदर्थयोरप्युद्धारात् प्रक्षेपे च प्रक्षेपदर्शनादन्वयव्यतिरेकाभ्यां गवादिविशेषेषु पदविशेषस्य सामर्थ्यं गृह्णातीति स्फुटमेवाऽऽगमस्याऽनुमानजत्वमिति।

(२) अनुमेयः=साध्यविशिष्टः पक्ष इति यावत्।

(३) विरुद्धत्वम्=साध्यव्यापकीभूताऽभावप्रतियोगित्वम्। असाधारणधर्मत्वम्=सपक्षविपक्षव्यावृत्तत्वम्।

भा० यथा, देशान्तरप्राप्ते[१]र्गतिमच्चन्द्रतारकं चैत्रवद्, विन्ध्यश्च

टी० त्व[२]मपाकरोति । संबध्यत इति संबन्धो लिङ्गम् । अनेन पक्षधर्मतां दर्शयन्नसिद्धतां[३] निवारयति। तद्विषया = तन्निबन्धना। षिञ् बन्धने इत्यस्माद् विषयपदव्युत्पत्तेः। 'सामान्याऽवधारणे'तिप्रत्यक्षविषयाद् व्यवच्छिनत्ति।संबन्धसंवेदनाधीनजन्माऽनुमानं[४]विशेषेषु संबन्धग्रहणाऽभावेन सामान्यमेव सुकरसंबन्धग्रहणं गोचरयतीति । उदाहरणमाह "यथा" इति । चो—हेत्वर्थे । विन्ध्योऽगतिर्यतस्तस्मात्तस्याऽप्राप्तिः।

टि० (१) देशान्तरप्राप्तेः=ननु कथं देशान्तरप्राप्तेर्लिङ्गत्वम् । न हि मार्त्तण्डस्य देशान्तरप्राप्तिरध्यक्षं कैश्चिदीक्ष्यते । देशान्तरं खलु नभो दिग्देशो वा वाच्यम् । तच्चोभयमप्यप्रत्यक्षम्। न च, दिक् प्रत्यक्षा, अङ्गुल्या व्यपदेशाच्चन्द्रवदिति साम्प्रतम् । अरूपाया दिशो बाह्यकरणप्रत्यक्षाऽसम्भवात् । कथन्तर्ह्यङ्गुल्या व्यपदेश इति चेद् दिग्देशसंबन्धिवृक्षादीन् दिगित्युपचर्य्याऽङ्गुल्या व्यपदेश इति गृहाण । एवञ्च प्रत्यक्षाऽप्रत्यक्षवृत्तिसंयोगस्याप्रत्यक्षत्वान्नाऽतीन्द्रियदेशान्तरप्राप्तेर्लिङ्गत्वमिति चेद्, अत्राऽऽहुरुद्द्योतकराऽऽचार्य्याः—"नैवेदमादित्यगत्यनुमानं साक्षात्, किन्तर्हि देशान्तरप्राप्तिमानादित्योऽचलचक्षुषो व्यवधानाऽनुपपत्तौ दृष्टस्य पुनर्दर्शनाऽविषयत्वाच्चैत्रवदिति देशान्तरप्राप्तिमनुमाय तया गत्यनुमानमित्यऽदोष इति । अधिकं न्यायवार्त्तिके द्रष्टव्यम् । चैत्रवदित्यन्वयी दृष्टान्तो, विन्ध्यश्चेति व्यतिरेकीति बोध्यम् ।

(२) साधारणाऽनैकान्तिकत्वम्=सपक्षविपक्षवृत्तित्वम् ।

(३) असिद्धतां=पक्षे हेत्वभावरूपां स्वरूपाऽसिद्धताम् ॥

(४) संबन्धसंवेदनाऽधीनजन्माऽनुमानं=व्याप्तिज्ञानाऽधीनसत्ताकमनुमानं सामान्यमेव गोचरयतीतिसंबन्धः। तत्र हेतुगर्भितं विशेषणमाह "सुकरसंबन्धग्रहणमिति । न ह्यसर्वज्ञेन सर्वा व्यक्तयो ज्ञायन्ते तत्तद्व्यक्तीनामनन्तत्वादतस्तत्र संबन्धग्रहणं न सुकरमिति भावः। तदेवाह "विशेषेष्वित्यादि"। नन्वेवमग्निविशेषस्याऽगृहीतसंबन्धस्याऽनुमानाऽगोचरत्वात् सामान्यमेवाऽनुमेयम् । तच्च प्रागेव संबन्धग्रहसमयेऽवगतम् । तथाच कथं न सिद्धसाध्यता कथं वा ज्ञातज्ञापकत्वेन प्रामाण्यम् । यथाहुः "विशेषेऽनुगमाऽभावः सामान्ये सिद्धसाध्यता। अनुमाभङ्गपङ्केऽस्मिन्निमग्ना वादिदन्तिनः" इति चेद् अत्राहुः शास्त्रदीपिकाकाराः, अवगतस्याऽपि सामान्यस्य देशान्तरकालान्तरसंबन्धस्याऽगृहीतस्य ग्रहणात् प्रामाण्यसम्भवादुपपन्नं प्रमेयत्वमिति । किञ्च यद्यप्यग्निसामान्यं तावद् गृहीतमेव, पर्वतोऽपि प्रत्यक्षेणाऽवगत एव तथाप्यग्निविशिष्टः पर्वतो न केनाऽप्यवगतः सोऽनुमेयो भविष्यतीति । अनेनैवाशयेन वाचस्पत्ये साध्यधर्मविशिष्टो धर्म्यनुमेय इत्यभिहितं पूर्वत्रेत्यवधेयम् ।

भा०अप्राप्तिरगतिः । आप्तेन दृष्टोऽनुमितो वाऽर्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः[१]। यस्याऽश्रद्धेयार्थो वक्ता[२] न दृष्टाऽनुमितार्थः स आगमः प्लवते । मूलवक्तरि तु दृष्टाऽनुमितार्थे निर्विप्लवः स्यात् ॥७॥

---

टी०अतो गतिनिवृत्तौप्राप्तेर्निवृत्तेर्देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवदिति सिद्धम्। आगमस्य वृत्तेर्लक्षणमाह "आप्तेन" इति । तत्त्वदर्शन-कारुण्य-करणपाटवाऽभिसंबन्ध आप्तिः, तया वर्त्तत इत्याप्तस्तेन दृष्टोऽनुमितो वाऽर्थः। श्रुतस्य पृथगनुपादानं, तस्य दृष्टाऽनुमितमूलत्वेन ताभ्यामेव चरितार्थत्वात्। आप्तचित्तवर्त्तिज्ञानसदृशस्य ज्ञानस्य श्रोतृचित्ते समुत्पादः स्वबोधसंक्रान्तिस्तस्यै अर्थ उपदिश्यते = श्रोतृहिताऽहितप्राप्तिपरिहारोपायतया प्रज्ञाप्यते । शेषं सुगमम् । यस्याऽऽगमस्याऽश्रद्धेयार्थो वक्ता यथा यान्येव दश दाड़िमानि तान्येव षड्पूपा भविष्यन्तीति, न दृष्टाऽनुमितार्थो, यथा—"चैत्यं[३] वन्देत् स्वर्गकाम इति" स आगमः प्लवते । नन्वेवं मन्वादीनामप्यागमः प्लवेत । न हि तेऽपि दृष्टाऽनुमिताऽर्था इत्यत आह "मूलवक्तरि तु" इति । मूलवक्ता हि तत्रेश्वरो दृष्टाऽनुमितार्थः । यथाहुः "यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्त्तितः ।स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि स[४]" इतीत्यर्थः ॥७॥

---

टि० (१) आप्तेन दृष्टो = ज्योतिष्टोमादिः, अनुमितो = अष्टकादिरूपोऽर्थः परत्र स्वबोधसङ्क्रान्तये येन शब्देनोपदिश्यते तस्माच्छब्दाद् या श्रोतुस्तदर्थविषया वृत्तिः स आगम इत्यर्थः ।

(२) आप्तपदस्य कृत्यमाह "यस्य" इति । यस्याऽऽगमस्य वक्ताऽश्रद्धेयार्थः =अनाप्तः स आगमः प्लवते = प्रामाण्यपथं नाश्नुते, प्रमाणवृत्तिजननाऽसमर्थ इति यावत् । अनाप्तत्वे हेतुमाह "न दृष्टाऽनुमितार्थः = स्वबुद्ध्यभ्यूहितार्थवादी इति भावः ।

(३) चैत्यं = बुद्धाऽऽयतनं, बुद्धप्रतिमा वा ।

(४) सर्वज्ञानमयो हि सः, स = मनुः सर्वज्ञानमयः = उत्सन्नविप्रकीर्णपठ्यमानवेदार्थाऽभिज्ञत्वेन सर्वज्ञ इत्यर्थः । मेधातिथिगोविन्दराजौ तु 'सर्वज्ञानैर्निर्मित्त इव वेद इत्येवं वेदविशेषणतामाहतुः । ननु यदि सर्व एव स्मार्त्ता धर्मा वेदेऽभिहिता हन्त तर्हि कथमनुवादकत्वेन मन्वादिस्मरणानां प्रामाण्यमिति चेद्, अत्र केचित्– इदानीमुत्सन्नास्ताः शाखा यास्वमी स्मार्त्ता धर्मा आसन्, मन्वादिभिश्च ता उपलभ्य ते धर्मा

## सू० विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥८॥

**भा० स कस्मान्न प्रमाणम् ?।**

टी० "विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" ॥८॥ विपर्य्यय इति लक्ष्यनिर्देशो, मिथ्याज्ञानमित्यादि लक्षणम्। यज् ज्ञानप्रतिभासि रूपं(१) तद्रूपाऽप्रतिष्ठमेवातद्रूपप्रतिष्ठं, यथाऽश्राद्धभोजीति। अतः संशयोऽपि संगृहीतः। एतावाँस्तु विशेषः—तत्र *ज्ञानाऽऽरूढैवाप्रतिष्ठता, द्विचन्द्रादेस्तु बाधज्ञानेन। नन्वेवं विकल्पोऽपि तदरूपाऽप्रतिष्ठानाद्विचारतो विपर्य्ययः प्रसज्ज्येतेत्यत आह "मिथ्याज्ञानमिति"। अनेन हि सर्वजनीनाऽनुभवसिद्धो बाध उक्तः। स चाऽस्ति विपर्य्यये, न तु विकल्पे। तेन व्यवहारात्(२) पण्डितरूपाणामेव(३) तु विचारयतां तत्र बाधबुद्धेरिति। चोदयति "स कस्मान्न प्रमाणम्" इति। नोत्तरेणोपजातविरोधिना ज्ञानेन पूर्वं बाधनीयमपि तु पूर्वेणैव प्रथममुपजातेनाऽनुपजातविरोधिना परमिति भावः।

---

उपनिबद्धा इति न पुनरुक्तत्वं, न वा वेदाऽनभिहितत्वमिति प्राहुः। अन्ये त्वद्यत्वेऽपि पठ्यन्त एव ताः शाखाः, किन्तु विप्रकीर्णास्ते धर्माः। कस्यांचिच्छाखायामष्टकादीनां कर्मणामुत्पत्तिः, कस्यां चिद् देवता, क्वचिन्मन्त्रः, क्वचिद् द्रव्यम्, इत्येवं विप्रकीर्णानां मन्वादयोऽङ्गोपसंहारं सुखाऽवबोधार्थं चक्रुरिति प्राहुः। तत्राऽन्तिम एव पक्षो ज्यायान्। यथाहुः—
"शाखाः काश्चित्समुत्सन्ना नैष पक्षो मतो मम" इति।

(१) संशयसङ्ग्रहायातद्रूपप्रतिष्ठमित्यत्र नञः प्रसज्ज्यप्रतिषेधार्थत्वमाह "यज्ज्ञानप्रतिभासि" इति। यत्प्रकारकं यद्विशेष्यकं रूपं ज्ञानेन प्रतिभासते तस्मिन् रूपे यज्ज्ञानं न प्रतिष्ठते किन्तूत्तरकालिकज्ञानेन बाध्यते तज्ज्ञानमेककोटिकं वा द्विकोटिकं वा सर्वं तद्रूपाऽप्रतिष्ठत्वेनातद्रूपप्रतिष्ठमुच्यते तेन संशयोऽपि संगृहीत इत्यर्थः। नञः प्रसज्ज्यप्रतिषेधार्थत्वे दृष्टान्तमाह "अश्राद्धभोजी" इति। यथाऽश्राद्धभोजीत्यत्र नाऽश्राद्धं भुङ्क्ते इति विग्रहस्तथात्वेऽश्राद्धभोजनाऽभावकाले व्रतलोपप्रसङ्गान्नाऽपि न श्राद्धभोजीति विग्रहोऽव्ययपूर्वपदप्रकृतिस्वरेणाऽऽद्युदात्तप्रसङ्गात्। किन्तु न भुङ्क्ते श्राद्धं य इत्येवन्नञः क्रियाऽन्वयित्वेनासमर्थसमासस्तथाऽत्राऽपि तद्रूपे न प्रतिष्ठत इत्यतद्रूपप्रतिष्ठमित्येवं विग्रह इति भावः। एतच्च "चूते" अ० २ पा० २ आ० १ सू० ८० इति सूत्रे महाभाष्ये स्पष्टम्। * तत्र = संशये।

(२) एतेन विपर्य्ययलक्षणे विकल्पभिन्नत्वं विशेषणं देयमिति भिक्षूक्तिरयुक्तेति बोध्यम्। मिथ्याज्ञानमिति विशेषणेनैवातिव्याप्तेर्निराकृतत्वात्। (३) प्रशस्तविदुषाम्।

भा० यतः प्रमाणेन बाध्यते, भूतार्थविषयत्वात् प्रमाणस्य।

टी० परिहरति। "यतः प्रमाणेन" इति। यत्र हि पूर्वाऽपेक्षा परोत्पत्तिस्तत्रैवम्[1]। इह तु स्वस्वकारणादन्योऽन्याऽनपेक्षे ज्ञाने जायेते, तेनोत्तरस्य पूर्वमनुपमृद्योदयमनासादयतस्तदपबाधाऽऽत्मैवोदयो, न तु पूर्वस्योत्तरबाधाऽऽत्मोदयस्तस्य तदानीमप्रसक्तेः। तस्मादनुपजातविरोधिता बाध्यत्वे हेतुरुपजातविरोधिता च बाधकत्वे। तस्माद् भूतार्थविषयत्वात्प्रमाणेनाऽप्रमाणस्य बाधनं सिद्धम्।

टि० (१) यत्र हि पूर्वाऽपेक्षा परोत्पत्तिः=यथा पूर्वश्रुत्यपेक्षा स्मृत्युत्पत्तिः। स्मृतीनां हि न साक्षात्प्रामाण्यं, किन्तु श्रुतिकल्पनाद्वारैवाऽतोऽस्ति स्मृतेः श्रुतिसाऽपेक्षता। यदाहुः— "स्वातन्त्र्येण प्रमाणत्वं स्मृतेस्तावन्न सम्मतम्" इति। तत्रैवम्=तस्मिन् स्थले, एवं पूर्वपरयोर्विरोधे सति पूर्वेण परस्य बाधः। यथा "औदुम्बरीं स्पृष्ट्वोद्गायेद्" औदुम्बरी सर्वा वेष्टयितव्या" इतिश्रुतिस्मृतिविधेययोरौदुम्बरीस्पर्शतत्सर्ववेष्टनयोर्विरोधे पूर्वभूतया निरपेक्षया। स्पर्शश्रुत्या सापेक्षायाः सर्ववेष्टनस्मृतेर्बाध इत्यर्थः। स्पष्टं चैतद्, "विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्" अ० १। पा० ३। सू० ३। अधि० २। इति जैमिनीयसूत्रे तन्त्रवार्त्तिके। यद्वा यत्र=श्रुतिलिङ्गादिस्थले पूर्वाऽपेक्षा परोत्पत्तिस्तत्रैव पूर्वेण परस्य बाध इत्यर्थो बोध्यः। लिङ्गस्याऽपि हि न साक्षाद्विनियोजकत्वमपि तु श्रुतिकल्पनाद्वाराऽतोऽस्ति लिङ्गस्य श्रुतिसापेक्षत्वम्, अस्ति च तयोर्विरोधे पूर्वेण परस्य बाध्यत्वं। तथाचाऽऽह भगवान् जैमिनिः "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षाद्, अ० ३। पा० ३। सू० १४। अधि० ७ इति। उदाहरणान्याकरे स्पष्टानीत्युदास्यते विस्तरभीरुणा। यत्र=प्रत्यक्षाऽनुमानस्थलं पूर्वप्रत्यक्षापेक्षा पराऽनुमानोत्पत्तिस्तत्रैव पूर्वेण परस्य बाधो यथा वह्निशैत्याऽनुमानस्य प्रत्यक्षेणौष्ण्यग्राहिणेति लौकिकमुदाहरणमप्यत्र बोध्यम्। यत्र तु निरपेक्षमेव ज्ञानद्वयं जायते तत्र न पूर्वेण परस्य बाधः। किन्तर्हि परेण पूर्वस्यैवेत्याह "इह त्वित्यादिना। यत इह=भ्रमस्थलेऽन्योऽन्यनिरपेक्षे एव द्विचन्द्रैकचन्द्रज्ञाने रजततदभावज्ञाने वा जायेते तेन हेतुना तदपबाधात्मा=पूर्वज्ञानबाधरूप एव परस्योदयो, न तूत्तरज्ञानबाधात्मा परस्योदय इत्यर्थः। उत्तरज्ञानस्य बाधकत्वे हेतुगर्भितं विशेषणमाह "पूर्वमनुपमृद्योदयमनासादयतः"=पूर्वज्ञानबाधमन्तरा स्वसत्तामलभमानस्येत्यर्थः। पूर्वज्ञानस्य बाधकत्वाऽभावे हेतुमाह "तस्य तदानीमप्रसक्तेः=उत्तरज्ञानस्य पूर्वज्ञानकाले अप्राप्तेरित्यर्थः। रजतज्ञानात् प्राक् प्रापकाऽभावेन शुक्तेरप्राप्तायाः प्रतिषेधाऽसम्भवान्न पूर्वज्ञानस्य बाधकत्वम्। यदाहुः "प्रसक्तं हि प्रतिषिध्यत" इति भावः। एतत्सर्वम् अपच्छेदा-

भा० तत्र प्रमाणेन बाधनमप्रमाणस्य दृष्टं, तद्यथा, द्विचन्द्रदर्शनं सद्विषयेणैकचन्द्रदर्शनेन बाध्यत इति। सेयं पञ्चपर्वा भवत्यविद्या,[१] अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः क्लेशा इति । एत एव[२] स्व-

---

टी० उदाहरणमाह "तत्र प्रमाणेन" इति । तस्य कुत्सितत्वं हानाय दर्शयति "सेयं पञ्च" इति । अविद्यासामान्यमविद्याऽस्मितादिपञ्चसु पर्वस्वित्यर्थः। अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वष्टसु अनात्मस्वात्मबुद्धिरविद्या तमः । एवं योगिनामष्टस्वणिमादिकेष्वैश्वर्य्येष्वश्रेयःसु श्रेयोबुद्धिरष्टविधो मोहः पूर्वस्माज्जघन्यः । स चाऽस्मितोच्यते । तथा योगेनाऽष्टविधम् ऐश्वर्य्यमुपादाय सिद्धो भूत्वा दृष्टाऽऽनुश्रविकान् शब्दादीन्

---

टि० ऽधिकरणे स्पष्टम्, यथाह भगवान् जैमिनिः "पौर्वापर्य्ये पौर्वदौर्बल्यं प्रकृतिवद्" । अ० ६ । पा० ५ । सू० ५४। अधि० १९ इति । विवृतं चैतत्कुमारिलभट्टैः । यथाहुः "पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्। अन्योऽन्यनिरपेक्षाणां यत्र जन्म धियां भवेद्॥ आगामित्वादबाधित्वा परं पूर्वं हि जायते । पूर्वं पुनरबाधित्वा परं नोत्पद्यते क्वचिद्" इति। सूत्रार्थस्तु संक्षेपेणोच्यते। तथाहि, ज्योतिष्टोमे प्रातःसवनेऽन्योऽन्यं संबध्य यज्ञशालातो निर्यातानां बहिष्पवमानेन स्तोष्यमाणानामृत्विजाम् "अध्वर्य्यु प्रस्तोताऽन्वारभत" इत्यादिपूर्वोक्ताऽऽरम्भणविच्छेदनिमित्तं प्रायश्चित्तमाम्नायते"यद्युद्गाताऽपच्छिद्येतादक्षिणो यज्ञः संस्थाप्योऽथाऽन्यश्चाहर्त्तव्यस्तत्र तद् दद्याद्यत्पूर्वस्मिन् दास्यन् स्याद् प्रतिहर्त्ताऽपच्छिद्येत सर्ववेदसं (सर्वस्वं)दद्यादिति। तत्रोद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे सति विरुद्धप्रायश्चित्तयोः समुच्चयाऽसंभवात् किं पूर्वनिमित्तकं कार्य्यमुत परनिमित्तकमिति संशये, अनुपजातविरोधित्वात्पूर्वमिति पूर्वपक्षे, राद्धान्तः पौर्वापर्य्ये सति निमित्तयोः पूर्वस्य नैमित्तिकस्य दौर्बल्यम्, उत्तरस्य निरपेक्षस्य तद्बाधकतयोदितत्वात्, पूर्वोदयकाल उत्तरस्याऽप्राप्तत्वेन पूर्वेण बाध्यत्वाऽयोगात् तदुक्तं "पूर्वम्परमजातत्वादबाधित्वैव जायते।परस्याऽनन्यथोत्पादान्न त्वबाधेन सम्भव" इति, यथा हि प्रकृतौ क्लृप्तोपकाराः कुशा प्रथममतिदेशेन विकृतौ प्राप्ताः कल्प्योपकारतया चरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते तद्वदिति दृष्टान्तार्थः ।

(१) येयं विपर्य्ययवृत्तिरुक्ता सैवेयं पञ्चपर्वाऽविद्योच्यतेऽतोऽविद्याऽस्मितारागादिवृत्तीनामनभिधानेऽपि न दोषः। विपर्य्ययवृत्त्यैवाऽविद्यादिपञ्चवृत्तीनां संग्रहादिति भावः पञ्चपर्वाण्याह "अविद्या" इति ।

(२) "तमो मोहो महामोहस्तामिस्रो ह्यन्धसञ्ज्ञकः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मन" । इति स्मृतिसिद्धमन्वर्थसञ्ज्ञापञ्चकं क्लेशानामाह । "एत एव स्वसञ्ज्ञाभिः" अविद्यादय एव स्वाऽनुरूपसञ्ज्ञाभिस्तमआदय उच्यन्त इति भावः ।

भा० संज्ञाभिस्तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति । एते[१] चित्तमलप्रसङ्गेनाऽभिधास्यन्ते ॥ ८ ॥

सू० शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥९॥

भा० स न प्रमाणोपारोही, न विपर्य्ययोपारोही च । वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते । तद्यथा चैतन्यं पुरुषस्य स्वरूपमिति । यदा चितिरेव पुरुषस्तदा किमत्र[२] केन

टी० दश विषयान् भोक्ष्य इत्येवमात्मिका प्रतिपत्तिर्महामोहो रागः । एवमेतेनैवाऽभिसन्धिना प्रवर्त्तमानस्य केनचित्प्रतिबद्धत्वादणिमादीनामनुत्पत्तौ तन्निबन्धनस्य दृष्टाऽनुश्रविकविषयभोगस्याऽसिद्धेः प्रतिबन्धकविषयः क्रोधः । स तामिस्राख्यो द्वेषः । एवमणिमादिगुणसम्पत्तौ दृष्टाऽनुश्रविकविषयप्रत्युपस्थाने च कल्पान्ते सर्वमेतन्नङ्क्ष्यतीति यस्त्रासः सोऽभिनिवेशोऽन्धतामिस्रः । तदुक्तं "भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः । तामिस्रोऽष्टादशधा तथा भवत्यन्धतामिस्र" इति ॥ ८ ॥

"शब्दज्ञानाऽनुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥ ननु शब्दज्ञानाऽनुपाती चेदागमप्रमाणाऽन्तर्गतो विकल्पः प्रसज्ज्येत, निर्वस्तुकत्वे वा विपर्य्यः स्याद् इत्यत आह "स न" इति । स न प्रमाणान्तर्गतो, विपर्य्ययान्तर्गतो वा, कस्माद्, यतः "वस्तु" इति । वस्तुशून्यत्वेऽपि इति—प्रमाणान्तर्गतिं निषेधति । शब्दज्ञानमाहात्म्यनिबन्धन इति विपर्य्ययान्तर्गतिम् ।

एतदुक्तं भवति, क्वचिद्[३] अभेदे भेदमारोपयति, क्वचित्[४] पुनर्भिन्नाना-

टि० (१) ऐते = अविद्यादयः पञ्च क्लेशा इत्यर्थः ।

(२) 'किमत्र' इत्यादिना वस्तुशून्यत्वमभिहितं, 'भवति च व्यपदेशे वृत्तिः' इत्यनेन च शब्दज्ञानाऽनुपातित्वम् । तथा च यद्यप्यत्यन्ताऽभेदान्नास्त्येवाऽत्र विशेषणविशेष्यभावस्तथापि यादृशः, चैत्रस्य गौरिति यथार्थविशेषणविशेष्यभावे सति बोधो विवेकिनां भवति तादृश एव बोधश्चैतन्यं पुरुषस्य स्वरूपमित्येतस्माद्वाक्याद् भवत्यतो वस्तुशून्यत्वेऽपि शब्दज्ञानाऽनुपातित्वाद् भवति विकल्पोदाहरणमिदम् इति भावः ।

(३) राहोः शिर इत्यादौ ।

(४) अयः पिण्डं दग्धृ इत्यादौ । अत्र हि दग्धृत्वं वह्निनिष्ठं, न लोहपिण्डनिष्ठमिति स्पष्टमेव ।

भा० व्यपदिश्यते । भवति च व्यपदेशे वृत्तिर्यथा चैत्रस्य गौरिति । तथा प्रतिषिद्धवस्तुधर्मो निष्क्रियः पुरुषः, तिष्ठति बाणः स्थास्यति स्थित इति । गतिनिवृत्तौ[१] धात्वर्थमात्रं गम्यते ।

---

टी० मभेदम्। ततो भेदस्याऽभेदस्य च वस्तुतोऽभावात्तदाभासो विकल्पो न प्रमाणं, नाऽपि विपर्य्ययो व्यवहाराऽविसंवादादिति। शास्त्रप्रसिद्धमुदाहरणमाह। "तद्यथा" इति । किं विशेष्यं केन व्यपदिश्यते = विशेष्यते, नाऽभेदे विशेष्यविशेषणभावो, न हि गवा गौर्विशेष्यते किन्तु भिन्नेन चैत्रेण । तदिदमाह "भवति च व्यपदेशे वृत्तिः" इति । व्यपदेश्यव्यपदेशकयोर्भावो व्यपदेशो = विशेषणविशेष्यभाव इति यावत्, तस्मिन् वृत्तिर्वाक्यस्य यथा चैत्रस्य गौरिति। शास्त्रीयमेवोदाहरणान्तरं समुच्चिनोति "तथा" इति। प्रतिषिद्धो वस्तुनः = पृथिव्यादेर्धर्मः = परिस्पन्दो यस्य स तथोक्तः। कोऽसौ निष्क्रियः पुरुषः, न खलु साङ्ख्यीये राद्धान्तेऽभावो नाम कश्चिदस्ति वस्तुधर्मो येन पुरुषो विशेष्येतेत्यर्थः । क्वचित्पाठः "प्रतिषिद्धा वस्तुधर्मा" इति। तस्यार्थः—प्रतिषेधव्याप्ताःप्रतिषिद्धाः, न वस्तुधर्माणां तद्व्याप्यता, भावाभावयोरसंबन्धाद्, अथ च तथा प्रतीतिरिति । लौकिकमुदाहरणमाह "तिष्ठति बाण" इति। यथा हि पचति भिनत्तीत्यत्र पूर्वापरीभूतः कर्मक्षणप्रचय एकफलाऽवच्छिन्नः प्रतीयत इत्येवं तिष्ठतीत्यत्राऽपि पूर्वापरीभावमेवाऽऽह । "स्थास्याति स्थित" इति । ननु भवतु पाकवत् पूर्वापरीभूतयाऽवस्थानक्रियया बाणाद् भिन्नया बाणस्य व्यपदेश इत्यत आह "गतिनिवृत्तौ धात्वर्थमात्रं गम्यते" इति। गतिनिवृत्तिरेव तावत् कल्पिता तस्याऽपि भावरूपत्वं तत्राऽपि पूर्वापरीभाव इत्यहो कल्पनापरम्परेत्यर्थः। अभावः कल्पितो भाव इव चानुगत इव च सर्वपुरुषेषु गम्यते, न पुनः ।

---

(१) तिष्ठति बाणः स्थास्यति स्थित इति गतिनिवृत्तौ = गतिनिवृत्तिविषयकविकल्पे वर्तमानत्वादिविशिष्टं स्थाधात्वर्थमात्रं पारमार्थिकतया प्रतीयते। कर्तृत्वं, कर्तृत्वस्य वर्त्तमानत्वादिकं, प्रत्ययत्रयार्थस्तु विकल्पितः, बाणे गतिनिवृत्त्यनुकूलकृत्यभावादिति विज्ञाः ।

भा० तथाऽनुत्पत्तिधर्मा पुरुष इति । उत्पत्तिधर्मस्याऽभावमात्रमवगम्यते, न पुरुषान्वयी धर्मः । तस्माद् विकल्पितः स[1] धर्मस्तेन चास्ति व्यवहार इति ॥ ९ ॥

सू० अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

---

टी० पुरुषव्यतिरिक्तो धर्मः कश्चिदित्युदाहरणान्तरमाह—"तथाऽनुत्पत्तिधर्मा" इति । प्रमाणविपर्य्ययाभ्यामन्या न विकल्पवृत्तिरिति वादिनो बहवः प्रतिपेदिरे । तत्प्रतिबोधनायोदाहरणप्रपञ्च इति मन्तव्यमिति ॥ ९ ॥ ॥ "अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥१०॥ अधिकृतं हि वृत्तिपदमनुवादकं, प्रमाणविपर्य्ययविकल्पस्मृतीनां वृत्तित्वं प्रति परीक्षकाणामविप्रतिपत्तेरतस्तदनूद्यते विशेषविधानाय । निद्रायास्तु वृत्तित्वे परीक्षकाणामस्ति विप्रतिपत्तिरिति वृत्तित्वं विधेयं, न च प्रकृतमनुवादकं[2] विधानाय कल्पत इति पुनर्वृत्तिग्रहणम् । जाग्रत्स्वप्नवृत्तीनामभावस्तस्य प्रत्ययः=कारणं बुद्धिसत्त्वाच्छादकं तमस्तदेवाऽऽलम्बनं=विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा । बुद्धिसत्त्वे हि त्रिगुणे यदा सत्त्वरजसी अभिभूय समस्तकरणावरकमाविरस्ति तमस्तदा बुद्धेर्विषयाकारपरिणामाभावादुद्भूततमोमयीं बुद्धिमवबुध्यमानः पुरुषः सुषुप्तोऽन्तःसञ्ज्ञ[3] इत्युच्यते । कस्मात्पुनर्निरोध(रुद्ध) कैवल्ययोरिव वृत्त्यभाव एव न निद्रेत्यत आह ।

---

टि०(१) सः=अनुत्पत्तिरूपो धर्मः । अनेन वस्तुशून्यत्वमुक्तम् । शब्दज्ञानाऽनुपातित्वमाह 'तेन चास्तिव्यवहार' इति ।

(२) ननु पूर्वत्राऽनुवादकमपि वृत्तिपदमत्राऽनुवर्तमानं विधायकं भविष्यतीत्यत आह "न च प्रकृतमनुवादकं विधानाय कल्पते" न खल्वन्यत् प्रकृतमनुवर्त्तनादन्यद् भवति । न हि देशान्तरं सर्पन्ती सती गोधा गोधात्वं हित्वा सर्पत्वं भजतीति भावः । एतत् सर्वमर्थाधिकारपक्षे, शब्दाऽधिकारपक्षे तु स्पष्टार्थमेव वृत्तिपदमिति बोध्यम् । अर्थो हि विरुद्धधर्माध्यासं न सहते, शब्दस्तु येनाऽनुषज्ज्यते तेन योग्यतामपेक्ष्यैव संबध्यते । तदुक्तम् । 'शब्दस्तु खलु येन येन विशेषेणाऽभिसंबध्यते तस्य तस्य विशेषको भवति' इति ।

(३) अन्तःप्रज्ञ इति पाठान्तरम् । सुषुप्तस्थानोऽन्तःप्रज्ञ इति तु श्रौतः पाठः ।

भा० सा च संप्रबोधे[१] प्रत्यवमर्शात् प्रत्ययविशेषः ।

---

टी० "सा" इति । सा च संप्रबोधे प्रत्यमर्शात्=सोपपत्तिकात् स्मरणात्प्रत्ययविशेषः ।

---

टि० (१) सा च निद्रा प्रत्ययविशेष एव, न तु ज्ञानाऽभावः । कुतः ? संप्रबोधे=जाग्रदवस्थायां प्रत्यवमर्शात्=सुखमहमस्वाप्समित्यादिस्मरणसद्भावादित्यर्थः । एतेन "नाऽयं सौषुप्ताऽनुभवजन्यं स्मरणं, किं तर्ह्युत्थितस्येदानीमेव सौषुप्तज्ञानाऽभावाऽनुमानम् । न च सौषुप्तात्मनस्तदानीमननुभवात्तस्मिन् धर्मिणि ज्ञानाऽभावाऽनुमानाऽनुदयः । न ह्यप्रतिपन्ने प्रातश्चत्वरे धर्मिणि सायं समये तत्र गजाऽभावाऽनुमानोत्थानमिति साम्प्रतम् । पूर्वाऽपराऽवस्थयोरेकत्वप्रत्यभिज्ञानेन मध्यावस्थायामपि तत्सामान्येनोपनयाद्, इत्युदयनाचार्य्योक्तेर्धर्मिसिद्धिसद्भावाद्"इत्यपि निराकृतं वेदितव्यम् । धर्मिसद्भावेऽपि लिङ्गस्य दुर्वचत्वात् । न च, सौषुप्तात्मा दुःखादिज्ञानाऽभाववान् अस्मर्य्यमाणतदानीन्तनदुःखादित्वादिति सम्भवति । पथि गच्छतस्तृणादिस्पर्शेष्वस्मर्य्यमाणेष्वनैकान्तात् । नियमेनेति हेतुविशेषणेऽपि स्मरणाजनकनिर्विकल्पाद्यभावाऽसाधकत्वाच्च । ज्ञानसामग्रीवैकल्यलक्षणलिङ्गस्य चान्योऽन्याश्रयग्रस्तत्वेनाऽसम्भवात्, सामग्र्यभावाज्ज्ञानाऽभावाऽनुमानं, तदभावाच्च सामग्र्यभावाऽनुमानमित्यन्योऽन्याश्रयस्य सुवचत्वाद् । अविद्यासुखादिगोचराया अविद्यावृत्तेः स्वीकाराद् हेतोरसिद्धत्वाच्च । तदेतद् ध्वनयद्भिरुक्तं वाचस्पतिमिश्रैः "सोपपत्तिकात् स्मरणात्प्रत्ययविशेष" इति । अत्रेदमवधेयम् । योगनये सुषुप्तेश्चित्तवृत्तित्वाऽभ्युपगमाच्चित्तवृत्तिरेव सौषुप्ततमःसुखादिकं गोचरयति । औपनिषन्नये, बुद्धेः कारणात्मनाऽवस्थानं सुषुप्तिः– इत्यभ्युपगमात् सुषुप्तावन्तःकरणाऽभावेऽपि तद्वासनावासिताऽज्ञानोपहितचैतन्यस्य सद्भावात् सौषुप्ततमआदिकं साक्षिभास्यमिति । यत्त्वत्राऽपरिचितशाङ्करमतेन विज्ञानभिक्षुणाऽभाणि—'जाग्रत्स्वप्नवत् सुषुप्तिरपि चित्तस्यैव वृत्तिः, न त्वविद्यावृत्तिः । सुषुप्तौ तमः साक्षिभास्यमेव, न तत्र वृत्तिरस्ति–इत्याधुनिकवेदान्तिब्रुवमतं तु न युक्तम् । साक्षिण्यपरिणामिनि संस्काराऽभावात् स्मरणाऽनुपपत्तेः' इति । तन्मन्दम् । 'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति' इत्यादिश्रुतेः । "ज्ञानानामुपसंहारे बुद्धेः कारणतास्थितिः । वटबीजे वटस्येव सुषुप्तिरभिधीयते" इत्यादि स्मृतेश्च सुषुप्तावन्तःकरणस्याऽव्याकृतरूपेणाऽवस्थानाच्चित्तस्यैवाऽभावाच्चित्तवृत्तिः सुषुप्तिरिति तदुक्तेरसम्भवात् । अत एव बृहदारण्यके चतुर्थेऽजातशत्रुगार्ग्यसंवादे "यत्रैव सुप्तोऽभूद्" इत्युपक्रम्य "गृहीता वाग् गृहीतं चक्षुः गृहीतं श्रोत्रं गृहीतं मन" इत्यादिना सहेन्द्रियैरन्तःकरणस्य लयः सुषुप्तौ श्रूयते । अत एव गौड़पादाचार्य्यैः " लीयते हि सुषुप्तौ तन्निगृहीतं न लीयते "

भा० कथं, सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति, दुःखमहमस्वाप्सं स्त्यानं मे मनो भ्रमत्यनवस्थितं, गाढं मूढो-

---

टी० कथं? यदा हि सत्त्वसचिवं तम आविरस्ति तदेतादृशः प्रत्यवमर्शः सुप्तोत्थितस्य भवति[१] "सुखमहमस्वाप्सं प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति = स्वच्छीकरोति इति । यदा तु रजःसचिवं तम आविरस्ति तदेदृशः प्रत्यवमर्श इत्याह "दुःखमहमस्वाप्सम्" इति, स्त्यानम् = अकर्मण्यं मे मनः, कस्माद्, यतो भ्रमत्यनवस्थितम् । नितान्ताऽभिभूतरजःसत्त्वे तमःसमुल्लासे स्वापे प्रबुद्धस्य प्रत्यवमर्शमाह "गाढं मूढोऽहमस्वाप्सं गुरूणि मे गात्राणि

---

टि० इति चित्तलयालयेन सुषुप्तिसमाध्योर्भेदो निर्दिष्टः । अत एव च सुषुप्तेर्दैनंदिनप्रलयत्वं पौराणिकैराख्यायते । यद्यपि "प्राज्ञेनाऽऽत्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" बृ. उ. "सता सोम्य तदा सम्पन्नो भवति" छा. उ. "यदा सुप्तः स्वप्नं न कञ्चन पश्यति अथाऽस्मिन् प्राण एवैकधा भवति" कौ. उ. इत्यादिश्रुतिषु शुद्धे सद्रूपे ब्रह्मण्येव लयः श्रूयते, न त्वविद्यायां, तथाप्यज्ञानोपहित एव बोध्योऽन्यथा मुक्तस्येव पुनरुत्थानाऽभावप्रसङ्गात् । स्पष्टं चैतद् "बीजात्मकत्वाऽभ्युपगमात्सत" इत्यादिना "सुषुप्तप्रलययोः पुनरुत्थानाऽनुपपत्तिः स्यान्मुक्तानां च पुनरुत्पत्तिप्रसङ्ग" इत्यन्तेन माण्डूक्यगताऽऽगमप्रकरणेशाङ्करे । यच्चोक्तं "साक्षिणोऽपरिणामित्वेन न तद्भास्यत्वम्" इति । तदपि शाङ्करमताऽज्ञानपूर्वकम् । यतो हि, न तैरविद्यावृत्तिमद्वारीकृत्य साक्षिणो भासकत्वमास्थीयते, किन्नाम—अविद्यावृत्तिद्वारैव तदभ्युपेयते । न च द्वारोरीकारे कथं साक्षिभास्यत्वमिति रेकणीयम् । न हि वृत्तिं विना साक्षिवेद्यत्वं साक्षिभास्यत्वं किन्तर्हीन्द्रियाऽनुमानादिप्रमाणव्यापारमन्तरेण साक्षिविषयत्वमित्यभ्युपगमाद् । अत एव पद्मपादाऽऽचार्यैः साक्षिभास्यस्थलेऽहमित्याकाराऽन्तःकरणविषया वृत्तिरभ्युपगम्यते, सर्वज्ञमुनिभिश्च प्रातिभासिकरजतस्थले रजताऽऽकाराऽविद्यावृत्तिरभ्युपेयते । यथा चाऽन्तःकरणविनाशे तदधीनप्राणनक्रियादिसम्भवस्तथा व्युत्पादितमन्यत्रेति नाऽतिरोहितमुपनिषद्द्रष्टृशामित्युपरम्यते । चित्तविकाशमनुभवन्नात्मा जागर्त्तीत्युच्यते, तत्सङ्कोचं चाऽनुभवन् स्वपितीत्युच्यत इति चित्तसत्त्वाऽसत्त्वनिबन्धनाऽभिप्रायेण तु सूत्रकृता सुषुप्तेश्चित्तवृत्तित्वमुक्तमिति बोध्यम् । किञ्च, "समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" इति साङ्ख्यसूत्रव्याख्याने सुषुप्तौ बुद्धेर्विलयं वदन्नत्र च तदभावं वदन् कथन्न त्रपतेऽयं भिक्षुरिति स एव प्रष्टव्यः ।

(१) भवतीत्यस्याऽग्रे, इत्याहेति शेषो बोध्यः ।

भा० ऽहमस्वाप्सं गुरूणि मे गात्राणि क्लान्तं[१] मे चित्तमलसं मुषितमिव तिष्ठति इति । स खल्वयं प्रबुद्धस्य प्रत्ययवमर्शो न स्यादसति प्रत्ययानुभवे[२], तदाश्रिताः स्मृतयश्च तद्विषया न स्युः । तस्मात् प्रत्ययविशेषो निद्रा, सा च समाधावितरप्रत्ययवन्निरोद्धव्येति ॥ १० ॥

सू० अनुभूतविषयाऽसंप्रमोषः स्मृतिः ॥ ११ ॥

टी० क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठति" इति । साध्यव्यतिरेके हेतुव्यतिरेकमाह[३] "स खल्वयम्" इति । प्रबुद्धस्य = प्रबुद्धमात्रस्य, प्रत्ययानुभवे = वृत्त्यभावकारणाऽनुभवे, तदाश्रिताः-बोधकाल इत्यर्थः । ननु प्रमाणादयो व्युत्थानचित्ताऽधिकरणा निरुद्ध्यन्तां, समाधिप्रतिपक्षत्वान्निद्रायास्त्वेकाग्रवृत्तितुल्यायाः कथं समाधिप्रतिपक्षतेत्याह । "सा च समाधौ" इति । एकाग्रतुल्याऽपि तामसत्वेन निद्रा सबीजनिर्बीजसमाधिप्रतिपक्षेति साऽपि निरोद्धव्येत्यर्थः ॥ १० ॥ "अनुभूतविषयाऽसम्प्रमोषः स्मृतिः" ॥ ११ ॥ प्रमाणादिभिरनुभूते विषये योऽसम्प्रमोषः = अस्तेयः सा स्मृतिः । संस्कारमात्रजन्यस्य हि ज्ञानस्य संस्कारकारणाऽनुभवाऽवभासितो विषय आत्मीयः । तदधिकविषयपरिग्रहस्तु सम्प्रमोषः = स्तेयः । कस्मात्, सादृश्यात् । "मुष स्तेय" इत्यस्मात्सम्प्रमोषपदव्युत्पत्तेः । एतदुक्तं भवति । सर्वे प्रमाणादयोऽनधिगतमर्थं सामान्यतः प्रकारतो वाऽधिगमयन्ति । स्मृतिः

टि० (१) क्लान्तम् = ग्लानियुक्तं श्रमार्त्तं वा । अलसम् = कार्य्याक्षमं, मुषितम् = परैरपहृतं बद्धं वा, यथा परैराक्रान्तः स्तब्धीभूतास्तिष्ठति तद्वदित्यर्थः ।

(२) "असति प्रत्ययानुभव" इति मध्यमणिन्यायेनोभयान्वयि । तथा च सौषुप्ताभावप्रत्ययानुभवेऽसति प्रबुद्धस्य स्मरणं न स्यात्संस्काराऽभावात् । तदाश्रिताः = चित्ताश्रिताः, तद्विषयाः = अभावप्रत्ययविषयाः स्मृतयश्च न भवेयुरननुभूतस्य स्मृत्यविषयत्वादिति ।

(३) साध्यव्यतिरेके हेतुव्यतिरेकमाह = जाग्रत्कालिकः सुखमहमस्वाप्समित्यादिप्रत्यवमर्शोऽनुभवपूर्वको भवितुमर्हति, स्मृतित्वादित्यनुमाने यत्राऽनुभवाभावस्तत्र स्मृत्यभावः इत्येवं साध्याऽभावे हेत्वभावमाहेत्यर्थः । या या स्मृतिः सा साऽनुभवपूर्विका । सा मे मातेति स्मृतिवदित्यन्वयोऽपि बोध्यः ।

भा० किं प्रत्ययस्य[1] चित्तं स्मरति, आहोस्विद्विषयस्येति। ग्राह्योपरक्तः[2] प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासस्तथाजातीयकं संस्कारमारभते। स संस्कारः स्वव्यञ्जकाञ्जनस्तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति।

टी० पुनर्न पूर्वाऽनुभवमर्य्यादामतिक्रामति, तद्विषया तदूनविषया वा[3] न तु तदधिकविषया। सोऽयं वृत्त्यन्तराद्विशेषः स्मृतेरिति। विमृशति। "किंप्रत्ययस्य" इति। ग्राह्यप्रवणत्वादनुभवस्य स्वानुभवाऽभावात्तज्जः स संस्कारो ग्राह्यमेव स्मारयतीति प्रतिभाति। अनुभवमात्रजनितत्वाच्चानुभवमेव[4] इति, विमृश्योपपत्तित उभयस्मरणमेवाऽवधारयति[5]। ग्राह्यप्रवणतया ग्राह्योपरक्तः परमार्थतस्तु ग्राह्यग्रहणे एवोभयं तयोराकारं स्वरूपं निर्भासयति = प्रकाशयति। स्वव्यञ्जकं = कारणम् अञ्जनम् = आकारो यस्य स तथोक्तः। स्वकारणाकार इत्यर्थः। यद्वा व्यञ्जकम् = उद्बोधकम् अञ्जनम् = फलाभिमुखीकरणं यस्येत्यर्थः। ननु यदि कारणविचारणे बुद्धिस्मरणयोः सारूप्यं कस्तर्हि विशेष इत्यत आह।

टि० (१) स्मरतीति स्मरणार्थकधातुयोगात्प्रत्ययस्येति कर्मणि षष्ठी "अधीगर्थदयेशां कर्मणि" इति सूत्रात्। तथा च चित्तं किं ज्ञानं स्मरति, किं विषयं स्मरति इत्यर्थः। उभयग्रहणस्य सिद्धान्तयिष्यमाणत्वात्, किमुभयं स्मरतीति तृतीयविकल्पोऽपि बोध्यः।

(२) ग्राह्योपरक्तः=अस्य यद्यपीत्यादौ देयम्। तथा च यद्यपि ज्ञानाऽनुभवाऽभावाद् ग्राह्योपरक्त एव प्रत्यय इति भाति तथाऽपि घटं जानामीत्यनुव्यवसाये उभयस्यैव भानाद् ग्राह्यग्रहणोभयाकारनिर्भासक एवाऽनुभवो यत एवमतस्तथाजातीयकं= ग्राह्यग्रहणोभयाकारमेव संस्कारमारभते = उत्पादयति, स चोभयविषयकः संस्कारः स्वव्यञ्जकाञ्जनः सन् = उद्बोधकसामग्र्या फलाऽभिमुख्यमापादितः सन्, तदाकारां = स्वसमानाकारामेव ग्राह्यग्रहणविषयिणीं स्मृतिं जनयति, अनुभवसंस्कारस्मृतीनां समानाऽऽकारेणैव कार्य्यकारणभावकल्पनादित्यर्थः। केचित्तु—यतो ग्राह्योपरक्तः = ज्ञानविशेषणतया घटादिभिरप्याकारितोऽतो ग्राह्यग्रहणोभयाकारतया प्रसिद्धो यो घटं जानामीत्यनुव्यसायः स ग्राह्यग्रहणोभयाकारमेव संस्कारं जनयतीत्येवमर्थापयन्ति।

(३) तदूनविषया वा = पूर्वानुभूतादूनविषया वेत्यर्थः। असम्प्रमोष—शब्देनानुभवाऽवभासितविषयाऽधिकविषयपरिग्रहाऽभाव एवोच्यते, न तूनविषयग्रहाऽभाव इति। तेन प्रमुष्टतत्ताकस्मृतिरपि सङ्गृहीता भवतीति भावः। एतेन प्रमुष्टतत्ताकस्मरणमनुभव एवेति न तत्राऽव्याप्तिरलक्ष्यत्वादिति विज्ञानभिक्षूक्तिस्तन्त्रकृतान्ताऽज्ञानपूर्विकैवेति बोध्यमलमधिकेन।

(४) अनुभवमेवेत्यत्र 'स्मारयतीति प्रतिभाति' इत्यस्याऽनुवृत्तिर्बोध्या। (५) अवधारय-

भा० तत्र ग्रहणाऽऽकारपूर्वा बुद्धिः, ग्राह्याऽऽकारपूर्वा स्मृतिः। सा च द्वयी भावितस्मर्त्तव्या चाऽभावितस्मर्त्तव्या च। स्वप्ने भावितस्मर्त्तव्या, जाग्रत्समये त्वभावितस्मर्त्तव्येति। सर्वाः स्मृतयः प्रमाणविपर्य्ययविकल्पनिद्रास्मृतीनामनुभवाद् भवन्ति। सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः[1] सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः। सुखानुशयी रागः, दुःखाऽनुशयी द्वेषः, मोहः पुनरविद्येति। एताः सर्वा वृत्तयो निरोद्धव्याः। आसां निरोधे सम्प्रज्ञातो वा समाधिर्भवत्यसम्प्रज्ञातो वेति ॥११॥

---

टी० "तत्र ग्रहण" इति। ग्रहणम् = उपादानं, न च गृहीतस्योपादानं सम्भवति, तदनेनाऽनधिगतबोधनं बुद्धिरित्युक्तम्। ग्रहणाऽऽकारो = ग्रहणरूपं, पूर्वम् = प्रधानं यस्याः सा तथोक्ता। विकल्पितश्चाऽयमभेदेऽपि बुद्धिग्रहणयो[2]र्गुणप्रधानभाव इति। ग्राह्याऽऽकारः पूर्वः = प्रथमो यस्याः सा तथोक्ता। इदमेव च ग्राह्याकारस्य ग्राह्यस्य पूर्वत्वं यद् वृत्त्यन्तरविषयीकृतत्वमर्थस्य। तदनेन वृत्त्यन्तरविषयीकृतगोचरा स्मृतिरित्युक्तं भवति, सोऽयमसम्प्रमोष इति। नन्वस्ति स्मृतेरपि सम्प्रमोषो, दर्शयति हि[3] पित्रादेरतीतस्य देशकालान्तराऽनुभूतस्याऽननुभूतचरदेशकालान्तरसंबन्धं स्वप्न इत्यत आह "सा च द्वयी" इति। भावितः = कल्पितः स्मर्त्तव्यो यया सा तथोक्ता। अभावितः = अकल्पितः पारमार्थिक इति यावत्। नेयं स्मृतिरपि तु विपर्य्ययः,[4] तल्लक्षणोपपन्नत्वात्। स्मृत्या ऽऽभासतया तु स्मृतिरुक्ता।

---

टि० तीत्यस्याग्रे, ग्राह्योपरक्त इत्यादिनेति शेषो बोध्यः। (१) यतः सर्वा एता वृत्तयः सुखदुःखमोहात्मिका अत एता निरोद्धव्या इत्यग्रिमेण संबन्धः। (२) बुद्धिग्रहणयोरभेदेऽपि गुणप्रधानभावो विकल्पितः = राहोः शिर इत्यादिवद्विकल्पवृत्त्योक्त इत्यर्थः।

(३) हि = यतो देशकालाऽन्तराऽनुभूतस्य पित्रादेरतीतस्य स्वप्नेऽननुभूतचरदेशकालसंबन्धं दर्शयति स्मृतिरतः स्मृतेरपि सम्प्रमोषोऽस्तीत्यर्थः।

(४) ननु स्वप्नस्य स्मृतित्वाऽभ्युपगमे सति स्वप्नेऽयमश्वो धावतीत्यादिज्ञानं नोदीयान्नोदीयाच्चोत्थितस्य राजानमद्राक्षमित्यादिप्रत्यवमर्शः। स्मृतेरनेवंविधत्वात्। सोऽश्वो, राजानमस्मार्षमिति प्रतिपत्तेरेव स्वप्नस्मृतिवादिनये युक्तत्वात्। तस्मादपूर्वा एव स्वप्नोपलब्धि

भा० अथाऽऽसां निरोधे क उपाय इति ।

**सू० अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥**

भा० चित्तनदी नामोभयतो वाहिनी वहति कल्याणाय, वहति पापाय च। या तु कैवल्यप्राग्भारा(१)विवेकविषयनिम्ना सा कल्याणवहा, संसारप्राग्भाराऽविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते * विवेकदर्शनाऽभ्यासेन विवेकस्रोत उद्घाटयत इत्युभयाधीनश्चित्तवृत्तिनिरोधः ॥ १२॥

---

टी० प्रमाणाभासमिव प्रमाणमिति भावः। कस्मात्पुनरन्ते स्मृतेरुपन्यास इत्यत आह"सर्वाः स्मृतय"इति।अनुभवः=प्राप्तिःप्राप्तिपूर्वावृत्तिःस्मृतिस्ततःस्मृतीनामुपजन इत्यर्थः।ननु ये पुरुषं क्लिश्यन्ति ते निरोद्धव्याः प्रेक्षावता। क्लेशाश्च तथा, न वृत्तयस्तत्किमर्थमासां निरोध इत्यत आह "सर्वाश्चैता" इति। सुगमम्॥ ११॥ निरोधोपायं पृच्छति"अथ"इति । सूत्रेणोत्तरमाह"अभ्यासवैराग्यमभ्यां तन्निरोधः" ॥ १२॥ अभ्यासवैराग्ययोर्निरोधे जनयितव्येऽवान्तरव्यापारा

---

टि० भावाः प्रातिभासिकाः सृज्यन्त इति साम्प्रतम् । अत एव बृहदारण्यके जाग्रदवस्थायामादित्यादिप्रकाशानां वागादिज्योतिषां च विद्यमानत्वेन दर्शनाऽऽसनादिव्यवहारस्य तन्निमित्तकत्वसंभवादात्मचैतन्यनिबन्धन एव सर्वोऽयं व्यवहार इति निर्धारयितुं न पार्य्यते, स्वप्ने पुनः सूर्य्याद्यभावेऽपि व्यवहारदर्शनात् तस्य च निमित्ताऽपेक्षत्वाद् आत्मचैतन्यनिमित्तक एव स व्यवहार इत्याशयेनात्मनः स्वयंज्योतिष्ट्वं प्रतिपादयितुं प्रवृत्ता या "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत" इत्यादयः श्रुतयस्ताभिरपूर्वैव प्रातिभासिकी रथादिसृष्टिराम्नायत इति चेद्, ओमित्याह "नेयं स्मृतिरपि तु विपर्यय" इति कथन्तर्हि स्मृतित्वाऽभिधानमिति चेद् असन्निहितविषयत्वेन, प्रमाणाऽजन्यज्ञानत्वेन, संस्कारजन्यत्वेन च स्मृतिसादृश्यमादायेति गृहाणेत्याह "स्मृत्याऽऽभासतया" इति । स्मृतिरिवाऽऽभासमानतयेत्यर्थः। "स्मृतिरेषा यत्स्वप्नदर्शनम्" अ० २ । पा०२।सू० २९ । इति शारीरकीयभाष्यमप्येतदाशयेनैव नेयमिति ।

(१) प्राग्भारः=जलप्रवहणाऽयोग्य उच्चप्रदेशः। निम्नं=जलप्रवहणयोग्यो नीचदेशः, चित्तमपि सर्वदा प्रवर्त्तमानवृत्तिप्रवाहेण प्रवहज्जलप्रख्यमेव । तथाच आत्माऽनात्मविवेकसुमार्गवाहिनी कैवल्यपर्य्यन्ता कल्याणवहा चित्तनदी, आत्माऽनात्माऽविवेकविमार्गवाहिनी विषयभोगपर्य्यन्ता पापवहा चित्तनदीत्यर्थः । *निवार्य्यते ।

## सू० तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥

भा० चित्तस्याऽवृत्तिकस्य प्रशान्तवाहिता स्थितिस्तदर्थः प्रयत्नो=वीर्य्यमुत्साहस्तत्संपिपादयिषया तत्साधनाऽनुष्ठानमभ्यासः १३

---

टी० भेदेन समुच्चयो(१) न तु विकल्प इत्याह "चित्तनदी" इति । प्राग्भारः=प्रबन्धः, निम्नता गम्भीरताऽगाधतेति यावत् ॥ १२ ॥ ॥ तत्राऽभ्यासस्य स्वरूपप्रयोजनाभ्यां(२) लक्षणमाह, "तत्र स्थितौ यत्नोऽभ्यासः(३)" ॥१३॥ तद् व्याचष्टे "चित्तस्य" इति । अवृत्तिकस्य=राजसतामसवृत्तिरहितस्य प्रशान्तवाहिता=विमलता सात्त्विकवृत्तिवाहितैकाग्रता स्थितिस्तदर्थं इति । "स्थितौ" इति निमित्तसप्तमी(४) व्याख्याता, यथा चर्मणि द्वीपिनं हन्तीति । प्रयत्नमेव पर्य्यायाभ्यां विशदयति, "वीर्य्यमुत्साह" इति।तस्येच्छायोनितामाह "तत्सम्पिपादयिषया" इति । "तद्" इति स्थितिं परामृशति।प्रयत्नस्य विषयमाह "तत्साधने" ति । स्थितिसाधनान्यन्तरङ्गबहिरङ्गाणि यमनियमादीनि, साधनगोचरः कर्तृव्यापारो, न फलगोचर इत्यर्थः॥ १३॥

---

टि० (१) समुच्चय एव=यथा तीव्रवेगोपेतं नदीप्रवाहं सेतुबन्धेनेन निवार्य्य कुल्याप्रणयनेन क्षेत्राऽभिमुखं तिर्य्यक् प्रवाहान्तरं संपाद्यते तथा वैराग्येण चित्तनद्या विषयप्रवाहो निवार्य्यते, समाध्यभ्यासेन च प्रशान्तवाहिता संपाद्यत इति द्वारभेदादभ्यासवैराग्ययोः समुच्चय एव, न त्वेकद्वारत्वेन व्रीहियववद् विकल्पः । अत एव भगवता 'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते' इति समुच्चयबोधकश्चकार उपात्त इति भावः ।

(२) यत्न इति स्वरूपाऽऽख्यानं, स्थिताविति च प्रयोजनाऽभिधानमिति भावः ।

(३) तत्र=स्वरूपाऽवस्थिते द्रष्टरि या चित्तस्य स्थितिस्तदर्थों यो यत्नः=स्वभावचाञ्चल्याद् बहिःप्रवाहशीलमपि चित्तं सर्वथा निरोत्स्यामीत्येवंविधश्छिद्भिवन्मानस उत्साहः स आवर्त्यमानोऽभ्यास इत्यर्थः । तत्र=अभ्यासवैराग्ययोर्मध्य इति विज्ञानोक्तिस्त्वनुपयुक्तैव ।

(४) केचित्तु कर्मयोगाऽभावान्नेयं निमित्ताऽर्था सप्तमी, किन्तु वैषयिकाऽऽधार इयं सप्तमीत्याहुः। अन्ये तु निमित्तपदाऽध्याहारेण "निमित्तकारण" इति वार्त्तिकेन सप्तमी। दृष्टान्तस्तु अर्थांशे, न तु लक्षणांश, इति व्याख्यातुर्भाव इत्याहुरित्यलं प्रकृताऽनुपयुक्तेन ।

सू० स तु दीर्घकाल-नैरन्तर्य्य-सत्काराऽऽसेवितो[१] दृढभूमिः ॥ १४ ॥

भा० दीर्घकालाऽऽसेवितः, निरन्तराऽऽसेवितः, तपसा ब्रह्मचर्य्येण विद्यया श्रद्धया च सम्पादितः सत्कारवान्, दृढभूमिर्भवति=व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः ॥१४॥

सू० दृष्टाऽऽनुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

भा०स्त्रियोऽन्नपानमैश्वर्य्यमिति दृष्टविषयवितृष्णस्य स्वर्गवैदेह्यप्र-

---

टी० ननु व्युत्थानसंस्कारेणाऽनादिपरिपन्थिना प्रतिबद्धोऽभ्यासः कथं स्थित्यै कल्पत इत्यत आह "स तु दीर्घकालनैरन्तर्य्यसत्काराऽऽसेवितो दृढभूमिः" ॥ १४ ॥ सोऽयमभ्यासो विशेषणत्रयसम्पन्नः सन् दृढाऽवस्थो न सहसा व्युत्थानसंस्कारैरभिभूतस्थितिरूपविषयो भवति, यदि पुनरेवम्भूतमभ्यासं कृत्वोपरमेत् ततः कालपरिवासेन परिभवेत्तस्मा[२]न्नोपरन्तव्यमिति भावः ॥ १४ ॥

वैराग्यमाह । "दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्" ॥ १५ ॥ चेतनाऽचेतनेषु दृष्टविषयेषु वितृष्णतामाह "स्त्रिय" इति। ऐश्वर्य्यम् = आधिपत्यम्। अनुश्रवो = वेदस्ततोऽधिगता आनुश्रविकाः स्वर्गादयस्तत्रापि वैतृष्ण्यमाह "स्वर्ग" इति। देह-

---

टि० (१) अदीर्घकालसेवने, दीर्घकालत्वेऽपि विच्छिद्य विच्छिद्य सेवने च, नैरन्तर्य्येऽपि श्रद्धातिशयाऽभावे च, लयविक्षेपकषायरसाऽऽस्वादानामन्तरायाणामपरिहारे व्युत्थानसंस्कारप्राबल्येनाऽदृढभूमिरभ्यासः फलाय न स्यादिति त्रयमुपात्तं सूत्रकृतेति बोध्यम्।
(२) तस्मादिति हेत्वर्थे, यतोऽनादृतोऽभ्यासः कालपरिवासेन=कालक्रमेण विलीयेताऽतोऽभ्यासे उपरतिर्न कार्य्या, किन्तु 'स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा' इति भगवदुक्तेरनिर्विण्णमना भूत्वा टिट्टिभवद् यतनीयमित्यर्थः।

भा० कृतिलयत्वप्राप्तावा[१]नुश्रविकविषये वितृष्णस्य दिव्याऽदिव्यविषयसम्प्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसङ्ख्यानबलाद् अनाभोगात्मिका हेयोपादेयशून्या[२] वशीकारसञ्ज्ञा वैराग्यम् ॥ १५ ॥

टी० रहिता विदेहाः करणेषु लीनास्तेषां भावो वैदेह्यम् । अन्ये तु प्रकृतिमेवात्मानमभिमन्यमानाः प्रकृत्युपासकाः प्रकृतौ, साऽधिकारायामेव लीनास्तेषां भावः प्रकृतिलयत्वं, तत्प्राप्तिविषये वितृष्णस्य । आनुश्रविकविषये वितृष्णो हि स्वर्गादिप्राप्तिविषये वितृष्ण उच्यते । ननु यदि वैतृष्ण्यमात्रं वैराग्यं हन्त विषयाऽप्राप्तावपि तदस्तीति[३] वैराग्यं स्यादित्यत आह "दिव्याऽदिव्य" इति । न वैतृष्ण्यमात्रं वैराग्यम्, अपि तु दिव्याऽदिव्यविषयसम्प्रयोगेऽपि चित्तस्यानाभोगात्मिका । तामेव स्पष्टयति । "हेय" इति । हेयोपादेयशून्या = सङ्गदोषरहिता[४]या उपेक्षा, बुद्धिर्वशीकारसञ्ज्ञा[५] । कुतः पुनरियमित्यत आह—" प्रसङ्ख्यानबलाद् " इति । तापत्रयपरीतता[६] विषयाणां दोषस्तत्परिभावनया[७] तत्साक्षात्कारः प्रसङ्ख्यानं तद्बलादित्यर्थः ।

टि० (१) प्राप्ताविति सप्तमी सामानाधिकरण्ये । तथा च स्वर्गादिप्राप्तिरूपे आनुश्रविकविषये वितृष्णस्येत्यर्थः ।

(२) अत्र 'सा' इति शेषयित्वा, वैराग्यमित्यत्र, अपरम् इति च पूरयित्वा, पूर्वत्राऽऽनुश्रविकविषये वितृष्णस्येत्यत्र 'या' इति चाऽध्याहृत्यैकवाक्यतयैव सर्वं भाष्यं योजनीयम् । एवञ्च विषयदोषदर्शिनोऽत एवैहिकाऽऽमुष्मिकविषयरागशून्यस्य चित्तस्य दोषसाक्षात्काराद् या सत्यपि दिव्यादिव्यविषयसंप्रयोगे रागद्वेषशून्याऽत एवानाभोगात्मिका स्थितिः सा वशीकारसञ्ज्ञाऽपरं वैराग्यमुच्यत इति फलितम् ।

(३) इतीत्यस्याऽग्रे तदपीति शेषः । इति हेतोस्तदपि=विषयाऽप्राप्तिप्रयुक्तं वैतृष्ण्यमपि वैराग्यं स्यादित्यर्थः ।

(४) रागद्वेषरहितेति पाठान्तरमपि रञ्जयत्येव स्वान्तम् ।

(५) बुद्धिरित्यतोऽग्रे सा इति शेषः । सा वशीकारसंज्ञेत्यर्थः ।

(६) तापत्रयपरीतता=आध्यात्मिकादिदुःखत्रयसंभिन्नत्वेन तदविनाभूतता । यथा चैतत् तथा 'परिणामताप' इति, पा० २ सू० १९ स्पष्टीभविष्यति ।

(७) दोषपरिभावना च "परोत्कर्षाऽसहिष्णुत्वे स्पर्द्धा चैव समैश्च तैः । क्षीणे पुण्ये विशन्त्येतं मर्त्यलोकं च मानवाः । किं नामेदं बत सुखं येयं संसारसंसृतिः । जायते मृतये लोको म्रियते जननाय च । चिन्तानिचयचक्राणि नानन्दाय धनानि मे । संप्रभुतकलत्राणि

## सू० तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्[1] ॥ १६ ॥

टी० यतमानसञ्ज्ञा १ व्यतिरेकसञ्ज्ञा २ एकेन्द्रियसञ्ज्ञा ३ वशीकारसञ्ज्ञा ४ च, इति चतस्रः सञ्ज्ञा[2] इत्यागमिनः। रागादयः खलु कषायाश्चित्तवर्त्तिनस्तैरिन्द्रियाणि यथास्वं विषयेषु प्रवर्त्त्यन्ते तन्मा प्रवर्त्तिषतेन्द्रियाणि तत्तद्विषयेषु, इति[3] तत्परिपाचनायारम्भः प्रयत्नः सा यतमानसञ्ज्ञा। तदारम्भे सति केचित् कषायाः पक्वाः, पच्यन्ते[4] पक्ष्यन्ते च केचित्। तत्र पक्ष्यमाणेभ्यः पक्वानां व्यतिरेकेणाऽवधारणं व्यतिरेकसञ्ज्ञा। इन्द्रियप्रवर्त्तनाऽसमर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थानमेकेन्द्रियसञ्ज्ञा। औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितेष्वपि दिव्यादिव्यविषयेषूपेक्षा बुद्धिः संज्ञात्रयात्परा वशीकारसञ्ज्ञा। एतयैव च पूर्वासां चरितार्थत्वान्न ताःपृथगुक्ता[5] इति सर्वमवदातम् ॥ १५ ॥ अपरं वैराग्यमुक्त्वा परमाह "तत्परंपुरुषख्यातेर्गुणवैतृष्ण्यम्" ॥ १६ ॥ अपरवैराग्यस्य परवैराग्यं प्रति

---

टि० गृहाण्युग्रापदामिव। पुत्रमित्रकलत्रादितृष्णया नित्यकष्टया। खगेष्विव किरात्येदं जालं लोकेषु रच्यत"इत्यादिस्मृतिभ्योऽवसेया।

(१) सम्प्रज्ञातसमाधिपाटवेन गुणत्रयात्मकात्प्रधानाद्विविक्तस्य पुरुषस्य या ख्यातिः=साक्षात्कारः, ततः ख्यातेर्यद् गुणवैतृष्ण्यम्=प्रसङ्ख्यानेऽप्यकुसीदत्वं समाधिफलेऽपि वैतृष्ण्यं तत्परं वैराग्यं, सम्प्रज्ञातसमाधेः फलभूतमसम्प्रज्ञातसमाधिस्त्वन्तरङ्गसाधनं यत् सत्त्वपुरुषान्यताख्यातावपि वैतृष्ण्यं तज्ज्ञानप्रसादमात्रं श्रेष्ठं वैराग्यमिति यावदित्यर्थः सूत्रस्य।

(२) वैराग्यस्येति शेषः। ता यथाक्रमं लक्षयति "रागादय" इति। अत्र 'ये' इति शेषः।

(३) इति=इत्यालोच्य यः तत्परिपाचनाय=चित्तमलविधूननाय मैत्र्यादिभावनाऽऽरम्भरूपो यत्नः सा यतमानसंज्ञेत्यर्थः। केचित्त्वत्र जगति किं सारं किमसारमिति गुरुशास्त्राभ्यां ज्ञास्यामीत्युद्योगो यतमानसञ्ज्ञा वैराग्यम्। एवं दृष्टाऽऽनुश्रविकप्रवृत्तेर्दुःखात्मत्वबोधेन बहिरिन्द्रियप्रवृत्तिमजनयन्त्या अपि तृष्णाया औत्सुक्यमात्रेण मनस्यवस्थानमेकेन्द्रियमित्याहुः। कषाय—शब्दो मलार्थकः।

(४) पच्यन्त इति न सार्वत्रिकः पाठः।

(५) यतमानव्यतिरेकैकेन्द्रियसञ्ज्ञा अन्तरा वशीकारसञ्ज्ञाया अलाभादिति तद्ग्रहणेनैवेतरा गृहीता अतो न पृथगुक्तास्ता इति न न्यूनतेति भावः।

भा० दृष्टाऽऽनुश्रविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात्तच्छुद्धिप्रविवेकाऽऽप्यायितबुद्धिर्गुणेभ्यो व्यक्ताऽव्यक्तधर्मकेभ्यो विरक्त इति[१] तद् द्वयं वैराग्यं, तत्र यदुत्तरं तज्ज्ञानप्रसादमात्रम् ।

टी० कारणत्वं तत्र च द्वारमादर्शयति। "दृष्टानुश्रविकविषयदोषदर्शी विरक्त" इति। अनेनाऽपरं वैराग्यं दर्शितम्। पुरुषदर्शनाऽभ्यासाद्, आगमानुमानाचार्योपदेशसमधिगतस्य पुरुषस्य यद्दर्शनं तस्याभ्यासः = पौनःपुन्येन निषेवणं तस्मात्, तस्य दर्शनस्य शुद्धिः = रजस्तमोहान्या सत्त्वैकतानता, तया यो गुणपुरुषयोः प्रकर्षेण विवेकः—पुरुषः शुद्धोऽनन्तस्तद्विपरीता गुणा इति, तेनाप्यायिता[२] बुद्धिर्यस्य योगिनः स तथोक्तः। तदनेन धर्ममेघाऽऽख्यः समाधिरुक्तः। स तथाभूतो योगी गुणेभ्यो व्यक्ताऽव्यक्तधर्मकेभ्यः सर्वथा विरक्तः, सत्त्वपुरुषान्यताख्यातावपि गुणात्मिकायां यावद्विरक्त इति। तत् = तस्माद् द्वयं वैराग्यम्। पूर्वं हि वैराग्यं सत्त्वसमुद्रेकविधूततमसि रजःकणकलङ्कसम्पृक्ते चित्तसत्त्वे[३] तच्च तौष्टिकाना[४]मपि समानम्। ते हि तेनैव प्रकृतिलया बभूवुः। तथोक्तं "वैराग्यात् प्रकृतिलय" इति। तत्र = तयोर्द्वयोर्मध्ये यदुत्तरं तज्ज्ञानप्रसादमात्रम्। मात्रग्रहणेन निर्विषयतां सूचयति, तदेवं हि तादृशं चित्तसत्त्वं रजोलेशमलेनाऽप्यपरामृष्टमस्याऽऽश्रयोऽत एव ज्ञानप्रसाद इत्युच्यते। चित्तसत्त्वं हि प्रसादस्वभावमपि रजस्तमःसम्पर्कान्मलिनतामनुभवति वैराग्याभ्यासविमलवारिधाराधौतसमस्तरजस्तमोमलं त्वतिप्रसन्नं ज्ञानप्रसादमात्रपरिशेषं भवति। तस्य[५] गुणानुपादेयत्वाय दर्शयति ।

टि० (१) इतीत्यस्याऽग्रे यत इति शेषः। तथाच 'यतो मुमुक्षुः पूर्वं सत्त्वपुरुषाऽन्यताख्यात्यर्थं दृष्टाऽऽनुश्रविकविषयदोषदर्शनेन ततो विरज्य सम्प्रज्ञातसमाधिस्थो भवति, तदनु चाऽपरवैराग्यजन्मपुरुषदर्शनाऽभ्यासेन परिसमाप्तपुरुषार्थशेमुषीको गुणात्मिकायां सत्त्वपुरुषान्यताख्यातावपि विरक्तो भूत्वाऽसम्प्रज्ञातसमाधिस्थो भवति। तस्मान्निष्ठाद्वैविध्येन द्वयं वैराग्यम्, एकं संप्रज्ञातफलकमपरम्, एकं चाऽसंप्रज्ञातफलकं परमिति भाष्यार्थः फलितः ।

(२) आप्यायिता=तृप्ता परिसमाप्तपुरुषार्थेति यावत् । (३) चित्तसत्त्वे=उदेतीति शेषः ।

(४) तौष्टिकानाम्="अम्भः, सलिलं, मेघो, वृष्टिः, पारं, तथा सुपारं, च । अन्यच्च पाराऽपारम्, अनुत्तमाम्भ, उत्तमाम्भश्च" इति नव तुष्टयः प्रयोजनं येषां तेषामित्यर्थः । एतासां लक्षणभेदाऽन्वाख्यानन्तु "आध्यात्मिक्यश्चतस्रः" ५० । इति कारिकायां वाचस्पत्ये द्रष्टव्यम् ।

(५) तस्य=परवैराग्यस्योपादेयत्वाय परवैराग्यगुणान् दर्शयतीत्यर्थः ।

भा० यस्योदये प्रत्युदितख्यातिः[१] रेवम्मन्यते, प्राप्तं प्रापणीयं, क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्वा भवसंक्रमो[२] यस्याऽविच्छेदाज्जनित्वा म्रियते मृत्वा च जायत इति, ज्ञानस्यैव परा काष्ठा वैराग्यम्, एतस्यैव हि नान्तरीयकं कैवल्यमिति ॥ १६ ॥

टी० "यस्योदये" इति। यस्योदये सति योगी प्रत्युदितख्यातिः = ख्यातिविशेषे सति वर्त्तमानख्यातिमान्[३] इत्यर्थः। प्रापणीयं = कैवल्यं प्राप्तम्। यथा वक्ष्यति "जीवन्नेव विद्वान् मुक्तो भवति" इति। संस्कारमात्रस्य छिन्नमूलस्य सत्त्वादिति[४] भावः। कुतः प्राप्तं, यतः क्षीणाः क्षेतव्याः क्लेशाः=अविद्यादयः सवासनाः। नन्वस्ति धर्माऽधर्मसमूहो भवस्य=जन्ममरणप्रबन्धस्य सङ्क्रमः प्राणिनां, तत्कुतः कैवल्यमित्यत आह "छिन्न" इति। श्लिष्टानि-निःसन्धीनि पर्वाणि यस्य स तथोक्तः। धर्माऽधर्मसमूहस्य समूहिनः पर्वाणि तानि श्लिष्टानि। न हि[५] जातु जन्तुर्जन्ममरणप्रबन्धेन वियुज्यते। सोऽयं भवसङ्क्रमः क्लेशक्षये छिन्नः। यथा वक्ष्यति "क्लेशमूलः कर्माशयः"। पा० २ सू० १२' "सति मूले तद्विपाकः"। पा० २ सू० १३ इति। ननु प्रसङ्ख्यानपरिपाकं धर्ममेघनिरोधं चाऽन्तरा किन्तदस्ति यज्ज्ञानप्रसादमात्रम् इत्यत आह "ज्ञानस्यैव परा काष्ठा" इति। धर्ममेघभेद एव परं वैराग्यं, नाऽन्यत्। यथा वक्ष्यति "प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः। पा० ४ सू० २९" "तदा सर्वावरणमलाऽपेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम्। पा० ४ सू० ३१" इति च। तस्मादेतस्य हि नान्तरीयकम्=अविनाभावि कैवल्यमिति ॥१६॥

टि० (१) प्रत्युदितख्याति–शब्देन निष्पन्नधर्ममेघसमाधिर्योग्यभिधीयते। "क्षीणाः क्लेशा" इत्यग्रिमभाष्यात् "ततः क्लेशकर्मनिवृत्तिः" इत्यनेन सूत्रेण धर्ममेघसमाधिनिष्ठस्यैव क्लेशनिवृत्तेरभिधास्यमानत्वादिति। (२) भवसङ्क्रमः=भवस्य=जन्ममरणस्य सङ्क्रमः=घटीयन्त्रवदविच्छेदो यस्मात्स भवसङ्क्रमः धर्माऽधर्मसमूहः स छिन्नः=नष्ट इत्यर्थः "क्षीयन्ते चाऽस्य कर्माणि "उभे उ हैवैष एते तरति" इत्यादिश्रुतेः। ज्ञानप्रसादमन्तराऽच्छेद्यत्वं तस्याऽऽह "श्लिष्टपर्वा" इति। धर्माऽधर्मसमूहाऽनुष्ठानात्, शुभाऽशुभवासने, ततो धर्माऽधर्मावित्येवं श्लिष्टानि=सन्धिरहितानि पर्वाणि यस्य स तथा अविभिन्ननैरन्तर्य्यग्रन्थिरित्यर्थः। तदेव स्पष्टयति "यस्याऽविच्छेदाद्" इति। यस्य=धर्माऽधर्मसमूहस्येत्यर्थः।

(३) ख्यातिविशेषे = ज्ञानप्रसादे सति वर्त्तमानख्यातिमान् = धर्ममेघसमाधिनिष्ठ इत्यर्थः।

(४) जीवन्मुक्ताविदं हेतुवचनम्। सिद्धत्वादिति पाठान्तरम्।

(५) हि = यतः जन्तुर्जन्ममरणप्रबन्धेन कदाचिन्न वियुज्यतेऽतो धर्माऽधर्मसमूहस्य यानि समूहिरूपाणि पर्वाणि तानि श्लिष्टानि।

भा० अथोपायद्वयेन[1] निरुद्धचित्तवृत्तेः कथमुच्यते सम्प्रज्ञातः समाधिरिति ।

**सू० वितर्कविचारानन्दाऽस्मितारूपानुगमात संप्रज्ञातः ॥ १७ ॥**

भा० वितर्कः = चित्तस्याऽऽलम्बने[2] स्थूल आभोगः, सूक्ष्मो विचारः, आनन्दः = ह्लादः, एकात्मिका संविद् अस्मिता, तत्र प्रथमश्चतुष्टयानुगतः समाधिः सवितर्कः ।

---

टी० उपायमभिधाय सप्रकारोपेयकथनाय पृच्छति, "अथोपायद्वयेन" इति । "वितर्कविचारानन्दास्मितारूपानुगमात्संप्रज्ञातः" ॥ १७॥ सम्प्रज्ञातपूर्वकत्वादसम्प्रज्ञातस्य प्रथमं सम्प्रज्ञातोपवर्णनम् । सम्प्रज्ञातसामान्यं वितर्कविचारानन्दास्मितानां रूपैः=स्वरूपैरनुगमात्प्रतिपत्तव्यम् । वितर्कं विवृणोति । "चित्तस्य" इति स्वरूपसाक्षात्कारवती प्रज्ञा आभोगः । स च स्थूलविषयत्वात्स्थूलः । यथा हि प्राथमिको धानुष्कः स्थूलमेव लक्ष्यं विध्यत्यथ सूक्ष्मम्, एवं प्राथमिको योगी स्थूलमेव पाञ्चभौतिकं चतुर्भुजादि ध्येयं साक्षात्करोत्यथ सूक्ष्ममिति । एवं चित्तस्यालम्बने सूक्ष्म आभोगः=स्थूलकारणभूतसूक्ष्मपञ्चतन्मात्रालिङ्गाऽलिङ्गविषयो विचारः । तदेवं ग्राह्यविषयं दर्शयित्वा ग्रहणविषयं दर्शयति । "आनन्द" इति । इन्द्रिये स्थूल आलम्बने चित्तस्याऽऽभोग आह्लादः[3] । प्रकाशशीलतया खलु सत्त्वप्रधानाद्

---

टि० (१) उपायद्वयेन = अभ्यासवैराग्याभ्यां निरुद्धराजसतामसवृत्तिचित्तस्य योगिनो यः संप्रज्ञातसमाधिर्भवति स कथं = कैः प्रकारभेदैरुच्यत इत्यर्थः ।

(२) आलम्बने = पाञ्चभौतिके चतुर्भुजादिध्येये यश्चित्तस्य आभोगः = तद्विषयकः साक्षात्कारः स्थूलविषयत्वात्स्थूलः स वितर्कः सम्प्रज्ञात इत्यर्थः, चित्तस्यालम्बने स्थूले यश्चित्तस्य स्थूल आभोगः स वितर्क इत्येवं चित्तशब्दस्योभयत्राऽन्वयो वा बोध्यः ।

(३) यत्तु विज्ञानभिक्षुणोक्तम्—इन्द्रियविषयकाऽऽभोगस्य नानन्दाख्यसम्प्रज्ञातत्वं, किन्तु सूक्ष्माऽऽलम्बनविषयक आभोगविशेष एवानन्दाऽनुगतसम्प्रज्ञात इति । तदविचारपूर्वकमेव । तथाहि । "क्षीणवृत्तेरि"ति सूत्रे वक्ष्यमाणानां तिसृणां समापत्तीनामेवायं चातुर्विध्येन विभागस्तथा च ग्राह्यसमापत्तिः स्थूलसूक्ष्मग्राह्यभेदेन वितर्कविचाराभ्यां गृहीता, ग्रहीतृसमापत्तिश्चाऽस्मिताऽनुगतत्वेन गृहीता, परिशिष्टा ग्रहणसमापत्तिश्चाऽऽनन्दाऽनुगतत्वेनैव ग्रहीतुं युक्ता, ग्रहणपदेनेचेन्द्रियाणि गृह्यन्त इति तु सर्वसंमत-

भा० द्वितीयो वितर्कविकलः सविचारः। तृतीयो विचारविकलः सानन्दः। चतुर्थस्तद्विकलोऽस्मितामात्र इति। सर्व एते सालम्बनाः समाधयः ॥ १७ ॥ अथाऽसम्प्रज्ञातसमाधिः किमुपायः किं स्वभावो वेति।

सू० विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः[१] ॥१८॥

भा० सर्ववृत्तिप्रत्यस्तमये संस्कारशेषो निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः। तस्य परं वैराग्यमुपायः, सालम्बनो[२] ह्यभ्यासस्तत्साधनाय न कल्पत इति—

टी० अहङ्कारादिन्द्रियाण्युत्पन्नानि सत्त्वं सुखमिति तान्यपि सुखानि इति तस्मिन्नाभोग आह्लाद इति, ग्रहीतृविषयं सम्प्रज्ञातमाह "एकात्मिका संविद्" इति। अस्मिताप्रभवानीन्द्रियाणि, तेनैषामास्मिता सूक्ष्मं रूपं, सा चात्मना ग्रहीत्रा सह बुद्धिरेकात्मिका संविदिति। तस्यां च ग्रहीतुरन्तर्भावाद्भवति ग्रहीतृविषयः सम्प्रज्ञात इति। चतुर्णामपरमवान्तरविशेषमाह "तत्र प्रथम" इति। कार्य्यं कारणाऽनुप्रविष्टं न कारणं कार्य्येण, तदयं स्थूल आभोगः स्थूलसूक्ष्मेन्द्रियास्मिताकारणचतुष्टयानुगतो भवति। उत्तरे तु त्रिद्व्येककारणकास्त्रिद्व्येकरूपा भवन्ति। असम्प्रज्ञाताद्भिनत्ति। "सर्व एत" इति ॥ १७ ॥ क्रमप्राप्तमसम्प्रज्ञातमवतारयितुम्पृच्छति "अथ" इति। "विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः" ॥ पूर्वपदेनोपायकथनम्। उत्तराभ्याञ्च स्वरूपकथनम्। मध्यमं पदं विवृणोति, "सर्ववृत्ति" इति। प्रथमं पदं व्याचष्टे। "तस्य परम्" इति। विरामो=वृत्तीनामभावस्तस्य प्रत्ययः=कारणं[३]

टि० मैत्रेति किमत्र दुष्टम्, ऋते भावदौष्ट्यमित्यलं विस्तरेण।

(१) विरामः=वितर्कादिचिन्तात्यागः, वृत्तीनामभावो वा, तस्य प्रत्ययः=कारणं यत्परं वैराग्यं तस्य योऽभ्यासः=पौनःपुन्येनाऽनुष्ठानं, तदेव पूर्वं=कारणं यस्य स विरामप्रत्ययाऽभ्यासपूर्वः, परवैराग्यजन्य इति यावत्। संस्कारशेषः=सर्वथा निर्वृत्तिकः, अन्यः=पूर्वोक्तात्सबीजात्संप्रज्ञाताद्विलक्षणो निर्बीजोऽसम्प्रज्ञात इत्यर्थः। तदुक्तं "मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः। असम्प्रज्ञातनामाऽसौ समाधिरभिधीयते" इति।

(२) हि=यतः सालम्बनोऽभ्यासोऽसम्प्रज्ञातसाधनाय न कल्पते इति=अतो विरामप्रत्ययो निर्वस्तुको=धर्ममेघसमाधिरेवाऽऽलम्बनीक्रियते=स्वसाधनतयाऽऽश्रीयते सम्प्रज्ञातेनेत्यर्थः। निर्वस्तुकत्वे हेतुः "स चाऽर्थशून्यः" इति। चो हेतौ। (३) कारणमित्यस्य

भा० विरामप्रत्ययो निर्वस्तुक आलम्बनीक्रियते । स चार्थशून्यः । तदभ्यासपूर्वं चित्तं निरालम्बनमभावप्राप्तमिव भवतीत्येष निर्बीजः समाधिरसम्प्रज्ञातः, ॥ १८ ॥ स खल्वयं द्विविध उपायप्रत्ययो भवप्रत्ययश्च । तत्रोपायप्रत्ययो योगिनां भवति ।

टी० तस्याऽभ्यासः=तदनुष्ठानं पौनःपुन्येन, तदेव पूर्वं[१] यस्य स तथा। अथाऽपरं वैराग्यं निरोधकारणं कस्मान्न भवतीत्यत आह "सालम्बनो हि" इति। कार्य्यसरूपं कारणं युज्यते न विरूपं, विरूपं चाऽपरं वैराग्यं सालम्बनं[२] निरालम्बनसमाधिना कार्य्येण। तस्मान्निरालम्बनादेव ज्ञानप्रसादमात्रात् तस्योत्पत्तिर्युक्ता। धर्ममेघसमाधिरेव हि[३] नितान्तविगलितरजस्तमोमलात्सत्त्वादुपजातस्तत्तद्विषयाऽतिक्रमेण प्रवर्त्तमानोऽनन्तो विषयाऽवद्यदर्शी समस्तविषयपरित्यागाच्च स्वरूपप्रतिष्ठः सन्निरालम्बनः संस्कारमात्रशेषस्य निरालम्बनस्य समाधेः कारणमुपपद्यते सारूप्यादित्यर्थः । आलम्बनीकरणम्=आश्रयणम्, अभावप्राप्तमिव=वृत्तिरूपकार्याकरणाद्, निर्बीजः=निरालम्बनः। अथवा बीजं=क्लेशकर्माशयास्ते निष्क्रान्ता यस्मात् स तथा ॥ १८ ॥

निरोधसमाधेरवान्तरभेदं हानोपादानाऽङ्गमादर्शयति "स खल्वयमिति" सः=निरोधसमाधिर्द्विविध उपायप्रत्ययो, भवप्रत्ययश्च । उपायः=वक्ष्यमाणः श्रद्धादिः,प्रत्ययः=कारणं यस्य निरोधसमाधेः स तथोक्तः।भवन्ति=जायन्तेऽस्यां जन्तव इति भवोऽविद्या[४]।भूतेन्द्रियेषु वा विकारेषु प्रकृतिषु वाऽव्यक्त-

टि० परं वैराग्यमिति शेषः । (१) पूर्वम् =कारणमित्यर्थः ।

(२) सालम्बनमिति हेतुगर्भितविशेषणम् । पुरुषपर्य्यन्तमेकस्मिन् कस्मिंश्चिदालम्बन एकाग्रम् इति च तदर्थः ।

(३) धर्ममेघसमाधिरेव हीत्यस्य निरालम्बनस्य समाधेः कारणमित्यग्रिमेणाऽन्वयः, ।

(४) प्रकृत्याद्यनात्मस्वात्माऽभिमानरूपमज्ञानमित्यर्थः । तदेव स्पष्टयति—"भूतेन्द्रियेष्वित्यादिना । यत्त्वत्र विज्ञानभिक्षुणा—भवो जन्म तदेव कारणं यस्येति विगृह्य महदादिदेवानां साधनानुष्ठानं विनैवाऽसंप्रज्ञातयोगो जन्ममात्रनिमित्तको भवतीति च व्याख्याय विदेहाः प्रकृतिलया अपि अधिकारसमाप्तौ मुच्यन्ते । भवोऽविद्येति वाचस्पतिमिश्रोक्तमसङ्गतम् । परवैराग्यस्याऽविद्वुष्यसंभवादित्युक्तं,तत्सर्वं प्रकृतभाष्याऽर्थापरिज्ञाननिबन्धनत्वेनाऽपेशलम्।तथाहि।उपायप्रत्ययो योगिनां भवतीति विशेषं कथयद्भिर्भाष्यकृद्भिरितरस्य भवप्रत्ययस्य समाधेर्योगिभिरनुपादेयत्वमिति स्पष्टमवबोध्यते, अनुपा-

# सू० भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

टी० महदहङ्कारपञ्चतन्मात्रेष्वनात्मस्वात्मख्यातिस्तैष्टिकानां वैराग्यसम्पन्नानां, स खल्वयं भवः प्रत्ययः = कारणं यस्य निरोधसमाधेःस भवप्रत्ययः। तत्र = तयोर्मध्ये उपायप्रत्ययो योगिनां = मोक्षमाणानां भवति। विशेषविधानेन शेषस्य मुमुक्षुसम्बन्धं निषेधति। केषान्तर्हि भवप्रत्यय इत्यत्र सूत्रेणोत्तरमाह "भवप्रत्ययो विदेहप्रकृतिलयानाम्" ॥ विदेहाश्च प्रकृतिलयाश्च तेषामित्यर्थः । तद् व्याचष्टे

टि० देयत्वं च तस्य भवप्रत्ययस्य कैवल्यहेतुत्वाऽभावेनैव वाच्यं, नह्यन्यथा समानेऽपि संस्कारमात्रशेषे सर्ववृत्तिनिरोध उपादेयत्वाऽनुपादेयत्वविभागः संभवतीति । स चाऽयं विभागो 'जन्ममात्रनिमित्तकः समाधिर्येषां देवानां तेऽपि मुच्यन्ते' इति वदतो विज्ञानभिक्षोर्मते न सङ्गच्छेत । तन्मते हि उभयोरपि समाध्योः कैवल्यहेतुत्वेनोपादेयत्वाऽनुपादेयत्वविभागस्य दुर्वचत्वात् । अस्मन्मते तु ये भूतेन्द्रियाणां विकाराणामन्यतममात्मत्वेन प्रतिपद्य तद्भावनया देहपाताऽनन्तरं तेषु लीनास्ते विदेहा इत्याख्यायन्ते । ये चाऽव्यक्तादिप्रकृतीनामन्यतममात्मत्वेनाऽभिमत्य तद्भावनया पिण्डपाताऽनन्तरं तत्र लीनास्ते प्रकृतिलया इत्युच्यन्ते । तेषां च यः सर्ववृत्तिनिरोधः स तत्तल्लयप्रयुक्त एव, न तु सत्त्वपुरुषाऽन्यताख्यातिलब्धजन्मज्ञानप्रसादमात्रप्रयुक्तोऽतोऽज्ञानकारणक एव सः । अत एव प्राचीनैः स योगाभास इत्यभिलप्यते । अत एव च वक्ष्यमाणवायुपुराणवचनेन तेषां पुनरावृत्तिराख्यायते । एवञ्च भवप्रत्ययस्य कैवल्यहेतुत्वाभावेन हेयत्वं धर्ममेघसमाधिलब्धजनुष उपायप्रत्ययस्य तु कैवल्यहेतुत्वेनोपादेयत्वमित्यस्त्येव भाष्योक्तविभागस्य सामञ्जस्यम् । किञ्च "यावदधिकारवशाच्चित्तं न पुनरावर्त्तते तावत्कैवल्यपदमिवाऽनुभवन्ति" इति वक्ष्यमाणभाष्येण स्फुटेऽवगम्यमाने प्रकृतिलयानां पुनरावृत्तित्वे 'प्रकृतिलया अपि मुच्यन्त' इति तद्विरुद्धप्रलपनमपि भिक्षोर्वैदुष्यविदूषकमेव । अपि च कीदृग् विस्मरणशीलोऽयं, यतः "न कारणलयात्कृतकृत्यता मग्नवदुत्थानाद्" इति सूत्रे भाष्याऽऽभासे "प्रकृतिर्लीनाः पुनराविर्भवन्ति" इत्युक्तमत्र च प्रकृतिलीना अपि मुच्यन्त इत्याहातो "योऽयं स्वाऽभिप्रायमपि नाऽवधारयितुं शक्नोति दूरतस्तस्मिन् पराऽभिप्रायाऽवधारणप्रत्याशा" इत्युक्तेरयमेवाऽसाधारणो विषयः । यच्चोक्तम्—असंप्रज्ञातहेतोः परवैराग्यस्याऽविदुष्यऽसम्भवान्न भव—शब्देनाऽविद्याग्रहणमिति, तदपि भावाऽनवबोधादेव । यतो नह्यनेन भाष्येण परवैराग्यहेतुकस्याऽसम्प्रज्ञातसमाधे र्द्वैविध्यमन्वाख्यायते येनैवं पर्य्यनुयुज्येत, किन्तर्हि संस्कारमात्रशेषो यः सर्ववृत्तिनिरोधस्तस्य द्वैविध्येनान्वाख्यानमेतत्, तत्र तत्तल्लयप्रयुक्तो यः सर्ववृत्तिनिरोधस्तस्य पुनरावृत्तिहेतुत्वेनाज्ञानपूर्वकत्वाद् भवप्रत्ययत्वम्, यस्तु श्रद्धाद्युपायलब्धजन्मा वृत्तिनिरोधस्तस्य परवैराग्यहेतुकत्वेन निर्वाणहेतुत्वादुपायप्रत्ययत्वम् । अयमेव च मुख्योऽसम्प्रज्ञातो योगो मुमुक्षुभिरुपादेय, इतरस्तु योगाभासो हेय इति हि प्रकृतभाष्यस्य भावः ।

किञ्च "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" पा० १ । सू० २४ । इति सूत्रे भाष्यकृता "प्रकृतिलीनस्योत्तरा बन्धकोटिः" इति स्पष्टमभिधास्यमानत्वेन कथमस्याऽस्थान एव व्यामोहो भिक्षोरित्यलं बहुना ।

भा० विदेहानां देवानां भवप्रत्ययः। ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवाऽनुभवन्तः स्वसंस्कारविपाकं तथा जातीयकमतिवाहयन्ति, तथा प्रकृतिलयाः साऽधिकारे चेतसि प्रकृति-

---

टी० "विदेहानां देवानां भवप्रत्यय" इति। भूतेन्द्रियाणामन्यतमदा[1]त्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपाताऽनन्तरमिन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्राऽवशेषमनसः षाट्कौशिकशरीररहिता[2] विदेहाः। ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवाऽनुभवन्तः=प्राप्नुवन्तो विदेहाः। अवृत्तिकत्वञ्च[3] कैवल्येन सारूप्यं, साधिकारसंस्कारशेषता च वैरूप्यम्। संस्कारमात्रोपभोगेनेति क्वचित्पाठः। तस्याऽर्थः—संस्कारमात्रमेवोपभोगो यस्य, न तु चित्तवृत्तिरित्यर्थः। प्राप्ताऽवधयः स्वसंस्कारविपाकं तथाजातीयकम् अतिवाहयन्ति=अतिक्रामन्ति, पुनरपि संसारे विशन्ति। तथाच वायुप्रोक्तं "दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः भौतिकास्तु शतं पूर्णम्" इति। तथा प्रकृतिलयाश्च=अव्यक्तमहदहङ्कारपञ्चतन्मात्रेष्वन्यतमदात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमव्यक्तादीनामन्यतमस्मिंल्लीनाः। साऽधिकारे=अचरितार्थे। एवंहि चरितार्थं चेतः स्याद् यदि विवेकख्यातिमपि जनयेदजनितसत्त्वपुरुषाऽन्यताख्यातेस्तु चेतसोऽचरितार्थस्याऽस्ति साऽधिकारितेति

---

टि० (१) अन्यतम—शब्दस्याऽव्युत्पन्नत्वेन डतमान्तत्वाभावाद् "अद्ड् डतरादिभ्य" इत्यस्याऽप्राप्तेः, अन्यतमामिति साम्प्रतम्। यद्यपि शाकटायनेनाऽन्यतम-शब्दो डतमान्तो व्युत्पादितस्तथाऽपि न तस्य सर्वाद्यन्तर्गणकार्य्यम्। तन्मतेऽन्यतरशब्दस्याऽपि डतरप्रत्ययान्तत्वेन डतरग्रहणेनैव सिद्धत्वात्सर्वादिगणेऽन्यतर—शब्दपाठस्य नियमार्थत्वेनाऽन्यतम—शब्दस्य सर्वादिकार्य्यव्याकृत्यर्थत्वात्।

(२) षाट्कौशिकशरीररहिताः = "रसाद्वै शोणितं जातं शोणितान्मांससम्भवः। मांसात्तु मेदसो जन्म मेदसोऽस्थिसमुद्भवः। अस्थ्नो मज्जा समभवन्मज्जातः शुक्रसम्भवः शुक्राद् गर्भः समभवत्ततः पिण्डसमुद्भवः" इति स्मृत्युक्तरक्तमांसमेदोऽस्थिमज्जाशुक्राख्यषट्कोशनिर्वृत्तशरीरविधुरा इत्यर्थः।

(३) कैवल्यपदमिवेतीव—शब्दार्थमाह = "अवृत्तिकत्वं च" इति। "विदेहा" इति तु ते हि विदेहा इत्येवं पूर्वान्वयि, न त्वेतदान्वितम्। विदेहेऽवृत्तिकत्वं च कैवल्येन सारूप्यमिति पाठे तु भावप्रधानो निर्देशो बोध्यः।

भा० लीने कैवल्यपदमिवाऽनुभवन्ति यावन्न पुनरावर्त्ततेऽधिकारवशाच्चित्तम् इति ॥१९॥

सू० श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक[१] इतरेषाम् ॥ २० ॥

उपायप्रत्ययो योगिनां भवति, श्रद्धा=चेतसः सम्प्रसादः। सा हि जननीव कल्याणी योगिनं पाति। तस्य श्रद्दधानस्य विवेकार्थिनो वीर्य्यमुपजायते। समुपजातवीर्य्यस्य स्मृतिरुपतिष्ठते। स्मृत्यु-

टी०साऽधिकारे चेतसि प्रकृतौ लीने कैवल्यपदमिवाऽनुभवन्ति यावन्नपुनरावर्त्ततेऽधिकारवशाच्चित्तमिति। प्रकृतिसाम्यमुपगतमप्यवधिं प्राप्य पुनरपि प्रादुर्भवति=ततो विविच्यते। यथा वर्षाऽतिपाते मृद्भावमुपगतो मण्डूकदेहः पुनरम्भोदवारिधाराऽवसेकान्मण्डूकदेहभावमनुभवतीति। तथाच वायुप्रोक्तम् "सहस्रन्त्वाभिमानिकाः। बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रं तु तिष्ठन्त्यव्यक्तचिन्तकाः। पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यत" इति। तदस्य पुनर्भवहेतुतया हेयत्वं सिद्धम् ॥ १९ ॥ योगिनां तु समाधेरुपायक्रममाह "श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्" ॥ ॥ नन्विन्द्रियादिचिन्तका अपि श्रद्धावन्त एवेत्यत आह "श्रद्धा चेतसः सम्प्रसादः" इति। स चाऽऽगमाऽनुमानाऽऽचार्य्योपदेशसमधिगततत्त्वविषयो भवति। स हि चेतसः सम्प्रसादोऽभिरुचिरतीच्छा श्रद्धा[२], नेन्द्रियादिष्वात्माऽभिमानिनामभिरुचिः। असम्प्रसादो हि सः। व्यामोहमूलत्वादित्यर्थः। कुतोऽसावेव श्रद्धेत्यत आह "सा हि जननीव कल्याणी योगिनं पाति" विमार्गपातजन्मनोऽनर्थात्[३]। सोऽयमिच्छाविशेष इष्यमाणविषयं यत्नं प्रसूत इत्याह—"तस्य हि श्रद्दधानस्य"। तस्य विवरणं विवेकार्थिनो वीर्य्यमुपजायते। स्मृतिः=ध्यानम्, अनाकुलम्=अविक्षिप्तं, समाधीयते=योगाङ्गसमाधियुक्तं भवति। यमनियमादिनान्तरीयकसमाध्युपन्या-

टि० (१) वीर्य्य—शब्देन धारणाख्यः प्रयत्नः, स्मृतिशब्देन च ध्यानं, समाधिशब्देन च सम्प्रज्ञातः, प्रज्ञाशब्देन च पूर्वोक्तं ज्ञानप्रसादमात्रं गृह्यते। एतत्कारणक इत्यर्थः।

(२) श्रद्धेत्यस्याग्रे आख्यायते इति शेषः। तथा च चेतसः सम्प्रसाद एवाभिरुचिः, अतीच्छा, श्रद्धेति चाऽख्यायत इत्यर्थः।

(३) कस्मात् पातीत्याकाङ्क्षां पूरयति "विमार्गपातजन्मनोऽनर्थाद्" इति।

भा० पस्थाने च चित्तमनाकुलं समाधीयते, समाहितचित्तस्य प्रज्ञाविवेक उपावर्त्तते, येन यथावद्वस्तु जानाति, तदभ्यासात् तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति ॥ २० ॥

ते खलु नवयोगिनो मृदुमध्याऽधिमात्रोपाया भवन्ति। तद् यथा मृदूपायः, मध्योपायः, अधिमात्रोपायः[1] इति। तत्र मृदूपायोऽपि त्रिविधो मृदुसंवेगः, मध्यसंवेगः, तीव्रसंवेग इति। तथा मध्योपायस्तथाऽधिमात्रोपाय इति। तत्राऽधिमात्रोपायानाम्[2]

टी० सेन च यमनियमादयोऽपि सूचिताः। तदेवमखिलयोगाङ्गसम्पन्नस्य सम्प्रज्ञातो जायत इत्याह। "समाहितचित्तस्य" इति। प्रज्ञाया विवेकः = प्रकर्ष उपजायते। सम्प्रज्ञातपूर्वमसम्प्रज्ञातोत्पादमाह "तदभ्यासाद्" इति। तत्रैव तत्तद्भूमिप्राप्तौ तत्तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति। स हि कैवल्यहेतुः। सत्त्वपुरुषाऽन्यताख्यातिपूर्वो हि निरोधश्चित्तमखिलकार्य्यकरणेन चरितार्थमधिकारादवसादयति॥ २०॥ ननु श्रद्धादयश्चेद् योगोपायास्तर्हि सर्वेषामविशेषेण समाधितत्फले स्याताम्। दृश्यते तु कस्यचित्सिद्धिः, कस्यचिदसिद्धिः, कस्यचिच्चिरेण सिद्धिः, कस्यचिच्चिरतरेणसिद्धिः, कस्यचित् क्षिप्रमित्यत आह "ते खलु नवयोगिन" इति। उपायाः = श्रद्धादयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्काराऽदृष्टवशाद् येषां ते तथोक्ताः। संवेगः = वैराग्यं[3] तस्याऽपि मृदुमध्यतीव्रता प्राग्भवीयवासनाऽदृष्टवशादेवेति। तेषु यादृशां क्षेपीयसी * सिद्धिस्तान् दर्शयति सूत्रेण—

टि० (१) अधि = अधिकं प्रमाणं येषां तेऽधिमात्रास्तादृशा उपायाः = श्रद्धादयोऽनुष्ठेया यस्याऽसावऽधिमात्रोपाय इत्यर्थः।

(२) तत्र = तेषु नवसु, तेषां नवविधानां योगिनां मध्ये येऽन्तिमा अधिमात्रोपायतीव्रसंवेगास्तेषामासन्नः समाधिलाभ इति सूत्रेण सहैकवाक्यतयाऽन्वयनीयम्। एतेन यद् विज्ञानभिक्षुणोक्तं "कश्चिद् अधिमात्रोपायानामिति सूत्रमध्ये न प्रवेशयति। तन्न। तथा सति संवेगस्य त्रिधा विभागेनैव सूत्रोपपत्तौ भाष्ये नवधाविभागप्रदर्शनवैयर्थ्यापत्तेरिति"। तन्निर्दलितम्। अध्याहारे सूत्रान्तःपाठे वाऽर्थभेदाभावात्।

(३) यत्तु विज्ञानभिक्षुणोक्तं 'संवेग = उपायाऽनुष्ठाने शैघ्र्यं, न तु वैराग्यं योगिनो नवधात्वाऽनुपपत्तेरिति। तदसत् 'अधिमात्रोपाय इत्यनेनैवोपायाऽऽनुष्ठानशैघ्र्यलाभाद्, नवधात्वाऽनुपपत्तेरसम्भवदुक्तिकत्वाच्चेत्यलं कुसृष्टिकल्पनया।

* अतिशीघ्रम्।

सू० तीव्रसंवेगानामासन्नः ॥ २१ ॥

भा० समाधिलाभः समाधिफलं च भवति इति ॥ २१ ॥

सू० मृदुमध्याऽधिमात्रत्वात्ततोऽपि विशेषः[१]॥ २२ ॥

भा० मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति ततोऽपि विशेषः। तद्विशेषा[२]न्मृदुतीव्रसंवेगस्या[३]सन्नः। ततो मध्यतीव्रसंवेगस्यासन्नतरः। तस्मादधिमात्रतीव्रसंवेगस्याऽधिमात्रोपायस्याऽप्यासन्नतमः समाधिलाभः समाधिफलञ्चेति ॥ २२ ॥

किमेतस्मादेवासन्नतमः समाधिर्भवति, अथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो, न वेति।

सू० ईश्वरप्रणिधानाद्वा[४] ॥ २३ ॥

---

टी० "तीव्रसंवेगानामासन्नः" ॥ २१ ॥ इति सूत्रं, शेषं भाष्यम्। समाधेः सम्प्रज्ञातस्य फलमसम्प्रज्ञातस्तस्याऽपि कैवल्यम् ॥ २१॥ ॥ "मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः" निगदव्याख्यातेन भाष्येण व्याख्यातम् इति ॥२२॥ ॥ सूत्रान्तरं पातयितुं विमृशति। "किमेतस्मादेव" इति। नवा=शब्दः संशयनिवर्त्तकः ॥ "ईश्वरप्रणिधानाद्वा"॥ २३॥ व्याचष्टे "प्रणिधानाद्" इति। प्रणिधानाद्=भक्तिविशेषान्मानसाद्वाचिकात्कायिकाद्वा

---

टि० (१) पूर्वसूत्रोक्ततीव्रसंवेगाऽन्तर्गततीव्रत्वस्यापि मृदुमध्याधिमात्रत्वेन त्रैविध्यात् ततोऽपि=आसन्नादपि विशेषः =तरतमरूपो भवतीत्यर्थः।

(२) तद्विशेषादपीति पाठे तु, तस्माद् विशेषादपि नवानां त्रिविधानां मध्येऽन्तिमानाम् आसन्नतम इत्यर्थः। अपि—शब्द आगामिसाधनान्तराऽपेक्षयेति बोध्यम्।

(३) मृदुतीव्रसंवेगस्येत्यत्र मध्यतीव्रसंवेगस्येत्यत्र चाऽधिमात्रोपायस्येति शेषो बोध्यः। अग्रिमभाष्यादपकर्षणीयं वा।

(४) अत्र पूर्वसूत्रादासन्नतमः समाधिलाभ इत्यर्थकं विशेष इति पदमनुवर्त्याकाङ्क्षितं पूरणीयम्।

भा० प्रणिधानाद्=भक्तिविशेषाद् आवर्जित ईश्वरस्तमनुगृह्णात्यभिध्यानमात्रेण, तदभिध्यानादपि योगिन आसन्नतमः समाधिलाभः फलं च भवतीति ॥ २३ ॥

अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नामेति ।

सू० क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥

भा० अविद्यादयः क्लेशाः, कुशलाऽकुशलानि कर्माणि, तत्फलं विपाकः, तदनुगुणा वासना आशयाः ।

---

टी०आवर्जितः=अभिमुखीकृतस्तमनुगृह्णाति। अभिध्यानम्=अनागतेऽर्थे इच्छा इदमस्याभिमतमस्त्विति, तन्मात्रेण[१] न व्यापारान्तरेण। शेषं सुगमम् ॥ २३ ॥ ननु चेतनाऽचेतनाभ्यामेव व्यूढं[२] नान्येन विश्वम् । ईश्वरश्चेदचेतनस्तर्हि प्रधानं, प्रधानविकाराणामपि प्रधानमध्यपातात्, तथाच न तस्याऽऽवर्जनमचेतनत्वाद्, अथ चेतनस्तथाऽपि चितिशक्तेरौदासीन्यादसंसारितया चास्मितादिविरहात्कुत आवर्जनं कुतश्चाभिध्यानमित्याशयवानाह "अथ प्रधाने"ति । अत्र सूत्रेणोत्तरमाह ॥ "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"॥ अविद्यादयः क्लेशाः=क्लिश्नन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति, कुशलाऽकुशलानि=इति धर्माधर्मास्तेषाञ्च कर्मजत्वाद् उपचारात् कर्मत्वम्। विपाकः=जात्यायुर्भोगाः, तदनुगुणाः=विपाकानुगुणा वासनाः, तास्चित्तभूमावाशेरत इत्याशयाः। न हि

---

टि० (१) तन्मात्रेण=क्षिप्रमस्य समाधिलाभो भवत्विति संकल्पमात्रेण तमनुगृह्णाति इति पूर्वेण संबन्धः। तदुक्तं भगवता, "अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासते तेषां नित्याऽभियुक्तानां योगक्षेमं वहाम्यहम्" इति ।

(२) व्यूढं=संवलितम, अस्य विश्वमित्यनेनाऽन्वयः ।

भा० ते च[1] मनसि वर्त्तमानाः पुरुषे व्यपदिश्यन्ते। स हि तत्फलस्य भोक्तेति, यथा जयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्यते । यो ह्यनेन भोगेनाऽपरामृष्टः स पुरुषविशेष ईश्वरः । कैवल्यं[2] प्राप्तास्तर्हि सन्ति च बहवः केवलिनः । ते हि त्रीणि बन्धनानि छित्त्वा कैवल्यं प्राप्ताः । ईश्वरस्य च तत्संबन्धो न भूतो न भावी। यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते, नैवमीश्वरस्य। यथा वा प्रकृतिलीनस्योत्तरा बन्धकोटिः संभाव्यते नैवमीश्वरस्य,

---

टी० करभजातिनिर्वर्त्तकं कर्म प्राग्भवीयकरभभोगभावितां भावनां न यावदभिव्यनक्ति तावत्करभोचिताय भोगाय कल्पते। तस्माद् भवति करभजात्यनुभवजन्मा भावना करभविपाकानुगुणेति । नन्वमी क्लेशादयो बुद्धिधर्मा न कथञ्चिदपि पुरुषं परामृशन्ति । तस्मात्पुरुषग्रहणादेव तदपरामर्शसिद्धेः कृतं क्लेशकर्मेत्यादिनेत्यत आह "ते" इति । ते च मनसि वर्त्तमानाः सांसारिके पुरुषे व्यपदिश्यन्ते, कस्मात्, स हि तत्फलस्य भोक्ता = चेतयितेति । तस्मात्पुरुषत्वाद् ईश्वरस्यापि तत्संबन्धः प्राप्त इति तत्प्रतिषेध उपपद्यत इत्याह "यः" इति । यो ह्यनेन = बुद्धिस्थेनापि पुरुषमात्रसाधारणेन भोगेनाऽपरामृष्टः स पुरुषविशेष ईश्वरः । विशिष्यत इति विशेषः[3] पुरुषान्तराद् व्यवच्छिद्यते । विशेषपदव्यावर्त्त्यं दर्शयितुकामः परिचोदनापूर्वं परिहरति "कैवल्यं प्राप्तास्तर्हि" इति । प्रकृतिलयानां प्राकृतो बन्धः, वैकारिको विदेहानाम्, दक्षिणाबन्धो[4] दिव्याऽदिव्यविषयभाजाम् । तान्यमूनि त्रीणि बन्धनानि । प्रकृतिभावनासंस्कृतमनसो हि देहपातानन्तरमेव प्रकृतिलयतामापन्ना इतीतरेषां पूर्वा

---

टि०(१) चकारो यद्यपीत्यर्थकः। तथाच यद्यपि ते क्लेशादयो मनसि वर्त्तमानास्तथाऽपि पुरुष उपचर्यन्ते इत्यर्थः। उपचारनिमित्तमाह "स हीति" । तत्र दृष्टान्तमाह "यथा जय" इत्यादिना

(२) निरीश्वरसाङ्ख्यः प्रत्यवतिष्ठते "कैवल्यम्" इति। यदि क्लेशाद्यभिष्वङ्गशून्य एव पुरुषविशेष ईश्वर इष्टस्तर्हि कैवल्यं प्राप्ताः=मुक्तात्मानश्चकारात् प्रकृतिलीना बहवः क्लेशशून्याः सन्ति, सन्तु च त एवेश्वरा, न तु तदतिरिक्तः कश्चिन्नः प्रमाणपथमवतरतीति। तथाच, सां० सू० "ईश्वरासिद्धेः" "मुक्तात्मनः प्रशंसोपासासिद्धस्य वा" "ईदृशेश्वरसिद्धिः सिद्धा" इति, इति शङ्काऽऽकूतम्। समाधत्ते "ते" इति

(३) विशिष्यत इत्यस्य व्याख्यानं पुरुषान्तराद् व्यवच्छिद्यत इति ।

(४) दाक्षिणिको बन्ध इति पाठे तु दक्षिणमार्गगमनप्रयुक्तो बन्ध इत्यर्थो बोध्यः ।

भा० स तु सदैव मुक्तः सदैवेश्वर इति। योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्षः स किं सनिमित्त, आहोस्विन्निर्निमित्त इति।

---

टी० बन्धकोटिः प्रज्ञायते तेनोत्तरकोटिविधानमात्रम्[१] इह[२] तु पूर्वापरकोटिनिषेध इति। संक्षिप्य विशेषं दर्शयति "स तु सदैव मुक्तः सदैवेश्वर" इति। ज्ञानक्रियाशक्तिसम्पदैश्वर्य्यः। अत्र पृच्छति।

"योऽसौ" इति। ज्ञानक्रिये हि न चिच्छक्तेरपरिणामिन्याः सम्भवत इति रजस्तमोरहितविशुद्धचित्तसत्त्वाश्रये वक्तव्ये। नचेश्वरस्य सदा मुक्तस्याऽविद्याप्रभवचित्तसत्त्वसमुत्कर्षेण सह स्वस्वामिभावसम्बन्धः सम्भवतीत्यत उक्तं "प्रकृष्टसत्त्वोपादानाद्" इति। नेश्वरस्य पृथग्जनस्येवाऽविद्यानिबन्धनश्चित्तसत्त्वेन स्वस्वामिभावः, किन्तु तापत्रयपरीतान् प्रेत्यभावमहार्णवाज्जन्तूनुद्धरिष्यामि ज्ञानधर्मोपदेशेन[३]। न च ज्ञानक्रियासामर्थ्यातिशयसम्पत्तिमन्तरेण तदुपदेशः, न चे[४]यमपहतरजस्तमोमलविशुद्धसत्त्वोपादानं विना, इत्यालोच्य सत्त्वप्रकर्षमुपादत्ते भगवान् अपरामृष्टोऽप्यविद्ययाऽविद्याभिमानीव अविद्यायास्तत्त्वमविद्वान् भवति, न पुनरविद्यां ह्यविद्यात्वेन सेवमानः। न खलु शैलूषो(५)रामत्वमारोप्य तास्ताश्चेष्टा दर्शयन् भ्रान्तो भवति। तदिदमाहार्य्यमस्य*रूपं, न तात्त्विकमिति। स्यादेतत्। उद्दिधीर्षया भगवता सत्त्वमुपादेयं, तदुपादानेन च तदुद्दिधीर्षा

---

टि० (१) मुक्तात्मनां प्रकृतिलीनानां च पूर्वा बन्धकोटिर्यद्यपि समानैव तथाऽपि प्रकृतिलीनानामुत्तराऽपि बन्धकोटिरस्तीत्याशयेनोत्तरकोटिविधाने तात्पर्य्यं, न तु पूर्वकोटयऽसद्भावेऽतो न भाष्ये न्यूनता इति भावः। (२) इह = ईश्वरे। (३) धर्मोपदेशेन— इत्यस्य, इत्यालोच्य सत्त्वप्रकर्षमुपादत्ते भगवानित्यनेन सम्बन्धः। (४) इयम् = ज्ञानक्रियासामर्थ्याऽतिशयसम्पत्तिः।

(५) अविद्याया अविद्यात्वमजानन्नेव भ्रान्तो भवति, न तु जानन्नित्यर्थे दृष्टान्तमाह "न खलु शैलूष" इति। शैलूषः = नटः। एतद्दृष्टान्ताऽनुरोधेन तु 'अविद्यायास्तत्त्वमऽविद्वानेवाऽविद्वान् भवति, न पुनरविद्यामविद्यात्वेन सेवमान इति पूर्वत्र पाठो युक्ततरो भाति, परन्तु न कुत्राप्युपलभ्यत इति। *आहार्य्यं = कल्पितम्।

भा० तस्य शास्त्रं निमित्तम्। शास्त्रं पुनः किन्निमित्तं, प्रकृष्टसत्त्वनिमित्तम् ॥

---

टी०अस्या अपि प्राकृतत्वात्तथा चाऽन्योऽन्यसंश्रय इत्यत उक्तं "शाश्वतिक" इति। भवेदेतदेवं यदीयं प्रथमता सर्गस्य भवेदनादौ तु सर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नसंजिहीर्षाऽवधिसमये पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवान् जगत्संजहार, तदा चेश्वरचित्तसत्त्वं प्रणिधानवासितं प्रधानसाम्यमुपगतमपि परिपूर्णे महाप्रलयावधौ प्रणिधानवासनावशात्तथैवैश्वरचित्तं सत्त्वभावेन परिणमते। यथा चैत्रः, श्वः प्रातरेवोत्थातव्यं मयेति प्रणिधाय सुप्तस्तदैवोत्तिष्ठति प्रणिधानसंस्कारात्, तस्मादनादित्वादीश्वरप्रणिधानसत्त्वोपादानयोःशाश्वतिकत्वेन नाऽन्योऽन्यसंश्रयः। नचेश्वरस्य चित्तसत्त्वं महाप्रलयेऽपि प्रकृतिसाम्यं नोपैतीति वाच्यम्। यस्य हि न कदाचिदपि प्रधानसाम्यं न तत्प्राधानिकं,नापि चितिशक्तिरज्ञत्वादित्यर्थान्तरमऽप्रामाणिकमापद्येत, तच्चायुक्तं, प्रकृतिपुरुषव्यतिरेकेणार्थान्तराऽभावात् सोऽयमीदृश ईश्वरस्य शाश्वतिक उत्कर्षः किं सनिमित्तः=सप्रामाणिकः, आहोस्विन्निर्निमित्तः=निष्प्रमाणक इति। उत्तरं "तस्य शास्त्रं निमित्तम्" इति। श्रुतिस्मृतीतिहासपुराणानि शास्त्रम्।चोदयति "शास्त्रं पुनः किन्निमित्तम्"इति। प्रत्यक्षाऽनुमानपूर्वं हि शास्त्रं, नचेश्वरस्य सत्त्वप्रकर्षे कस्यचित्प्रत्यक्षमनुमानं वाऽस्ति। नचेश्वरप्रत्यक्षप्रभवं शास्त्रमिति युक्तं, कल्पयित्वाऽपि[1] ह्ययं स्वयं ब्रूयादात्मैश्वर्य्यप्रकाशनायेति भावः। परिहरति। "प्रकृष्टसत्त्वनिमित्तम्" इति। अयमभिसन्धिः। मन्त्रायुर्वेदेषु[2] तावदीश्वरप्रणीतेषु

---

टि० (१)अयुक्तत्वे हेतुमाह"कल्पयित्वाऽपि" इति। न चाऽऽप्तत्वेन निर्वाहः, तस्याऽद्याप्यसिद्धेः। स्पष्टं चैतत् "न चाऽनुवदितुं शक्यः पूर्वमन्यैरबोधितः। अनादेरागमस्याऽर्थो न च सर्वज्ञ आदिमान्। कृत्रिमेण त्वसत्येन स कथं प्रतिपाद्यते। अथ तद्वचनेनैव सर्वज्ञोऽन्यैः प्रतीयते। प्रकल्पयेत् कथं सिद्धिरन्योऽन्याश्रययोस्तयोरि"त्यादिना तन्त्रवार्त्तिके।

(२) भगवताऽक्षपादेन हि "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" अ० १ आ० १ सू० ५३ इत्यनेन वेदाऽप्रामाण्यमाशङ्क्य "न कर्तृकर्मसाधनवैगुण्याद्"इत्यनेन समाधाय "मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रमाणत्वाद्" इति सूत्रेण वेदप्रामाण्यं प्रतिपादितम्। तदेवाऽत्राप्याह "मन्त्र" इत्यादिना। अधिकमात्मतत्त्वविवेकादवसेयम्।

भा० एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे[१] वर्त्तमानयोरनादिः सम्बन्धः। एतस्मादेतद् भवति सदैवेश्वरः सदैव मुक्त इति। तच्च तस्यैश्वर्य्यं साम्यातिशयविनिर्मुक्तं, न तावदैश्वर्य्यान्तरेण तदतिशय्यते, यदेवातिशयि स्यात् तदेव तत्स्यात्। तस्माद् यत्र काष्ठाप्राप्तिरैश्वर्य्यस्य

टी० प्रवृत्तिसामर्थ्यादर्थाऽव्यभिचारविनिश्चयात्प्रामाण्यं सिद्धं, नचौषधिभेदानां तत्तत्संयोगविशेषाणाञ्च मन्त्राणां च तत्तद्वर्णाऽऽवापोद्धारेण सहस्रेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारी शक्तः कर्तुमन्वयव्यतिरेकौ[२]। नचागमादन्वयव्यतिरेकौ ताभ्याञ्चागमस्तत्सन्तानयोरनादित्वादिति प्रतिपादयितुं युक्तम्। महाप्रलये तत्सत्त्वादनयोर्विच्छेदात्। न च तद्भावे प्रमाणाभावः, अभिन्नं प्रधानविकारो हि जगदिति प्रतिपादयिष्यते। सदृशपरिणामस्य विसदृशपरिणामता दृष्टा यथा क्षीरेक्षुरसादेर्दधिगुडादिरूपं, विसदृशपरिणामस्य पूर्वं सदृशपरिणामता च दृष्टा, तदिह प्रधानेनापि महदहङ्कारादिरूपविसदृशपरिणामेन सता भाव्यं कदाचित्सदृशपरिणामेनापि, सदृशपरिणामश्चास्य साम्यावस्था, स च महाप्रलयः। तस्मान्मन्त्रायुर्वेदप्रणयनात्तावद् भगवतो विगलितरजस्तमोमलावरणतया परितःप्रद्योतमानं बुद्धिसत्त्वमास्थेयम्। तथाचाभ्युदयनिःश्रेयसोपदेशपरोऽपि वेदराशिरीश्वरप्रणीतस्तद्बुद्धिसत्त्वप्रकर्षादेव भवितुमर्हति। नच सत्त्वोत्कर्षे रजस्तमःप्रभवौ विभ्रमविप्रलम्भौ सम्भवतस्तत्सिद्धं प्रकृष्टसत्त्वनिमित्तं शास्त्रमिति। स्यादेतत्, प्रकर्षकार्य्यतया प्रकर्षबोधयच्छास्त्रं शेषवदनुमानं भवेन्न त्वागम इत्यत आह "एतयोः" इति। न कार्य्यत्वेन बोधयत्यपि त्वनादिवाच्यवाचकभावसम्बन्धेन बोधयतीत्यर्थः। ईश्वरस्य हि बुद्धिसत्त्वे प्रकर्षो वर्त्तते शास्त्रमपि तद्वाचकत्वेन तत्र वर्त्तत इति। उपसंहरति। "एतस्माद्" इति। एतस्माद् ईश्वरबुद्धिसत्त्वप्रकर्षवाचकाच्छास्त्राद्, एतद् भवति = ज्ञायते विषयेण विषयिणो लक्षणात्, सदैवेश्वरः सदैव मुक्त इति। तदेवं पुरुषान्तराद् व्यवच्छिद्येश्वरान्तरादपि व्यवच्छिनत्ति। "तच्च तस्य" इति। अतिशयविनिर्मुक्तिमाह "न तावद्" इति।

टि० (१) समवायेनेश्वरचित्ते वर्त्तमानयोरेतयोर्निमित्तनैमित्तिकभावोऽनादिरिति भावः।
(२) उपलक्षणं चैतद्विषादिष्वन्वयव्यतिरेककरणेऽसमर्थोऽऽप्तश्च।

भा० स ईश्वरः। न च तत्समानमैश्वर्य्यमस्ति, कस्माद्, द्वयोस्तुल्ययोरेकस्मिन्[१] युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्त्वित्येकस्य सिद्धावितरस्य प्राकाम्यविघाताद्ूनत्वं प्रसक्तं, द्वयोश्च तुल्ययोर्युगपत्कामितार्थप्राप्तिर्नास्त्यर्थस्य विरुद्धत्वात्, तस्माद् यस्य साम्यातिशयविनिर्मुक्तमैश्वर्य्यं स ईश्वरः स च पुरुषविशेष इति ॥ २४ ॥ ॥ किञ्च—

सू० तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥

यदिदमतीताऽनागतप्रत्युत्पन्न[२]प्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सर्वज्ञबीजम्। एतद्धि वर्धमानं यत्र निरतिशयं

---

टी० कुतः "यदत्र" इति। कस्मात्सर्वातिशयविनिर्मुक्तं तदैश्वर्य्यमित्यत आह "तस्माद् यत्र" इति। अतिशयानिष्ठामप्राप्तानामौपचारिकमैश्वर्य्यमित्यर्थः। साम्यविनिर्मुक्तिमाह "न च तत्समानम्" इति। प्राकाम्यम् = अविहतेच्छता तद्विघाताद्नत्वम्। अनूनत्वे वा द्वयोरपि प्राकाम्यविघातः कार्य्यानुत्पत्तेः। उत्पत्तौ वा विरुद्धधर्मसमालिङ्गितमेकदा कार्य्यमुपलभ्येतेत्याशयेन आह "द्वयोश्च" इति। अविरुद्धाऽभिप्रायत्वे च प्रत्येकमीश्वरत्वे कृतमन्यैरेकेनैवेशनायाः कृतत्वात्। संभूय कारित्वे वा न कश्चिदीश्वरः, परिषद्वत्। नित्येशनायोगिनां च पर्य्यायायोगात्, कल्पनागौरवप्रसङ्गाच्चेति द्रष्टव्यम्। तस्मात् सर्वमवदातम् ॥२४॥ एवमस्य क्रियाज्ञानशक्तौ शास्त्रं प्रमाणमभिधाय ज्ञानशक्तावनुमानं प्रमाणयति "किञ्च" इति। "तत्र निरतिशयं सर्वज्ञबीजम्" = व्याचष्टे "यदिदम्" इति। बुद्धिसत्त्वावरकतमोऽपगमतारतम्येन यदिदमतीतानागतप्रत्युत्पन्नानां प्रत्येकं च समुच्चयेन च वर्त्तमानानामतीन्द्रियाणां ग्रहणं तस्य विशेषणमल्पं बह्विति सर्वज्ञबीजं = कारणं, कश्चित् किञ्चिदेवातीतादि गृह्णाति, कश्चिद् बहु, कश्चिद् बहु-

---

टि० (१) एकस्मिन्नित्यस्य अर्थे इत्यनेनाऽन्वयः, द्वयोस्तुल्ययोरीश्वरयोः सतोरेकस्मिन्नर्थे नवमिदं स्यात्पुराणमिदमास्त्विति कामिते सति नवपुराणत्वयोरेककाल एकस्मिन् वस्तुन्यसम्भवादेकस्य सङ्कल्पसिद्धावितरस्येच्छाविघातान्न्यूनत्वं प्रसक्तं, तच्चाऽनिष्टमिति भाष्यार्थः।

(२) प्रत्युत्पन्न—शब्दो वर्त्तमानार्थकः।

भा० स सर्वज्ञः। अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य सातिशयत्वात् परिमाणवदिति। यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्वज्ञः स च पुरुषविशेष इति। सामान्यमात्रोपसंहारे कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थमिति तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्य्यन्वेष्या।

टी० तरमिति ग्राह्याऽपेक्षया ग्रहणस्याल्पत्वं बहुत्वं कृतम्। एतद्धि वर्द्धमानं यत्र निष्क्रान्तमतिशयात् स सर्वज्ञ इति। तदनेन प्रमेयमात्रं कथितम्, अत्र प्रमाणयति "अस्ति" इति। अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य इति साध्यनिर्देशः। निरतिशयत्वं काष्ठा, यतः परमतिशयवत्ता नास्तीति। तेन नाऽवधिमात्रेण सिद्धसाधनम्। सातिशयत्वादिति हेतुः। यद् यत् सातिशयं तत्तत्सर्वं निरतिशयं, यथा कुवलयामलकबिल्वेषु सातिशयं महत्त्वमात्मनि निरतिशयमिति व्याप्तिं दर्शयति "परिमाणवद्" इति। न च गरिमादिभिर्गुणैर्व्यभिचार[१] इति साम्प्रतम्। न खल्ववयवगरिमाऽतिशयी गरिमाऽवयविनः,किन्त्वाऽऽपरमाणुभ्य, आ अन्त्याऽवयविभ्यो यावन्तः केचन तेषां प्रत्येकवर्त्तिनो गरिम्णः समाहृत्य गरिमवर्द्धमानाभिमानः। ज्ञानं तु न प्रति ज्ञेयं समाप्यत इत्येकद्विबहुविषयतया युक्तं सातिशयमिति न व्यभिचारः। उपसंहरति। "यत्र काष्ठा" इति। ननु सन्ति बहवस्तीर्थकरा* बुद्धार्हतकपिलर्षिप्रभृतयस्तत् कस्मात् त एव सर्वज्ञा न भवन्ति अस्मादनुमानादित्यत आह "सामान्य" इति। कुतस्तर्हि तद्विशेषप्रतिपत्तिरित्यत आह "तस्य" इति। बुद्धादिप्रणीत आगमाऽऽभासो,नत्वाऽऽगमः, सर्वप्रमाणबाधितक्षणिकनैरात्म्यादिमार्गोपदेशकत्वेन विप्रलम्भकत्वादिति भावः। तेन श्रुतिस्मृतीतिहासपुराणलक्षणाद्, आगमतः= आगच्छन्ति= बुद्धिमारोहन्त्यस्मादभ्युदयनिःश्रेयसोपाया इत्यागमस्तस्मात् सञ्ज्ञादिविशेषप्रतिपत्तिः = सञ्ज्ञाविशेषः = शिवेश्वरादिः श्रुत्यादिषु प्रसिद्धः। आदिशब्देन षडङ्गता-दशाऽव्ययते सङ्गृहीते। तथोक्तं वायुपुराणे "सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य"॥ तथा "ज्ञानं वैराग्यमैश्वर्य्यं तपः सत्यं

१ गुरुत्वादिषु सत्यपि सातिशयत्वे काष्ठाप्राप्तिरूपसाध्याभावेन व्यभिचारो बोध्यः। *शास्त्रप्रणेतारः

भा० तस्याऽऽत्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनं, ज्ञानधर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति

---

टी० क्षमा धृतिः।स्रष्टृत्वमात्मसंबोधो ह्यधिष्ठातृत्वमेव च। अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे" इति। स्यादेतत्, नित्यतृप्तस्य(१) भगवतो वैराग्याऽतिशयसम्पन्नस्य स्वार्थे तृष्णाऽसम्भवात्, कारुणिकस्य च सुखैकतानजनसर्जनपरस्य दुःखबहुलजीवलोकजननाऽनुपपत्तेः, अप्रयोजनस्य च प्रेक्षावतः प्रवृत्त्यनुपपत्तेः, क्रियाशक्तिशालिनोऽपि न जगत्क्रियेत्यत आह "तस्याऽऽत्माऽनुग्रहाऽभावेऽपि" इति। भूतानां=प्राणिनामनुग्रहः प्रयोजनं, शब्दाद्युपभोगविवेकख्यातिरूपकार्य्यकरणात्किल चित्तं निवर्त्तते ततःपुरुषः केवली भवति। अतस्तत्प्रयोजनाय कारुणिको विवेकख्यात्युपायं कथयति, तेनाऽचरितार्थत्वाच्चित्तस्य जन्तुर्नाश्वरः पुण्याऽपुण्यसहायः सुखदुःखे भावयन्नपिनाऽकारुणिकः। विवेकख्यात्युपायकथने द्वारमाह "ज्ञानधर्मोपदेशेन" इति। ज्ञानं च धर्मश्च ज्ञानधर्मौ तयोरुपदेशेन,—ज्ञानधर्मसमुच्चयाल्लब्धविवेकख्यातिपरिपाकात् कल्पप्रलये=ब्रह्मणो दिवसावसाने यत्र सत्यलोकवर्ज्जं जगदस्तमेति। महाप्रलये=ससत्त्यलोकस्य ब्रह्मणोऽपि निधने संसारिणः=कारणगामिनः, अतस्तदाऽऽमरणदुःखभाजः। कल्पेत्युपलक्षणमन्यदाऽपि स्वाऽर्जितकर्मवशेन जन्ममरणादिभाजः पुरुषानुद्धरिष्यामीति, कैवल्यं प्राप्यपुरुषा उद्धृता भवन्तीत्यर्थः। एतच्च करुणाप्रयुक्तस्य ज्ञानधर्मोपदेशनं

---

टि० (१) निरीश्वरवादीश्वरकर्तृकत्वं जगत आक्षिपन् त्रिधा विकल्प्य शङ्कते 'नित्यतृप्तस्या-दिना। अयं भावः। येयमीश्वरप्रवृत्तिः सा किमात्मप्रयोजनोपयोगिनी, किं वा कारुण्यव्याप्ततया परप्रयोजनोपयोगिनी, किमुन्मत्तवन्निष्प्रयोजना वा? न तावदाद्यः। तथा सतीश्वरस्य परितृप्तत्वं श्रूयमाणं बाध्येतेत्याह "नित्यतृप्तस्य" इति। नाऽपि द्वितीय इत्याह "कारुणिकस्य चेति। न तृतीयः। न ह्युन्मत्तवदस्य मतिविभ्रमात्प्रवृत्तिरिति वाचोयुक्तिः, भ्रान्तस्य सर्वज्ञत्वाऽनुपपत्तेस्तस्मात्प्रेक्षावताऽनेन जगत्कर्त्तव्यं प्रेक्षावतश्च प्रवृत्तिः स्वपरहिताऽहितप्राप्तिपरिहारप्रयोजना सती नाऽप्रयोजना भवितुमर्हतीत्याह 'अप्रयोजनस्य चेति।

भा० तथाचोक्तम् "आदिविद्वान्निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच"(१) इति॥२५॥

टी० कापिलानामपि सिद्धमित्याह—"तथाचोक्तम्" इति । तथाचोक्तं पञ्चशिखाऽऽचार्य्येण । आदिविद्वान् = कपिल इति । "आदिविद्वान्" इति पञ्चशिखाऽऽचार्य्यवचनमादिमुक्तस्वसन्तानादिगुरुविषयं, न त्वनादिमुक्तपरमगुरुविषयम् । आदिमुक्तेषु कदाचिन्मुक्तेषु विद्वत्सु कपिलोऽस्माकमादिविद्वान्मुक्तः स एव च गुरुरिति । कपिलस्याऽपि(२) जायमानस्य महेश्वराऽनुग्रहादेव ज्ञानप्राप्तिः श्रूयत इति । कपिलो नाम विष्णोरवतारविशेषः प्रसिद्धः(३) । स्वयम्भू(४) र्हिरण्यगर्भस्तस्याऽपि साङ्ख्ययोगप्राप्तिर्वेदे श्रूयते । स एवेश्वर आदिविद्वान् कपिलो विष्णुः स्वयम्भूरिति भावः "स्वायम्भुवानान्त्वीश्वर" इति भावः ॥ २५ ॥

टि० (१) आदिविद्वान् = सर्गादावाविर्भूतो हिरण्यगर्भः स्वयम्भूः, निर्माणचित्तं = योगबलेन स्वनिर्मितं चित्तम्, अधिष्ठाय = स्वांशेन प्रविश्य, कपिलाऽख्यपरमर्षिर्भूत्वा कारुण्याज्जिज्ञासवे आसुरये तन्त्रं प्रोवाचेत्यर्थः । तन्त्र्यते = व्युत्पाद्यते मोक्षसाधनमनेनेति तन्त्रं, मोक्षशास्त्रम्, तत्त्वमिति पाठान्तरम् ।

(२) कपिलस्याऽनादिमुक्तत्वाऽभावे हेतुमाह "कपिलस्याऽपि" इति । यतः "ऋषिम्प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानं च पश्येद्" इति श्रुत्या कपिलस्य जायमानस्य ज्ञानप्राप्तिः श्रूयतेऽतः कपिल आदिविद्वानाऽऽदिमुक्त एव, न त्वनादिमुक्त इत्यर्थः ।

(३) "पञ्चमे कपिलो नाम सिद्धेशः कालविप्लुतं । प्रोवाचाऽऽसुरये साङ्ख्यं तत्त्वग्रामविनिर्णयम्" इतिस्मृतौ पञ्चमाऽवतारत्वोक्तेर्विष्णोरवतारः कपिल इति भावः । "अग्निः स कपिलो नाम साङ्ख्यशास्त्रप्रवर्त्तक" इति महाभारतं तु कल्पभेदेन नेयम् । कल्पभेदेनैव च कुत्राचित् कपिलो ब्रह्मपुत्र इति स्मर्य्यत इत्यलं बहुना ।

(४) ननु "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" "हिरण्यगर्भं पश्यत जायमानं" "हिरण्यगर्भं जनयामास पूर्वम्" इत्यादिश्रुतिषु हिरण्यगर्भ एवादिविद्वानाम्नायते तत्कथं कपिल आदिविद्वान् इत्यत आह "स्वयम्भूः" इत्यादिना । यो हिरण्यगर्भः स्वयम्भूरादिविद्वान् स एव कपिलो भूत्वाऽऽसुरय उपदिदेशेति भावः । न स्वयम्भूरिति पाठे तु, यद्यपि हिरण्यगर्भोऽप्यादिविद्वाँस्तथाप्यत्रादिविद्वत्पदेन कपिल एव गृह्यते, न स्वयम्भूरित्यर्थो बोध्यः । भास्कराऽऽचार्य्यप्रभृतयस्तु 'ऋषिं प्रसूतं कपिलम्' इति कपिलपदेनाऽपि हिरण्यगर्भ एव गृह्यते "यो ब्रह्माणम्" इत्यादि बहुपूर्वोत्तरमन्त्रसंवादादित्याहुः ।

भा० स एषः ।

सू० पूर्वेषामपि गुरुः कालेनाऽनवच्छेदात् ॥ २६ ॥

पूर्वे हि गुरवः कालेनाऽवच्छेद्यन्ते, यत्राऽवच्छेदार्थेन कालो नोपावर्त्तते स एष पूर्वेषामपि गुरुः, यथाऽस्य सर्गस्याऽऽदौ प्रकर्षगत्या सिद्धस्तथाऽतिक्रान्तसर्गादिष्वपि प्रत्येतव्यः ॥ २६ ॥

सू० तस्य वाचकः प्रणवः(१) ॥ २७ ॥

भा० वाच्य ईश्वरः प्रणवस्य । किमस्य सङ्केतकृतं वाच्यवाचकत्वम्

---

टी० सम्प्रति भगवतो ब्रह्मादिभ्यो विशेषमाह "स एष" इति। पातनिका—"स एष" इति। सूत्रं—"पूर्वेषामपि गुरुः कालेनाऽनवच्छेदात्" ॥ व्याचष्टे "पूर्वे हि" इति। कालस्तु=शतवर्षादिः, अवच्छेदार्थेन=अवच्छेदेन प्रयोजनेन, नोपावर्त्तते=न वर्त्तते, प्रकर्षस्य गतिः=प्राप्तिः, प्रत्येतव्य आगमादिति भावः ॥२६॥ ॥ तदनेन प्रबन्धेन भगवानीश्वरो दर्शितः, सम्प्रति तत्प्रणिधानं दर्शयितुं तस्य वाचकमाह ॥ "तस्य वाचकः प्रणवः" ।

व्याचष्टे "वाच्य" इति। तत्र परेषां मतं विमर्शद्वारेणोपन्यस्यति । "किमस्य" इति । वाचकत्वम्=प्रतिपादकत्वमित्यर्थः । परे हि पश्यन्ति यदि स्वाभाविकः शब्दार्थयोः संबन्धः सङ्केतेनास्माच्छब्दादयमर्थः प्रत्येतव्य इत्येवमात्मकेनाऽभिव्यज्येत । ततो यत्र नास्ति स संबन्धस्तत्र सङ्केतशतेनाऽपि नव्यज्येत । नहि प्रदीपव्यङ्ग्यो घटो यत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्यो व्यङ्क्तुं, कृतसङ्केतस्तु करभशब्दो वारणे(२) वारणप्रातिपादको

---

टि० (१) प्रतिमायां विष्णुबुद्धिवदोङ्कारो ब्रह्मबुद्ध्योपास्यमानो ब्रह्मप्रतिपत्त्युपायो भवत्यतस्तत्प्रतीकत्वेन तस्य वाचकः प्रणवः "एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्" इत्यादिश्रुतेरित्येके । "अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः । तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति" इति योगियाज्ञवल्क्याद् देवदत्तादिसञ्ज्ञावत् प्रणव ईश्वरस्य नामेत्यन्ये । अधिकमन्यत्र ।

(२) वारणे= हस्तिनि कृतसङ्केतः करभशब्दो वारणप्रतिपादको दृष्ट इत्यन्वयः ।

भा० अथ प्रदीपप्रकाशवदवस्थितमिति। स्थितोऽस्य वाच्यस्य वाचकेन सह संबन्धः, सङ्केतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति, यथावस्थितः पितापुत्रयोः संबन्धः सङ्केतेनावद्योत्यतेऽयमस्य पिताऽयमस्य पुत्र इति। सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्ष-स्तथैव सङ्केतः क्रियते। सम्प्रतिपत्तिनित्यतया नित्यः शब्दार्थ सम्बन्ध इत्यागमिनः प्रतिजानते ॥ २७ ॥

विज्ञातवाच्यवाचकत्वस्य योगिनः*—

टी० दृष्टः। ततः सङ्केतकृतमेव वाचकत्वमिति। विमृश्याभिमतमवधारयति[१] "स्थितोऽस्य" इति। अयमभिप्रायः। सर्व एव शब्दाः सर्वाऽऽकारार्थाभिधान-समर्था इति स्थित एवैषां सर्वाकारैरर्थैः स्वाभाविकः संबन्धः। ईश्वरसङ्केतस्तु प्रकाशको नियामकश्च तस्य, ईश्वरसङ्केतासङ्केतकृतश्चास्य वाचकाऽपभ्रंश-विभागः। तदिदमाह "सङ्केतस्त्वीश्वरस्य" इति। निदर्शनमाह "यथा" इति। ननु शब्दस्य प्राधानिकस्य[२] महाप्रलयसमये प्रधानभावमुपगतस्य शक्ति-रपि प्रलीना, ततो महदादिक्रमेणोत्पन्नस्याऽवाचकस्यैव माहेश्वरेण संकेतेन नशक्या वाचकशक्तिरभिज्वलयितुं विनष्टशक्तित्वादित्यत आह "सर्गान्तरे-ष्वपि" इति। यद्यपि सह शक्त्या प्रधानसाम्यमुपगतः शब्दस्तथापि पुनराविर्भवंस्तच्छक्तियुक्त एवाऽविर्भवति, वर्षातिपातसमधिगतमृद्भाव इवोद्भिज्जो मेघविसृष्टवारिधारासारावसेकात्। तेन पूर्वसंबन्धानुसारेण सङ्केतः क्रियते भगवतेति। तस्मात् सम्प्रतिपत्तेः=सदृशव्यवहारपरम्परायाः नित्यतया नित्यः शब्दार्थयोः संबन्धो न कूटस्थनित्य इत्यागमिकाः प्रतिजानते, न पुनरागम-निरपेक्षाः सर्गान्तरेष्वपि तादृश एव सङ्केत इति प्रतिपत्तुमीशत इति भावः॥

टि० * विज्ञातमनया रीत्येश्वरोङ्कारयोर्वाच्यवाचकत्वं येन योगिनस्तस्य प्रणवजपः कर्त्तव्यः तदर्थस्य चेश्वरस्य भावनं=चिन्तनं कर्त्तव्यमित्येवं सूत्रेण सहाऽन्वनीयम् ।

(१) विमृश्य=आगन्तुको वाच्यवाचकसंबन्धो, नित्यो वेति विचार्य्य, अभिमतम्=सदृशव्यवहारपरम्परया नित्यः शब्दार्थयोः संबन्ध इति सिद्धान्तमित्यर्थः ।

(२) प्राधानिकस्य=प्रधानकार्य्यस्य ।

सू० तज्जपस्तदर्थभावनम् ॥ २८ ॥

भा० प्रणवस्य जपः प्रणवाऽभिधेयस्य चेश्वरस्य भावना। तदस्य योगिनः प्रणवं जपतः प्रणवार्थं च भावयतश्चित्तमेकाग्रं सम्पद्यते[१] तथाचोक्तं "स्वाध्यायाद् योगमासीत योगात्स्वाध्यायमामनेत्[२] स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशत" इति ॥२८॥

किञ्चास्य भवति ।

सू० ततः प्रत्यक्चेतनाऽधिगमोऽप्य[३]न्तरायाऽभावश्च ॥ २९ ॥

---

टी०॥२७॥ वाचकमाख्याय प्रणिधानमाह "तज्जपस्तदर्थभावनम्" ॥२८॥ व्याचष्टे "प्रणवस्य" इति । भावनम् = पुनःपुनश्चेतसि निवेशनम् । ततः किं सिद्ध्यतीत्यत आह "प्रणवम्" इति । एकाग्रं संपद्यते = एकस्मिन् भगवत्यारमति चित्तम् । अत्रैव वैयासिकीं गाथामुदाहरति, । "तथाच" इति । तत ईश्वरः समाधितत्फललाभेन तमनुगृह्णाति ॥२८॥ किञ्चापरमस्मात्? "ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभावश्च" ॥२९॥

---

टि० (१) ततः परमात्मसाक्षात्कारो भवतीति शेषो बोध्यः "परमात्मा प्रकाशत" इति वक्ष्यमाणविष्णुपुराणवाक्यस्वरसात् ।

(२) स्वाध्यायात् =प्रणवजपाद् अनन्तरं योगमभ्यसेत् समाधेरनन्तरं च पुनः स्वाध्यायमामनेत् = प्रणवजपमभ्यसेदित्यर्थः । योगजपयोरेकदा सम्भवो नास्तीत्याशयेन समाधेराद्यन्तयोर्जप उक्त इति बोध्यम् । यद्यपि प्रणवजपपूर्वकेश्वरानुचिन्तनरूपस्येश्वरप्राणिधानस्य साक्षादेव मोक्षहेतुत्वं भगवतोक्तम् "ॐमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् । यः प्रयाति त्यजन् देहं स याति परमां गतिम्" इति श्लोकेन, तथापि पूर्वश्लोकस्थम् 'आस्थितो योगधारणाम्" इति वाक्यमाकृष्य, ॐमिति जपँस्तदभिधेयं च मामनुस्मरन्, योगधारणामास्थितः सन्, परमां गतिमेतीति व्याख्येयम् । अन्यथा 'ईश्वरप्रणिधानाद्वा" इति सूत्रेणेश्वरप्रणिधानस्य समाधिलाभद्वारा कैवल्यहेतुत्वमुच्यमानं सूत्रकृता बाध्येत । एवञ्चेश्वरप्रणिधानादन्तरायाभावः, स्वरूपस्फूर्तिः, सम्प्रज्ञातसमाधिलाभश्च, ततश्चाऽसम्प्रज्ञातः, ततश्च कैवल्यमित्येवं क्रमो बोध्यः ।

(३) अपिनाऽऽसन्नतमसमाधिलाभः । न केवलमीश्वरप्रणिधानाद् आसन्नः समाधिलाभ एव भवति, किन्तर्हि निरन्तरायस्वरूपाऽधिगमोऽपि तत्सहभावीति भावः ।

भा० ये तावदन्तराया व्याधिप्रभृतयस्ते तावदीश्वरप्रणिधानान्न भवन्ति। स्वरूपदर्शनमप्यस्य भवति। यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गस्तथाऽयमपि बुद्धेः प्रतिसंवेदी यः पुरुष इत्येवमधिगच्छति ॥ २९ ॥ अथ केऽन्तरायाः, ये चित्तस्य विक्षेपकाः, के पुनस्ते ? कियन्तो वेति—

सू० व्याधिस्त्यानसंशयप्रमादाऽऽलस्याऽविरति-

टी० प्रतीपं=विपरीतम्, अञ्चति=विजानाति इति प्रत्यक् स चासौ चेतनश्चेति प्रत्यक्चेतनोऽविद्यावान् पुरुषः। तदनेनेश्वराच्छाश्वतिकसत्त्वोत्कर्षसम्पन्नाद्विद्यावतो निवर्त्तयति। अविद्यावतः प्रतीचश्चेतनस्याधिगमः=ज्ञानं स्वरूपतोऽस्य भवति। अन्तराया वक्ष्यमाणास्तदभावश्च । अस्य विवरणं "ये तावद्" इति। स्वम्=आत्मा तस्य रूपं, रूपग्रहणेनाविद्यासमारोपितान् धर्मान् निषेधति। नन्वीश्वरप्रणिधानमीश्वरविषयं कथमिव प्रत्यक्चेतनं साक्षात्करोत्यतिप्रसङ्गादित्यत आह "यथैवेश्वर" इति। शुद्धः=कूटस्थनित्यतयोदयव्ययरहितः, प्रसन्नः=क्लेशवर्जितः, केवलः=धर्माधर्माऽपेतः, अत एवानुपसर्गः, उपसर्गा=जात्यायुर्भोगाः। सादृश्यस्य किञ्चिद्भेदाधिष्ठानत्वादीश्वराद् भिनत्ति-"बुद्धेः प्रतिसंवेदी" इति। तदनेन प्रत्यग्ग्रहणं व्याख्यातम्। अत्यन्तविधर्मिणो[१]रन्यतरार्थानुचिन्तनं न तादितरस्य साक्षात्काराय कल्पते, सदृशार्थानुचिन्तनं तु सदृशान्तरसाक्षात्कारोपयोगितामनुभवति, एकशास्त्राभ्यास इव तत्सदृशार्थशास्त्रान्तरज्ञानोपयोगिताम्। प्रत्यासत्तिस्तु स्वात्मनि साक्षात्कारहेतुर्न परात्मनीति सर्वमवदातम् ॥२९॥ पृच्छति "क" इति। सामान्येनोत्तरं-"य" इति। विशेषसङ्ख्ये पृच्छति— "के पुन" रिति। उत्तरमाह— "व्याधि" इत्यादिसूत्रेण।

अन्तरायाः = नव एताश्चित्तवृत्तयो योगाऽन्तराया योगविरोधिनः,

टि० (१) ननु कथमीश्वरं भावयतः स्वरूपाऽधिगमः, न हि जातु कामिनीं प्रणिदधतः सनकाद्यधिगमः सम्भवतीत्यत आह "अत्यन्तविधर्मिणो" रिति। नन्वेवं परात्माऽऽत्मनोरुभयोरेवाधिगमो युक्त इत्यत आह "प्रत्यासत्तिः"—

सू० भ्रान्तिदर्शनाऽलब्धभूमिकत्वाऽनवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥

भा० नवान्तरायाश्चित्तस्य विक्षेपाः, सहैते चित्तवृत्तिभिर्भवन्त्येतेषामभावे न भवन्ति पूर्वोक्ताश्चित्तवृत्तयः। व्याधिः = धातुरसकरणवैषम्यं, स्त्यानम् = अकर्मण्यता चित्तस्य, संशयः = उभयकोटिस्पृग् विज्ञानं-स्यादिदमेवं नैवं स्यादिति, प्रमादः = समाधिसाधनानामभावनम्, आलस्यम् = कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः, अविरतिः = चित्तस्य विषयसंप्रयोगाऽऽत्मा-गर्द्धः,[१] भ्रान्तिदर्शनम्=विपर्य्ययज्ञानम्, अलब्धभूमिकत्वम्=समाधिभूमेरलाभः, अनवस्थितत्वं=यल्लब्धायां भूमौ चित्तस्या-

---

चित्तस्य विक्षेपाः = चित्तं खल्वमी व्याध्यादयो योगाद्विक्षिपन्ति = अपनयन्तीति विक्षेपाः। योगप्रतिपक्षत्वे हेतुमाह[२] "सहैत" इति। संशय-भ्रान्तिदर्शने तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ, येऽपि न वृत्तयो व्याध्यादिप्रभृतयस्तेऽपि वृत्तिसाहचर्य्यात् तत्प्रतिपक्षा इत्यर्थः। पदार्थान् व्याचष्टे "व्याधिः" इति। धातवो = वातपित्तश्लेष्माणः शरीरधारणाद्. अशितपीताऽऽहारपरिणामविशेषो रसः, करणानि = इन्द्रियाणि, तेषां वैषम्यं = न्यूनाऽधिकभाव इति। अकर्मण्यता = कर्मानर्हता, संशय = उभयकोटिस्पृग् विज्ञानम्। सत्यप्यतद्रूपप्रतिष्ठत्वेन संशयविपर्य्यासयोरभेदे, उभयकोटि-स्पर्शाऽस्पर्शरूपाऽवान्तरविशेषविवक्षयाऽत्र भेदेनोपन्यासः। अभावनम् = अकरणं, तत्राऽप्रयत्न इति यावत्। कायस्य गुरुत्वं कफादिना, चित्तस्य गुरुत्वं तमसा। गर्द्धः = तृष्णा। मधुमत्यादयः = समाधिभूमयः।

---

टि० (१) विषयसम्प्रयोगात् संगर्द्धः—इति पाठान्तरम्।

(२) अन्वयव्यतिरेकरूपं हेतुमाहेत्यर्थः। तत्र सहैत इत्यादिनाऽन्वय उक्तः। एतषोमभावे इत्यादिना च व्यतिरेक इति भावः।

भा० ऽप्रतिष्ठा, समाधिप्रतिलम्भे हि तदवस्थितं स्याद्—इत्येते चित्तविक्षेपा नवयोगमला, योगप्रतिपक्षा, योगाऽन्तराया इत्यभिधीयन्ते ॥ ३० ॥

सू० दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥

भा० दुःखमाध्यात्मिकम्, आधिभौतिकम्, आधिदैविकं च। येनाऽभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तद् दुःखम्। दौर्मनस्यम् = इच्छाभिघाताच्चेतसः क्षोभः। यदङ्गान्येजयति = कम्पयति तद् अङ्गमेजयत्वम्। प्राणो यद्बाह्यं वायुमाचामति स श्वासः, यत् कौष्ठ्यं[१] वायुं निःसारयति स प्रश्वासः। एते विक्षेपसहभुवो = विक्षिप्तचित्तस्यैते भवन्ति, समाहितचित्तस्यैते न भवन्ति ॥३१॥

---

टी० लब्धभूमेर्यदि तावतैव सुस्थितम्मन्यस्य समाधिभ्रेषः स्यात्ततस्तस्या अपि भूमेरपायः स्यात्। यस्मात् समाधिप्रतिलम्भे तदवस्थितं स्यात् तस्मात्तत्र प्रयतितव्यामिति ॥३०॥ न केवलं नवाऽन्तराया, दुःखादयोऽप्यस्य तत्सहभुवो भवन्तीत्याह—(सू०) "दुःखे" त्यादि। प्रतिकूलवेदनीयं दुःखम्। आध्यात्मिकम् = शारीरं व्याधिवशान्मानसं कामादिवशात्। आधिभौतिकं = व्याघ्रादिजनितम्। आधिदैविकम् = ग्रहपीड़ादिजनितम्। तच्चेदं दुःखं प्राणिमात्रस्य प्रतिकूलवेदनीयतया हेयमित्याह "येनाभिहता" इति। अनिच्छतः प्राणो यद्बाह्यं वायुमाचामति = पिबति प्रवेशयतीति यावत् स श्वासः समाध्यङ्गरेचकविरोधी। अनिच्छतोऽपि प्राणो यत् कोष्ठ्यं वायुं निःसारयति = निश्चारयति स प्रश्वासः समाध्यङ्गपूरकविरोधी ॥३१॥

---

टि० (१) यद्यपि सर्वत्र 'कौष्ठ्यम्' इति वृद्धिघटितः पाठ उपलभ्यते तथाऽपि शरीरावयवात् कोष्ठशब्दाद् यति कोष्ठ्यम् इति साम्प्रतम्, वृद्धेरप्राप्तेरिति प्रतिपद्ये।

भा० अथैते विक्षेपाः समाधिप्रतिपक्षास्ताभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः। तत्राऽभ्यासस्य विषयमुपसंहरन्निदमाह।

सू० तत्प्रतिषेधार्थमेकतत्त्वाऽभ्यासः ॥ ३२ ॥

विक्षेपप्रतिषेधार्थमेकतत्त्वाऽवलम्बनं चित्तमभ्यसेत्। यस्य तु[१]

टी०उक्तार्थोपसंहारसूत्रमवतारयति "अथैत" इति। अथ=उक्तार्थानन्तरम्, उपसंहरन्निदं सूत्रमाहेति संबन्धः। निरोद्धव्ये हेतुरुक्तः "समाधिप्रतिपक्षा" इति। यद्यपीश्वरप्रणिधानादित्यभ्यासमात्रमुक्तं, तथापि वैराग्यमिह तत्सहकारितया ग्राह्यमित्याह "ताभ्याम्" इति। ताभ्याम्=उक्तलक्षणाभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः। तत्र=तयोरभ्यासवैराग्ययोर्मध्ये, अभ्यासस्य= अनन्तरोक्तस्येति ॥ "तत्प्रतिषेधार्थमेकतत्त्वाऽभ्यासः"॥ ३२ ॥ एकतत्त्वम्[२]=ईश्वरः, प्रकृतत्वादिति।

वैनाशिकानां तत्सर्वमेकाग्रमेव चित्तं, नास्ति किञ्चिद् विक्षिप्तमिति

टि०(१) विक्षेपैकाग्रतयोरुपपत्तये चित्तस्य स्थैर्यं स्वाऽभिमतं सिद्धान्तयितुं वैनाशिकाऽभीष्टं क्षणिकत्वं दूषयितुमुपक्रमते "यस्य तु" इति। यस्य = वैनाशिकस्य मते चित्तं प्रत्यर्थनियतं = विषयीभूतविषयाऽनन्यगामि, अत एव च प्रत्ययमात्रं = निराधारवृत्तिरूपं, तदेव कुतः?यतःक्षणिकं च, तस्य मते सर्वं चित्तमेकाग्रमेव नास्ति किञ्चिद्विक्षिप्तमित्यर्थः। एवञ्च विक्षिप्तचित्ताऽभावे विक्षेपनिवृत्त्यर्थं यो वैनाशिकानां शिष्येभ्यः समाध्याद्युपदेशः स विफलत्वेनाऽसङ्गत एवेति भावः। (२) एकतत्त्वमित्यत्र एकशब्दः प्रधानवाची, तदाह "ईश्वर" इति। तत्र निर्णायकलिङ्गमाह "प्रकृतत्वाद्" इति। उपलक्षणं चेदम्-उपसंहरन्निदमाहेति, भाष्यतस्तथैव लाभाच्चेत्यस्यापि। यद्धि उपक्रम्यते तदेवोपसंह्रियत इति ह्यन्तर्वाणिसरणिः, उपक्रान्तं चाऽत्रेश्वरप्रणिधानमिति तदेवोपसंहर्त्तव्यमत एकतत्त्वाऽभ्यासेनेश्वरप्रणिधानमेव ग्राह्यम्। एतेन यदुपक्रमोपसंहारयोरैकरूप्यमजानता विज्ञानभिक्षुणा-'एकं तत्त्वं स्थूलादि किञ्चिन्न त्वीश्वरः। सामान्यशब्दस्याऽसति बाधके विशेषपरत्वाऽनौचित्याद्' इत्युक्तं, तन्निराकृतं वेदितव्यम्। बाधकस्योक्तत्वात्। किञ्च "ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाऽभावश्च" इति सूत्रेणेश्वरप्रणिधानादन्तरायाऽभावमुक्त्वा तेऽन्तरायाः के इत्याकाङ्क्षायां "व्याधि" इत्यादिसूत्रद्वयेनान्तरायानभिधाय "तत्प्रतिषेधार्थमेकतत्त्वाऽभ्यास" इति सूत्रितम्। एवं चोपक्रान्तस्यैवेश्वरप्रणिधानस्याऽयमुपसंहार इति स्पष्टमेव। यदि च यत्किञ्चित् स्थूलादितत्त्वं गृह्येत तर्हि, एकतत्त्वाऽभ्यासो वेति विकल्पमुपाददीत, किञ्च "यथाऽभिमतध्यानाद्वा" इत्यागामिसूत्रेण यत्किञ्चित्प्रणिधानस्य वक्ष्यमाणत्वेनाऽत्र तद्ग्रहणमप्रामाणिकमित्यपि बोध्यम्।

भा० प्रत्यर्थनियतं प्रत्ययमात्रं क्षणिकञ्च चित्तं तस्य सर्वमेव चित्तमेकाग्रं नास्त्येव विक्षिप्तं, यदि पुनरिदं सर्वतः प्रत्याहृत्यैकस्मिन्नर्थे समाधीयते तदा भवत्येकाग्रमिति। अतो न प्रत्यर्थनियतम् । यो[१]ऽपि सदृशप्रत्ययप्रवाहेण चित्तमेकाग्रं मन्यते तस्य[२] यद्येकाग्रता

टी० तदुपदेशानां[३] तदर्थानां च प्रवृत्तीनां वैय्यर्थ्यमित्याह "यस्य तु" इति। यस्य मते प्रत्यर्थे = अर्य्यमाण[४] एकस्मिन्ननेकस्मिन् वा, नियतं = यावदर्थाभासमुत्पन्नं तत्रैव समाप्तम् अनन्यगामि । अर्थान्तरं तावत्प्रथमं गृहीत्वाऽर्थान्तरमपि पश्चात् कस्मान्न गृह्णातीत्यत आह " क्षणिकञ्च " इति । क्षणस्याऽभेद्यत्वेन पूर्वपश्चाद्भावस्याप्यभावः। अस्मन्नये तु अक्षणिकं चित्तं स्वविषये एकस्मिन्ननेकस्मिन् वाऽनवस्थितं प्रतिक्षणं तत्तद्विषयोपादानपरित्यागाभ्यां विषयाऽनियतं विक्षिप्तम्। अतो विक्षेपपरिणाममपनीय शक्यैकाग्रताऽऽधातुमिति तदुपदेशप्रवृत्त्योर्नानर्थक्यमित्याह "यदि पुनरि" ति । उपसंहरति "अतो न" इति । वैनाशिकमुत्थापयति "योऽपि" इति ।

टि०(१) योऽपि वैनाशिकविशेषः—नीलपीतादिविविधाऽऽकारत्वेन यत्प्रत्ययस्य विसदृशत्वं स विक्षेपः, तदपनयेन च या सदृशप्रवाहता सा चित्तस्यैकाग्रता इति मन्यते तन्मतं दूषयितुमनुवदति "योऽपि" इत्यादिना। (२) तस्य=मते इतिशेषः । एकाग्रता यदि-इतिपाठान्तरमपि, नाऽप्रतीपम् (३) तदुपदेशानाम् ।=नीलपीतादिविषयाकारोपप्लुतविज्ञानसन्तानं बन्धननिदानमवधूय विषयाऽऽकारोपप्लवरहितविशुद्धविज्ञानसन्तानोदयो महोदयोऽभ्यासेन भावनीय इत्याकारकोपदेशानां, तदर्थानां च प्रवृत्तीनाम्=उपदिष्टार्थसाधनीभूतानां सर्वं दुःखं, सर्वं क्षणिकं, सर्वं स्वलक्षणं, सर्वं शून्यमिति चतुर्विधभावनापरिपाकरूपाणां प्रवृत्तीनां, वैयर्थ्यम् । तन्मते हि सर्वस्य द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वेन क्षणिकत्वेन स्थिरैकाऽधिकरणाऽभावेन स्थिरैकधाराऽसम्भवाद् विशुद्धविज्ञानसन्तानोदयहेतुभावनाचतुष्टयप्रकर्षस्याऽसम्भवदुक्तिकत्वादिति भावः । किञ्च सोपप्लवज्ञानसन्तानस्य बद्धत्वान्निरुपप्लवज्ञानसन्तानस्य च मुक्तत्वात्सर्वस्य च क्षणिकत्वाद् यो बद्धः स मुक्त इति बन्धमोक्षयोः सामानाधिकरण्यं च भज्येत । न हि देवदत्तोऽनुभवति, यज्ञदत्तश्च तस्य संस्कारवान्, चैत्रश्च तस्य स्मर्त्तेति दृष्टचरं सम्भवि च । भवन्मतेऽनपायिनः कस्यचिदभावे, क्व संस्कारः, क्व वा तत्प्रकर्षः, क्व वा तत्फलं मुक्तिरिति विभाव्य तूष्णीमेवाऽऽस्व। शरीरादिनिवृत्तावनुपप्लवश्चित्तस्य, अनुपप्लुते च तस्मिन् शरीरादिनिवृत्तिरिति -किरणावलीकारोक्त इतरेतराश्रयदोषोऽप्यत्र बोध्य इत्यलं बहुना ।

(४) अर्य्यमाणे=विषयीभूते विषये । अर्प्यमाण इति क्वाचित्कः पाठः ।

भा० प्रवाहचित्तस्य धर्मस्तदैकं नास्ति प्रवाहचित्तं क्षणिकत्वाद्,[१] अथ प्रवाहांशस्यैव[२] प्रत्ययस्य धर्मः स सर्वः सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्तचित्ताऽनुपपत्तिः। तस्मादेकमनेकार्थमवस्थितं[३] चित्तमितिह यदि च चित्तेनैकेनानन्विताः[४] स्वभावभिन्नाः प्रत्ययाः जायेरन्

टि० मा भूदेकस्मिन् क्षणिके चित्ते एकाग्रताऽऽधानप्रयत्नः, चित्तसन्ताने त्वनादावक्षणिके विक्षेपमपनीय एकाग्रताऽऽधास्यत इत्यर्थः।

तदेतद् विकल्प्य दूषयति "तस्य" इति। तस्य दर्शने एकाग्रता यदि प्रवाहचित्तस्य = चित्तसन्तानस्य वा धर्मः, तत्रैकं क्रमवदुत्पादेषु प्रत्ययेष्वनुगतं नास्ति प्रवाहचित्तम्। कुतः? यद् यावदस्ति तस्य सर्वस्य क्षणिकत्वाद्, अक्षणिकस्य चाऽसत्त्वाद् भवतां दर्शन इति भावः। द्वितीयं कल्पं गृह्णाति "अथ" इति। सांवृतस्य[५] प्रवाहस्यांशः प्रत्ययः परमार्थः सन्, तस्य प्रत्ययस्यैकाग्रता प्रयत्नसाध्यो धर्मः। दूषयति "स सर्व" इति सांवृतप्रवाहाऽपेक्षया सदृशप्रवाही वा विसदृशप्रवाही वा। अतः परमार्थसत्तारूपेण प्रत्यर्थनियतत्वाद् यदर्थाभास उत्पन्नस्तत्र समाप्तत्वादेकाग्र एवेति विक्षिप्तचित्ताऽनुपपत्तिः, यदपनयेनैकाग्रताऽऽधीयत इति। उपसंहरति 'तस्माद्' इति।इतोऽपि चित्तमेकमनेकार्थमवस्थितं चेत्याह 'यदि चे'ति। यथाहि

टि० (१) क्षणिकत्वात्। तथा च स्थिराश्रयाऽभावेनैकाग्रताऽनुपपत्तिरिति भावः।

(२) प्रवाहांशस्य = प्रवाहाऽवयवस्य प्रत्येकव्यक्तेरिति यावत्।

(३) अवस्थितं = स्थिरमित्यर्थः।

(४) एकेन चित्तेनाऽनन्विता एकचित्ताऽनाश्रिता इति यावत्। स्वभावभिन्नाः = क्षणिकत्वस्वभावेन परस्परविलक्षणा इत्यर्थः।

(५) संव्रियतेऽनया इति संवृतिरविद्या असत्प्रकाशनशक्तिस्तस्याः कार्य्यं सांवृतमाविद्यातस्य सांवृतस्याऽऽविद्यिकस्य प्रवाहस्य, स्वाभाविकस्येति वा।

(६) स सर्व इति भाष्यं व्याचष्टे "सांवृत" इत्यादिना।

भा०अथ[१] कथमन्यप्रत्ययदृष्टस्याऽन्यः स्मर्ता भवेद्, अन्यप्रत्ययोपचितस्य च कर्माशयस्याऽन्यः प्रत्यय उपभोक्ता भवेत् ।

टी० मैत्रेणाऽधीतस्य शास्त्रस्य न चैत्रःस्मर्ता[२] यथाच मैत्रेणोपाचितस्य पुण्यस्य पापस्य वा कर्माशयस्य फलं तदसंबन्धी चैत्रो न भोक्ता,[३] एवं प्रत्ययान्तरदृष्टस्य प्रत्ययान्तरं न स्मरेत्, प्रत्ययान्तरोपाचितस्य वा कर्माशस्य फलं न प्रत्यायन्तरमुपभुञ्जीतेत्यर्थः।ननु नाऽतिप्रसज्ज्यते,[४]कार्य्यकारणभावे सतीति विशेषणात्।श्राद्ध[५]वैश्वाऽनरीयेष्ट्यादावकर्तृमातृपितृपुत्रादिगामिफलदर्शनाद्, मधुररसभावितानां वाऽऽम्रबीजादीनां[६]परम्परया फलमाधुर्य्यनियमाद्

टि० (१ अथ=शब्दस्तर्हीत्यर्थकः । यदि चेत्यनुरोधादिति बोध्यम् । कथमिति चाऽऽक्षेपे, अन्यज्ञानविषयीभूतस्यान्यः स्मर्त्ता कथं भवेन्न कथमपि। अनुभवसंस्कारस्मृतीनामेकाऽधिकरणत्वनियमात्।अन्याऽर्जितस्य वाऽन्यो भोक्ता कथं भवेत्।कृतविप्रणाशाकृताऽऽभ्यागमदोषप्रसङ्गादिति भावः ।

(२) स्मरतीति पाठान्तरमप्यनाविलम् । (३) भुङ्क्त इति पाठान्तरमप्यच्छमेव ।

(४) पूर्वोक्ताऽतिप्रसङ्गो नास्तीत्यर्थः।'नाऽति प्रसज्ज्येते' इति पाठे तु 'पूर्वोक्ते दूषणे' इत्यध्याहृत्य व्याख्येयम् ।

(५) यद्यपि श्राद्धकर्तुरेव फलं स्मर्य्यते तथाऽपि, पितॄणां प्रीतिमावहन्नित्याद्युक्तेः पितृप्रीतिद्वारैव कर्त्तुः फलमित्यलं प्रकृताऽनुपयुक्तेन विचारेण।वैश्वनरीयेति–द्वादशलक्षण्यां चतुर्थे निर्णीतमेतत्। यद् इदं "वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते" इतीष्टिं विधाय "यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इत्यादि फलमाम्नायते तादिदं किमिष्टिकर्त्तुः पितुरुत पुत्रस्येति संशय्य कर्मानुष्ठानफलयोर्वैय्यधिकरण्यपरिहाराय पितुरेव फलमिति प्राप्ते, नैतदेवं येनैव वाक्यशेषेण फलमेतत् प्रकल्प्यते तेनैव पुत्रगामित्वप्रतिपात्तिरपि स्फुटा। यस्मिञ्जाते निर्वपति स पूतो भवतीति वाक्यशेषे स्पष्टं पुत्रगामित्वश्रवणात्पुत्रस्यैव पूतत्वादिकामिति सिद्धान्तः।फलसंयोगस्त्वचोदिते न स्यादशेषभूतत्वादिति अ० ४पा० ३सू० ३८

(६) आम्रबीजादीनामित्यादिपदेन यथा लाक्षारसाऽवसिक्तानां कार्पासबीजबीजपूरादीनामङ्कुरादिपारम्पर्येण कार्पासादौ रक्तिमनियम इति ग्राह्यम्। तथोक्तं "यस्मिन्नेव हि सन्तान आहिता कर्मवासना।फलं तत्रैव बध्नाति कार्पासे रक्तता यथा । कुसुमे बीजपूरादेर्यल्लाक्षाद्युपसिच्यते शक्तिराधीयते तत्र काचित्तां किं न पश्यति" इति ।

भा० कथञ्चित् समाधीयमानमप्येतद् गोमयपायसीयं न्यायमाक्षिपति ।

टी० इत्यत आह "कथञ्चित् समाधीयमानमप्येतद्" इति । अयमभिसन्धिः। कः खल्वेकसन्तानवर्त्तिनां प्रत्ययानां सन्तानान्तरवर्त्तिभ्यः प्रत्ययेभ्यो विशेषो येनैकसन्तानवर्त्तिना प्रत्ययेनाऽनुभूतस्योपचितस्य कर्माशयस्य वा तत्सन्तानवर्त्त्यैव प्रत्ययः स्मर्त्ता भोक्ता च स्याद्, नाऽन्यसन्तानवर्त्ती। न हि सन्तानो नामाऽस्ति कश्चिद्वस्तुसन् य एनं सन्तानिनं सन्तानान्तरवर्त्तिभ्यो भिन्द्यात्। न च काल्पनिको भेदः क्रियायामुपपद्यते। न खलु कल्पिताऽग्निभावो माणवकः पचति। न च कार्य्यकारणसंबन्धोऽपि वास्तवः। सहभुवोः सव्येतरविषाणयोरिवाऽभावाद्, असहभुवोरपि प्रत्युत्पन्नाऽऽश्रयत्वाऽयोगात्। न ह्यतीताऽनागतौ व्यासज्ज्य प्रत्युत्पन्नं वर्त्तितुमर्हतः(१)। तस्मात्सन्तानेन वा कार्य्यकारणभावेन वा स्वाभाविकेनाऽनुपहिताः परमार्थसन्तः प्रत्ययाः परस्पराऽसंस्पर्शित्वेन स्वसन्तानवर्त्तिभ्यः परसन्तानवर्त्तिभ्यो वा प्रत्ययान्तरेभ्यो न भिद्यन्ते। सोऽयं गोमयं पायसं चाऽधिकृत्य प्रवृत्तो न्यायो = "गोमयं पायसं गव्यत्वादुभयसिद्धपायसवद्" इति। तमाक्षिपति = न्यायाऽऽभासत्वेन ततोऽप्यधिकत्वादिति। नचाऽत्र [२]कृतनाशाऽकृताऽभ्यागमं चोद्यं, यतश्चित्तमेव कर्मणां कर्तृ, तदेव तज्जनिताभ्यां सुखदुःखाभ्यां युज्यते, सुखदुःखे च चितिच्छायाऽऽपन्नं चित्तं भुङ्क्ते इति पुरुषे भोगाऽभिमानश्चितिचित्तयोरभेदग्रहादिति । स्वप्रत्ययं [३]प्रतीत्य समुत्पन्नानां स्वभाव

टि० (१) क्षणिकत्वेनोभयोः समानकालिकत्वाऽभावादिति भावः। एतेनाऽतीताऽनागतवर्तमानासु सदृशप्रत्ययव्यक्तिषु त्रित्वादिवद् व्यासज्ज्यवृत्तिरेकाप्रताऽस्त्वित्यपास्तम् । अन्योऽन्याऽसमानकालिकेषु व्यासज्ज्यवृत्तित्वाऽसम्भवात्, क्षणिकत्ववादिनां नये सर्वस्य स्वलक्षणत्वाऽङ्गीकारेण सामान्यधर्माऽभावेन सादृश्यस्य दुरुपपादत्वाच्च । [२] ननु यथा, ताथागतनये वैय्यधिकरण्येन कृतनाशाऽकृताऽभ्यागमौ प्रसञ्जितौ तथा भवतामपि तौ समानौ, बुद्धिः कर्त्री पुरुषो भोक्तेत्यभ्युपगमादित्याशङ्क्याह "नचाऽत्रेति" अत्र = अस्मन्नये इत्यर्थः ।

[३] स्वप्रत्ययम् = आलम्बनादिचतुर्विधं प्रत्ययं, प्रतीत्य = आभिमुख्येन प्राप्येति, आलम्बनप्रत्ययो—नीलादिविषयः, समनन्तरप्रत्ययो—मनः, गोलकस्थानाऽऽपन्नानीन्द्रियाणि अधिपतिप्रत्ययः, आलोकश्चेति चतुर्विधान् प्रत्ययान् प्रतीत्य चैत्ताः सुखादयो जायन्त इति हि सौगतसंरणिः ।

भा० किञ्च स्वाऽऽत्माऽनुभवाऽपह्नवश्चित्तस्याऽन्यत्वे[१] प्राप्नोति । कथं, यदहमद्राक्षं तत्स्पृशामि यच्चाऽस्प्राक्षं तत् पश्यामीत्यहमिति प्रत्ययः सर्वस्य प्रत्ययस्य भेदे सति प्रत्ययिन्यभेदेन उपस्थितः । एकप्रत्ययविषयोऽयमभेदात्माऽहमिति प्रत्ययः कथमत्यन्तभिन्नेषु चित्तेषु वर्त्तमानः सामान्यमेकं प्रत्ययिनमाश्रयेत् । स्वाऽनुभवग्राह्यश्चाऽयमभेदात्माऽहमिति प्रत्ययः । न च प्रत्यक्षस्य माहात्म्यं प्रमाणान्तरेणाऽभिभूयते । प्रमाणान्तरं च प्रत्यक्षबलेनैव व्यवहारं लभते । तस्मादेकमनेकार्थमवस्थितं च चित्तम् ॥ ३२ ॥

---

टी०एवैषां तादृशो यत्त एव स्मरन्ति फलं चोपभुञ्जते, न त्वन्ये । न च स्वभावा नियोगपर्य्यनुयोगावर्हन्ति, एवं भवतु मैवं भूदिति वा, कस्मान्नैवमिति वा इति । यः पूर्वोक्ते न परितुष्यति तं प्रत्याह—

"किञ्च स्वात्मे"ति । उदयव्ययधर्माणामनुभवानामनुभवस्मृतीनां च नानात्वेऽपि तदाश्रयमभिन्नं चित्तमहमिति प्रत्ययः प्रतिसंदधानः कथमत्यन्तभिन्नान् प्रत्ययानाऽऽलम्बेत । ननु ग्रहणस्मरणरूपकारणभेदात् पारोक्ष्याऽऽपरोक्ष्यरूपविरुद्धधर्मसंसर्गाद्वा[२], न प्रत्यभिज्ञानं नामैकः प्रत्ययो यतः प्रत्यायिनश्चित्तस्यैकता स्यादित्यत आह "स्वानुभवे"ति । ननु कारणभेदविरुद्धधर्मसंसर्गावत्र बाधकावुक्तावित्यत आह "न च प्रत्यक्षस्य"

---

टि० [१] चित्तस्य प्रतिक्षणमन्यत्वे सति स्वस्य = बौद्धस्य य आत्मविषयकोऽनुभवः = अहमहमित्याकाराऽनुगतप्रतीतिस्तस्याऽपलापः प्रसज्ज्येतेत्यर्थः । पृच्छति "कथम्" इति । उत्तरमाह "यद्" इत्यादिना । यत् तद् इत्यव्ययं यः स इत्यर्थकम्, अहमित्यस्य विशेषणम् । तथाच योऽहमद्राक्षं सोऽहं स्पृशामीत्यादिप्रत्यये योऽहमित्याकारः प्रत्ययांशः स सर्वस्य प्रत्ययस्य = दर्शनस्पर्शनादिरूपस्याऽन्योन्यभेदे सत्यपि अभेदेनैवाऽनुगतत्वेनैवोपस्थितो भवतीति हि सर्वाऽनुभवसिद्ध इत्यर्थः। एतेनाऽनुभव उक्तः । तन्मते तदपह्नवमाह "एकप्रत्यय" इत्यादिना योऽयम् अभेदाऽऽत्मा = अनुगताऽऽकारोऽहमिति प्रत्ययः स भवन्मते एकप्रत्ययव्यक्तिमात्रगोचरः प्रत्यर्थनियतश्चेत्तदा कथमत्यन्तभिन्नेषु क्षणिकेषु चित्तेषु विषयत्वेन वर्त्तमानः सामान्यमेकं विषयीकुर्य्यात् सर्वप्रत्ययाऽनुगतधर्मिणः स्थिरचित्तस्याऽनभ्युपगमादित्यर्थः ।

[२] स इत्यंशे संस्कारादिरेव सामग्री, अयमित्यंशे च संप्रयोगादिरिति सामग्रीभेदात्, तथा स इत्यंशे पारोक्ष्यमयमित्यंशे चाऽऽपरोक्ष्यमिति विरुद्धधर्माऽऽसङ्गाच्च न प्रत्यभिज्ञानं ज्ञानमेकं किन्तु वालुकावद् विशकलितमित्यर्थः ।

टी० इति । प्रत्यक्षाऽनुसारत एव सामग्र्यभेदः । पारोक्ष्याऽऽपरोक्ष्यधर्माऽविरुद्धश्चोपपादितो[१] न्यायकणिकायाम् । अक्षणिकस्य[२] चाऽर्थक्रिया न्यायकणिकाब्रह्मतत्त्वसमीक्षाभ्यामुपपादितेति सर्वमवदातम् ॥ ३२ ॥

---

टि० (१) यदुक्तं सामग्रीभेदाद्विरुद्धधर्मसंसर्गाच्च न प्रत्यभिज्ञानं नामैकं ज्ञानमिति, तद्वार्त्तम् । संप्रयोगसंस्काराभ्यां मिलिताभ्यामेकस्यैव ज्ञानस्योत्पादेन प्रत्यभिज्ञानस्यैकत्वाऽभ्युपगमात् । नचान्यत्रान्योन्यनिरपेक्षयोः संप्रयोगसंस्कारयोः सामग्रीत्वादेकज्ञानकारणताऽनुपपत्तिरिति साम्प्रतं, अभिज्ञायां स्मृतौ चान्योन्यानपेक्षयोरपि कार्य्यविशेषे तदपेक्षोपपत्तेः । दृश्यते हि संप्रयोगाऽऽलोकयोर्ग्राह्यसंयोगे तमोनिवृत्तौ चाऽन्योन्याऽनपेक्षयोरपि रूपज्ञानेऽन्योन्याऽपेक्षा । यथा वा श्रूयमाणस्मर्य्यमाणलिङ्गाऽपेक्षयोरनुमितावध्यक्षे चाऽन्योऽन्यानपेक्षयोरपि सन्निकृष्टपक्षकानुमितावन्योऽन्यापेक्षा । एवञ्च यथा सत्यपि सामग्रीभेदे विरुद्धधर्मसंसर्गे चाऽयं पर्वतो वह्निमानिति अनुमानाख्यमेकं ज्ञानं तद्वत् प्रत्यभिज्ञानमप्येकमेव, न वालुकावह्निशकलितं ज्ञानद्वयमिति । यत्तु तत्ताविशिष्टेदन्ताविशिष्टयांशयोः संस्कारेन्द्रिययोः कारणत्वेऽपि तत्ताविशिष्टोपरक्ताऽभेदांश उभयोरपि सामर्थ्याऽभावेन न प्रत्यभिज्ञाया ऐक्येन स्थैर्य्यसिद्धिस्तन्न, इन्द्रियसंबद्धविशेषणतया तत्ताऽभेदस्य भासमानत्वेन दोषाऽभावात् । तदेतद्ध्वनयन्नाह "उपपादितो न्यायकणिकायाम्" इति । "कुतः पुनः स्थिरसिद्धिः प्रत्यभिज्ञानाद्" इत्यादिना बहुशिक्षितोऽसौ सौगत आत्मतत्त्वविवेक इत्यलं तदुपन्यासेन ।

(२) ये तु—सत् स्वोत्पत्त्यव्यवहितोत्तरकालवृत्तिध्वंसप्रतियोगि ? न वेति ? विप्रतिपत्तिमुपन्यस्य तत्र स्थैर्य्ये प्रसङ्गविपर्य्ययाभ्यामर्थक्रियाव्यापकक्रमयौगपद्याऽभावात्, तदभावेऽर्थक्रियाकारित्वरूपसत्त्वाऽनुपपत्तौ, यत्सत् तत् क्षणिकं यथा जलधरपटलं, सँश्च विवादास्पदीभूतो घटादिरित्यनुमिमाना अक्षणिकस्याऽर्थक्रियाकारित्वं प्रत्याचक्षते तान् प्रत्याह । "अक्षणिकस्य चाऽर्थक्रिया" इत्यादि । ननु क्षणिकत्वप्रतिपक्षे स्थायिनि व्यापकाऽनुपलब्ध्या बाध्यमाना सत्ता क्षणिकत्वेन व्याप्यमाना सती क्षणिकत्वमेवाऽनुमापयति । तथाहि । अर्थक्रियाकारितैव सत्ता, नाऽन्या । न हि, न योऽर्थक्रियां काञ्चिदारभते स सन्निति व्यवह्रियते । सा च सत्ता क्रमयौगपद्याभ्यां व्याप्ता, ते च क्रमयौगपद्ये स्थायिनि न संभवतः । न तावत् स्थायी पदार्थोऽर्थक्रिया युगपदेव सर्वाः कर्त्तुमर्हतीति वक्तुं साम्प्रतम् । तथा सति द्वितीयक्षणे कृत्याभावादर्थक्रियाकारित्वविरहादसत्त्वाऽऽपत्तेः क्षणिकत्वमेव स्यादिति स्थैर्य्यहानिः । नाऽपि क्रमः संभवति । तथाहि वर्तमानाऽर्थक्रियाकरणेऽतीताऽनागतयोरर्थक्रिययोः सामर्थ्यमस्ति ? नो वा ? आद्ये तयोरनिराकरणप्रसङ्गः । समर्थस्य क्षेपाऽयोगात् । यद् यदा करणसमर्थं तत्तदा करोत्येव । यथा सामग्री स्वकार्य्यसमर्थश्चायम् इति प्रसङ्गाऽनुमानाच्च । द्वितीये सदैव करणाऽभावप्रसङ्गः । असमर्थस्याऽर्थक्रियाकारित्वाऽभावात् । यद् यन्न करोति तत्तत्राऽसमर्थं, यथा शिलाशकलमङ्कुरे । न चैष वर्त्तमानाऽर्थक्रियाकरणसमयेऽतीताऽनागते ते करोतीति न तत्र समर्थमिति विपर्य्यया-

टि० नुमानाच्च। तस्मादेकस्मिन् वस्तुनि सामर्थ्याऽसामर्थ्यविरुद्धधर्मसंसर्गाऽयोगान्नाऽक्षणिकस्याऽर्थक्रियाकारित्वमिति चेद्, अत्राहुः—न तावदर्थक्रियाकारित्वं सत्त्वं, स्वप्नस्त्रीदर्शनमिथ्यासर्पदंशादेरप्यर्थक्रियाकारित्वेन सत्त्वाऽऽपातात्। किञ्च, न सर्वस्य भावस्याऽर्थक्रियाकारितानियमः। अतत्कारिणोऽप्यतीताऽनागतस्य भावत्वसत्त्वात्। न च तस्याऽपि स्वज्ञानं प्रति कारणत्वेनार्थक्रियाकारित्वम्। अतीताऽनागतानां तदसम्भवात्। तथाचाहुः पार्थसारथिमिश्राः—"न च सर्वेषां विज्ञानं प्रत्यालम्बनहेतुताऽतीताऽनागतानां संभवति। सम्प्रत्यविद्यमानानां हेतुत्वाऽनुपपत्तेः। हेतुत्वे वा सर्वज्ञाननिष्पत्तौ सर्वेषां व्यावृतत्वात् क्रमाऽनभ्युपगमेनं च पुनर्व्यापाराऽनुपपत्तेस्तल्लक्षणत्वाच्च सत्तायाः सर्वज्ञानाऽनन्तरमेव समस्तस्य जगतः शून्यताप्रसङ्ग इति यत्किञ्चिदेतद्" इति। क्रमयौगपद्ये स्थायिनि न संभवत इत्यपि नाच्छम्। क्रमेणार्थक्रियाकारित्वाऽभ्युपगमात्, सहकारिण्यपेक्षया च विलम्बोपपत्तेर्न कोऽपि दोषः। सहकारिणश्च भावाद् भिन्नमभिन्नं भिन्नाऽभिन्नं वाऽऽगन्तुकमतिशयं कुर्वन्त्येव। यथा पाथोऽवनिसंयोगो बीजस्याऽतिशयाऽऽधायकः। अत एव तदलाभे स्थायिनोऽपि बीजस्य प्रागङ्कुराऽनारम्भो, लाभे त्वाऽऽरम्भ इति। यत्त्वेवं सत्यन्वयव्यतिरेकाभ्यां संयोगस्यैव कारणत्वं स्यान्न तु बीजस्येति। तन्न। संयोगमात्रात् तदुत्पत्त्यदर्शनात्। न हि क्षितिसलिलसंयोगमात्रमेवाऽङ्कुरं जनयति, किन्तर्हि बीजविशिष्टं, विशिष्टस्य च कारणत्वे विशेषणीभूतबीजस्याऽपि तदभ्युपेयम्। यस्तु—अन्त्यक्षणप्राप्तोऽनपेक्ष एव भावो जनयितुं समर्थोऽनपेक्षोऽप्यसौ सहकारिभिर्विना नास्तीति तैर्विना न करोतीत्याद्याह। स पृष्टो व्याचष्टाम्। यदिदमन्त्यक्षणप्राप्तं क्षितिसलिलसंयुक्तमङ्कुरजनकं तद् यदि कृषीवलप्रयत्नविरहात् कुशूलस्थमेव स्यात् तदाऽपि किमङ्कुरं जनयति? ओमिति चेत्, कुशूलनिहितबीज एव स्यात् कृती कृषीवलः, कृतमस्य दुःखबहुलेन कृषिकर्मणा, इति तर्कपादे भामत्यां शास्त्रदीपिकायाञ्च प्रकारान्तरेणापि तथागतमतं निराकृतमिति तत एव द्रष्टव्यम्। यत्त्वेकस्मिन् वस्तुनि जनकत्वाजनकत्वरूपविरुद्धधर्मसंसर्गाऽयोगान्नाऽक्षणिकत्वमिति, तत् तुच्छं, एकजनकस्याऽप्यन्याऽजनकत्वेन जनकत्वाजनकत्वयोरेकस्मिन्नधिकरणे सहभावात्। नन्वेकधर्मित्ववदेकविषयत्वमप्यपेक्षितं, तथाचैककार्य्यप्रतियोगिजनकत्वाऽजनकत्वयोरेकस्मिन् धर्मिणि न सहभाव इति चेन्न। स्थायिवादिनं प्रत्यसिद्धेः। कालभेदेनैकस्यैकं प्रत्येव जनकत्वाजनकत्वयोः सर्वत्रैवाऽङ्गीकारात्। क्षणभङ्गवादिनयेऽपि यदिदमिदानीन्तनाऽङ्कुरजननसमर्थं बीजं तदन्यकालिकाऽङ्कुरं जनयेन्न वा, जनयेद् यदि क्षणभङ्गभङ्गः। ननु क्षणान्तरे तदेव नास्ति कथं तस्य जनकत्वं, माऽस्तु, स्वक्षण एव तं किमिति न जनयेत्। स्वाऽनन्तरक्षणवर्त्तिनं प्रत्येव समर्थं तदिति चेद्, एवं तर्ह्यसमर्थं तत्रेत्यायातम्। तथाच तस्यैव बीजस्य तत्कालिकाऽङ्कुरं प्रतिजनकत्वमन्यकालिकं तमेव प्रत्यजनकत्वं चेति न जनकत्वाऽजनकत्वयोर्विरोधः। तस्मात्प्रत्यभिज्ञाप्रत्यक्षविरोधान्न क्षणिकत्वमिति निरवद्यम्। न च सजातीयत्वेन निर्वाहः। तन्मते जातेरपि क्षणिकत्वेन पूर्वकालिकवृत्तिघटत्वस्यैतत्कालिक घटेऽभावादिति। यथाच क्षणिकत्वनिर्वचनासम्भवस्तथोपपादितस्तत्त्वप्रदीपिकायाम्

भा० यस्येदं शास्त्रेण परिकर्म[१] निर्दिश्यते तत्कथम्[२] ।

सू० मैत्रीकरुणामुदितोपेक्षाणां सुख[३] दुःखपुण्याऽपुण्यविषयाणां भावनातश्चित्तप्रसादनम्* ॥३३॥

भा० तत्र सर्वप्राणिषु सुखसम्भोगापऽऽन्नेषु मैत्रीं भावयेद्, दुःखितेषु करुणां, पुण्यात्मकेषु मुदिताम्, अपुण्यात्मकेषूपेक्षाम्।

---

टी० अपरिकर्मितमनसो[४] ऽसूयादिमतः समाधितदुपायसम्पत्त्यनुत्पादाच्चित्तप्रसादनोपायान् असूयादिविरोधिनः प्रतिपादयितुमुपक्रमते''यस्येदम्''इति। यस्य चित्तस्याऽवस्थितस्येदं परिकर्मेत्यर्थः ॥ 'मैत्रीकरुणेत्यादि,प्रसादनमित्यन्तं सूत्रम्' ॥३३॥ ॥ सुखितेषु मैत्रीं=सौहार्दं† भावयत इर्ष्या[५] कालुष्यं निवर्त्तते चित्तस्य, दुःखितेषु च करुणाम्=आत्मनीव परस्मिन् दुःखप्रहाणेच्छां भावयतः पराऽपकारचिकीर्षाकालुष्यं

---

टि० (१) परिकर्म=चित्तस्थैर्य्यहेतुचित्तप्रसादनसाधनं मैत्र्यादिभावनाचतुष्टयमित्यर्थः। यस्य चित्तस्य शास्त्रेण स्थित्युपायो निर्दिश्यते तच्चित्तमनेकार्थमिति पूर्वान्वयीदं भाष्यमिति, 'तत्कथम्' इति चोत्तरसूत्राऽवतरणमिति केचित् ।

(२) तत्=चित्तप्रसादनं, कथं=कैर्भावनाप्रकारैः, काभिर्भावनाभिश्चित्तप्रसादनं कुर्य्यादिति यावत् । (३) सुखादिशब्दा मत्वर्थीयाऽर्शआद्यजन्तत्वेन सुखादिमत्परा इति बोध्यम् ।

(४) अपरिकर्मितमनसः = ईर्ष्यादिनिवर्त्तकचित्तप्रसादनसाधनमैत्र्यादिभावनाविधुरस्येत्यर्थः ।

(५) इर्ष्या=अक्षान्तिः, पराऽभ्युदयासहनमिति यावत्। उपलक्षणं चैतद् रागकालुष्यस्याऽपि । तथाहि—स्नेहादनुभूयमानं सुखमनुशेते यः सुखजातं सर्वं मे भूयादिति राजसो धीवृत्तिविशेषः स राग इत्युच्यते। स च रागो दृष्टाऽदृष्टसुखसामग्र्यभावात्सर्वसुखाऽसम्पत्त्या चित्तं विक्षिप्य कलुषीकरोति। यदा चाऽयं सुखिषु प्राणिषु मैत्रीं भाव-

---

* कुर्य्यादिति क्रियापदमध्याहार्य्यमत्र ।

† मैत्री—द्वेषाऽभावो, न तु सुहृत्स्नेहस्तस्य बन्धाऽऽत्मकत्वात् । एवं मुदिताऽपि शोकनिवृत्तिर्नतु हर्षः। तस्य रागहेतुत्वादिति तु मनुभाष्यकारा मेधातिथिभट्टाः ।

भा० एवमस्य भावयतः शुक्लो धर्म उपजायते । ततश्च चित्तं प्रसीदति प्रसन्नमेकाग्रं स्थितिपदं लभते ॥ ३३ ॥

## सू० प्रच्छर्दनविधारणाभ्यां वा प्राणस्य[१] ॥३४॥

टी० चेतसो निवर्त्तते । पुण्यशीलेषु प्राणिषु मुदितां = हर्षं भावयतोऽसूया[२] कालुष्यं निवर्त्तते चेतसः। अपुण्यशीलेषु चोपेक्षां = माध्यस्थ्यं भावयतोऽमर्ष[३]कालुष्यं निवर्त्तते । ततश्चाऽस्य राजसतामसधर्मनिवृत्तौ सात्त्विकः शुक्लो धर्म उपजायते = सत्त्वोत्कर्षसम्पन्नः सम्भवति । वृत्तिनिरोधपक्षे तस्य प्रसादस्वाभाव्याच्चित्तं प्रसीदति । प्रसन्नं च वक्ष्यमाणेभ्य उपायेभ्य एकाग्रं स्थितिपदं लभते । असत्यां पुनर्मैत्र्यादिभावनायां न ते उपायाः[४] स्थित्यै कल्पन्त इति भावः ॥ ३३ ॥ ॥ तानिदानीं स्थित्युपायानाह "प्रच्छर्दनविधारणाभ्यां वा प्राणस्य" ॥ ३४ ॥ वाशब्दो वक्ष्यमाणोपाया-

---

टि० येत्सर्वेऽप्येते सुखिनो मदीया इति, तदा तत्सुखं स्वकीयमेव संपन्नमिति तत्र रागो निवर्त्तते। यथा स्वस्य राज्याऽभावेऽपि पुत्रादिराज्यमेव स्वकीयं तद्वत्। निवृत्ते च रागे वर्षाऽपाये जलमिव चित्तं प्रसीदति इति। एवं यदा मैत्रीवशात्परकीयं सुखं स्वकीयमेव संपन्नं तदा परगुणाऽसहनाऽभावादीर्ष्याकालुष्यमपि निवर्त्तते । एवं करुणां भावयतो द्वेषकालुष्यनिवृत्तिरपि बोध्या। तथाहि दुःखमनुशेते य ईदृशं दुःखं सर्वदा मे मा भूदिति तमोऽनुगतो राजसो धीवृत्तिविशेषः स द्वेष इत्युच्यते । दुःखं च शत्रुव्याघ्रादिषु सत्सु न निवारयितुं शक्यं, न च सर्वे दुःखहेतवो हन्तुं शक्यन्तेऽतः स द्वेषः सदा हृदयं दहति, यदा चायं स्वस्येव परेषां सर्वेषां प्रातिकूलं दुःखं न भूयादित्यनेन प्रकारेण करुणां दुःखिषु प्राणिषु भावयेत् तदा वैर्य्यादिद्वेषनिवृत्तौ चित्तं प्रसीदति, एतदेव स्मर्य्यतेऽपि 'प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि ते तथा ।आत्मौपम्येन सर्वत्र दयां कुर्वन्ति साधवः इति"।(१)प्रच्छर्दन-शब्देन रेचनं, विधारणशब्देन च कुम्भकः।रेचनोत्तरं पूरणं विना विधारणाऽसम्भवात्पूरकोऽप्यर्थादायातः। तथाच प्राणस्य रेचनपूरणस्तम्भनैर्मनसः स्थितिं संपादयेदिति सूत्रार्थः सम्पन्न इति केचित्। अन्ये तु बाह्याऽऽभ्यन्तरकेवलभेदेन कुम्भकस्य त्रैविध्येनाऽत्र विधारणशब्देन रेचनोत्तरकालिकः कुम्भको गृह्यत इति न पूरकस्याऽर्थादाक्षेपोऽत एव वायोर्बहिरेव स्थापनं विधारणमिति वाचस्पतिमिश्रैर्व्याख्यातमित्याहुः ।
(२) परगुणेषु दोषाऽऽविष्करणमसूया । (३) अमर्षः=रुषा क्रोध इत्यर्थः ।
(४) उपायाः=वक्ष्यमाणाः प्रच्छर्दनादयः ।

भा० कोष्ठयस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषाद् वमनं प्रच्छर्दनं, विधारणं = प्राणायामः, ताभ्यां वा मनसः स्थितिं सम्पादयेत् ॥ ३४ ॥

सू० विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थिति-निबन्धनी ॥ ३५ ॥

---

टी० ऽन्तराऽपेक्षो विकल्पार्थो(१) न मैत्र्यादिभावनाऽपेक्षया । तया सह समुच्चयात् । प्रच्छर्दनं विवृणोति

"कोष्ठयस्य" इति । प्रयत्नविशेषाद् = योगशास्त्रोक्तात् । येन कोष्ठ्यो वायुर्नासिकापुटाभ्यां शनै रेच्यते । विधारणं विवृणोति "विधारणं प्राणायाम" इति । रेचितस्य प्राणस्य कोष्ठयस्य वायोर्यदायामो = बहिरेव स्थापनं न तु सहसा प्रवेशनम् । तदेताभ्यां प्रच्छर्दनविधारणाभ्यां वायोर्लघूकृतशरीरस्य मनः स्थितिपदं लभते । अत्र चोत्तरसूत्रगतात् स्थिति-निबन्धनीतिपदात् स्थितिग्रहणमाकृष्य संपादयेदित्यर्थप्राप्तेन संबन्धनीयम् ॥ ३४ ॥ स्थित्युपायान्तरमाह "विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी" ॥ ३५ ॥ व्याचष्टे "नासिकाग्रे धारयत" इति धारणा-

---

टि० (१) यत्तु-वाशब्दोऽप्यर्थे, आभ्यामपि चित्तप्रसादनं कुर्य्याद् इति विज्ञानभिक्षुणा व्याख्यातं, तन्न स्थाने । प्रच्छर्दनविधारणयोः प्रसादनहेतुत्वाऽभावात् । अत एव 'ताभ्यां वा मनसः स्थितिं संपादयेद्' इत्येतत् सूत्रे भाष्यकारैःप्रच्छर्दनविधारणयोः स्थितिसम्पादकत्वमुक्तं, न तु प्रसादनसाधनत्वम् । अत्रेदं बोध्यम् । 'प्रसन्नचेतसो ह्याशु बुद्धिः पर्य्यवतिष्ठत' इति भगवदुक्तेः "प्रसन्नमेकाग्रं स्थितिपदं लभते" इति पूर्वसूत्रस्थभाष्याच्च चित्तप्रसादनं विना चित्तस्थैर्य्यं दुःसम्पादमिति स्पष्टमवगम्यते । एवञ्च मैत्र्यादिभावनया चित्तप्रसत्तौ सत्यां प्रच्छर्दनादयश्चित्तस्थैर्य्योपायाः सूत्रकृता विकल्प्यन्ते, न तु चित्तप्रसादनोपायाः । साध्यसाधनयोर्विकल्पाऽसम्भवात् । चित्तप्रसादनसाधनीभूतानां मैत्र्यादिभावनानान्तु सर्वत्र समुच्चय एवेति न तदपेक्षया विकल्पः । तदेतदाऽऽहै 'न मैत्र्यादिभावनाऽपेक्षया विकल्पः । तया सह समुच्चयाद' इति ।

भा० नासिकाऽग्रे धारयतोऽस्य या दिव्यगन्धसंवित् सा गन्धप्रवृत्तिः, जिह्वाग्रे दिव्यरससंवित्, तालुनि रूपसंविद्, जिह्वामध्ये स्पर्शसंविद्, जिह्वामूले शब्दसंविद्, इत्येताः प्रवृत्तय उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति, संशयं विधमन्ति, समाधिप्रज्ञायाञ्च द्वारीभवन्ति इति। एतेन चन्द्रादित्यग्रहमणिप्रदीपरत्नादिषु प्रवृत्तिरुत्पन्ना विषयवत्येव वेदितव्या। यद्यपि हि तत्तच्छास्त्रानुमनाचार्य्योपदेशैरवगतमर्थतत्त्वं सद्भूतमेव भवति, एतेषां* यथाभूतार्थप्रतिपादनसामर्थ्यात्। तथापि यावदेकदेशोऽपि कश्चिन्न स्वकरणसंवेद्यो भवति तावत्सर्वं परोक्षमिवापवर्गादिषु सूक्ष्मेष्वर्थेषु न दृढां बुद्धिमुत्पादयति।

---

टी० ध्यानसमाधीन् कुर्वतस्तज्जयाद् या दिव्यगन्धसंवित् तत्साक्षात्कारः। एवमन्यास्वपि प्रवृत्तिषु योज्यम्। एतच्चागमात्[1] प्रत्येतव्यं, नोपपत्तितः। स्यादेतत्। किमेताद्दग्भिर्वृत्तिभिः कैवल्यं प्रत्यनुपयोगिनीभिरित्यत आह "एता" इति। एता वृत्तयोऽल्पेनैव कालेनोत्पन्नाश्चित्तमीश्वरविषयायां वा विवेकख्यातिविषायां वा स्थितौ निबध्नन्ति। नन्वन्यविषया वृत्तिः कथमन्यत्र स्थितिं निबध्नातीत्यत आह। "संशयं विधमन्ति" इति। विधमन्ति = अपसारयन्ति। अत एव "समाधिप्रज्ञायाम्" इति। वृत्त्यन्तराणामप्यागमसिद्धानां विषयवत्त्वमतिदिशति "एतेन" इति। नन्वागमादिभिरवगतेष्वर्थेषु कुतः संशय इत्यत आह "यद्यपि हि" इति

---

टि० (१) आगमात् = "अतः पराऽस्य धारणा तालुरसनाग्रनिपीडनाद् वाङ्मनःप्राणनिरोधनाद्" इत्यादिमैत्र्युपनिषदादिवेदादित्यर्थः। "ज्योतिष्मती स्पर्शवती तथा रसवती परा। गन्धवत्यपरा प्रोक्ता चतस्रस्तु प्रवृत्तय" इत्याद्यागमाद्वेत्यर्थः।

---

* एतेषां = शास्त्राऽनुमानाऽऽचार्योपदेशानामित्यर्थः।

भा० तस्माच्छास्त्राऽनुमानाऽऽचार्य्योपदेशोपोद्बलनार्थमेवाऽवश्यं कश्चिद्विशेषः प्रत्यक्षीकर्त्तव्यः। तत्र तदुपदिष्टार्थैकदेशप्रत्यक्षत्वे सति सर्वं सुसूक्ष्मविषयमप्यापवर्गात्सुश्रद्धीयते* एतदर्थमेवेदं चित्तपरिकर्म निर्दिश्यते। अनियतासु वृत्तिषु तद्विषयायां वशीकारसंज्ञायामुपजातायां समर्थं स्यात्तस्य तस्यार्थस्य प्रत्यक्षीकरणायेति। तथा च सति श्रद्धावीर्य्यस्मृतिसमाधयोऽस्याऽप्रतिबन्धेन भविष्यन्तीति ॥ ३५ ॥

सू० विशोका वा ज्योतिष्मती ॥ ३६ ॥

भा० प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीत्यनुवर्त्तते। हृदयपुण्डरीके धारयतो या बुद्धिसंवित्†—

---

टी० श्रद्धामूलो हि योगः, उपदिष्टार्थैकदेशप्रत्यक्षीकरणे च श्रद्धाऽतिशयो जायते तन्मूलाश्च ध्यानादयोऽस्याऽप्रत्यूहं भवन्तीत्यर्थः ॥ ३५ ॥

"विशोका वा ज्योतिष्मिती" विगतशोका=दुःखरहिता ज्योतिष्मती=ज्योतिरस्या अस्तीति ज्योतिष्मती प्रकाशरूपा। "हृदयपुण्डरीक" इति। उदरोरसोर्मध्ये यत्पद्मम्(१)अधोमुखं तिष्ठति अष्टदलं, रेचकप्राणायामेन तदूर्द्ध्वमुखं कृत्वा तत्र चित्तं धारयेत्। तन्मध्ये सूर्य्यमण्डलमकारो जागरितस्थानम्। तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्थानम्।

---

* अ। अपवर्गात्=कैवल्यपर्य्यन्तं सर्वमपि सूक्ष्मं सुश्रद्धीयते=इदमित्थमेवेति विश्वस्यत इत्यर्थः। द्वारीभवतीत्युक्तं विवृणोति "अनियतासु" इत्यादिना।

† या बुद्धिसंविच्चित्तसाक्षात्कारः, यच्चाऽस्मितासमापन्नं चित्तमेषा द्वयी विशोका ज्योतिष्मतीत्युच्यत इत्यग्रिमेणाऽन्वयः॥ शास्त्राद्यभिहितार्थविषयकसंशयाऽपनोदनार्थम्।

टि० (१) पद्ममधोमुखम्=उपलक्षणं चैतद्, वितस्तिमात्रं पञ्चच्छिद्रं च "अतिरम्यं हि भूतानां पञ्चच्छिद्रमधोमुखम्। वितस्तिमात्रतो देशे नाभेरूर्द्ध्वमवस्थितम्। यथैवाऽष्टदलं पद्मं सुरक्तं मुकुलीकृतम्। एवं हृदयपद्मं तल्लम्बते हृदयस्य के। सोमाऽग्निरविनक्षत्रविद्युद्वत्तेजसा युतम्। भाति विश्वस्य कृत्स्नस्य ह्याश्रयो योगिनां सदा" इत्यादिस्मृतिभ्यः।

भा० बुद्धिसत्त्वं हि भास्वरमाकाशकल्पं, तत्र स्थितिवैशारद्यात्प्रवृत्तिः सूर्य्येन्दुग्रहमणिप्रभारूपाऽऽकारेण विकल्पते, तथाऽस्मितायां समापन्नं चित्तं निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मि-

---

टी० तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानम् । यस्योपरि परं व्योमात्मकं ब्रह्मनादं तुरीयस्थानमर्द्धमात्रमुदाहरन्ति ब्रह्मवादिनः।तत्र=कर्णिकायामूर्द्ध्वमुखी सूर्य्यादिमण्डलमध्यगा ब्रह्मनाड़ी, ततोऽप्यूर्द्धं प्रवृत्ता (१) सुषुम्नानाम नाड़ी, तया खलु बाह्यान्यपि सूर्य्यादीनि मण्डलानि प्रोतानि। सा हि चित्तस्थानं, तस्यां धारयतो योगिनश्चित्तसंविदुपजायते ।उपपत्तिपूर्वकं बुद्धिसंविद आकारमादर्शयति "बुद्धिसत्त्वं हि" इति । आकाशकल्पमिति व्यापितामाह, (२) सूर्य्यादीनां प्रभास्तासां रूपं तदाकारेण विकल्पते=नानारूपा भवति । मनश्चाऽत्र बुद्धिरभिमतं, न तु महत्तत्त्वम् । तस्य च सुषुम्नास्थस्य वैकारिकाऽहङ्कारजन्मनः सत्त्वबहुलतया ज्योतीरूपता विवक्षिता, तत्तद्विषयगोचरतया च व्यापित्वमपि सिद्धम् । अस्मिताकार्य्ये मनसि सम्पत्तिं दर्शयित्वाऽस्मितासमापत्तेः स्वरूपमाह "तथाऽस्मितायाम्" इति ।

---

टि० (१) ऊर्द्धं प्रवृत्ता=मूर्द्धपर्य्यन्तं गता 'कन्दस्य मध्यमे भागे सुषुम्ना संप्रतिष्ठिता । पृष्ठमध्यस्थितेनास्थ्ना सह मूर्ध्नि समागता' इत्यादि स्मृतेः । कर्णिका=पद्मबीजकोषः ।

(२) 'आकाशकल्पम्' इत्यनेन तत्तदनेकविषयगोचरत्वेनैव मनसो व्यापकत्वमुक्तं, न तु मनसो विभुत्वमेव साङ्ख्यकृतान्तः । "न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा" अ० ५ । सू० ६९ इति साङ्ख्यसूत्रात् । "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्" अ० प्र० । सू० १२४ इति सूत्रेण महत्तत्त्वादिनिखिलकार्य्यस्याऽव्यापित्वकथनाच्च । तदेतत्समनन्तरं वक्ष्यत्यपि "तत्तद्विषयगोचरतया व्यापित्वमपि सिद्धम्" इति । एतेन नेत्रे निमील्य यद्विज्ञानभिक्षुणोक्तमन्तःकरणस्य विभुत्वमाचार्य्यसिद्धान्त इति तद् हेयमेव । किञ्च, न केवलं साङ्ख्यनय एव मनसो विभुत्वाऽभावोऽपि तु सर्वतन्त्रसिद्धान्तोऽयम्। तथाच वेदान्तवैशेषिकन्यायसूत्राणि "नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा" न्या० अ० २। पा० ३। सू० ३२ । आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गम्" वै० अ० ३। आ० १ सू० १। "युगपज्ज्ञानाऽनुत्पत्तिर्मनसो लिङ्गम्" न्या० अ० १ । सू० १६। यद्यप्येतानि सूत्राणि मनःसाधकानि, तथाऽपि तस्य विभुत्वाऽभावमपि साधयन्ति। अन्यथा स्वीकृतेऽपि मनसि तस्य विभुत्वेन सर्वदा सन्निधानसद्भावाद्

भा० तामात्रं भवति। यत्रेदमुक्तं "तमणुमात्रमात्मानमनुविद्या-ऽस्मीत्येवं तावत्संप्रजानीते" इति। एषा द्वयी विशोका विषयवती अस्मितामात्रा च प्रवृत्तिर्ज्योतिष्मतीत्युच्यते, यया योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३६ ॥

सू० वीतरागविषयं वा चित्तम् ॥३७॥

भा० वीतरागचित्ताऽऽलम्बनोपरक्तं वा योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३७ ॥

सू० स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥

---

टी० शान्तम् = अपगतरजस्तमस्तरङ्गम्, अनन्तं = व्यापि, अस्मितामात्रं = न पुनर्नानाप्रभारूपम्। आगमान्तरेण[1] स्वमतं समीकरोति "यत्र" इति यत्रेदमुक्तं पञ्चशिखेन, तमणुं दुरधिगमत्वाद्,आत्मानम् = अहङ्कारास्पदं, अनुविद्य = अनुचिन्त्य, अस्मीत्येवं तावज्जानीत इति। स्यादेतत्। नानाप्रभारूपा भवतु ज्योतिष्मती, कथमस्मितामात्ररूपा ज्योतिष्मतीत्यत आह "एषा द्वयी" इति। विधूतरजस्तमोमलाऽस्मितैव सत्त्वमयी ज्योतिरिति भावः। द्विविधाया अपि ज्योतिष्मत्याः फलमाह "यथा" इति ॥ ३६ ॥ "वीतरागविषयं वा चित्तम्" ॥ वीतरागाः = कृष्णद्वैपायनप्रभृतयस्तेषां चित्तं तदेवाऽऽलम्बनं तेनोपरक्तमिति ॥ ३७ ॥ ॥ "स्वप्ननिद्राज्ञानालम्बनं ऽऽवा" ॥ यदा खल्वयं स्वप्ने विविक्तवनसन्निवेशवर्त्तिनीम्,[2] उत्कीर्णामिव चन्द्रमण्डलात्, कोमलमृणालशकलानुकारिभिरङ्गप्रत्यङ्गैरुपेताम्, अभिजातचन्द्रकान्तमणिमयीम्, अतिसुरभिमालतीमल्लिका-

---

टि० नित्योपलब्धेर्युगपज्ज्ञानोत्पत्तेश्चदुर्वारत्वेन सूत्राऽसङ्गतिः स्पष्टैव। मीमांसकसम्मतमन्तःकरणस्य विभुत्वमपि युक्तिविरुद्धमेवेत्यन्यत्र विस्तरः। स्वयम्भूमतेन विज्ञानोक्तिरित्येके।

(१) यत्तु विज्ञानभिक्षुणोक्तम् आत्मपदेन पुरुषो गृह्यते, नाऽहङ्कार इति। तन्न पेशलम्। आत्मसाक्षात्कारस्य साध्यत्वेन साधनभूताऽनात्मप्रवृत्तिमध्य उपन्यासाऽयोगात्।

(२) विविक्तः = शुद्धः जनाऽसङ्कीर्णो वा यो वनसन्निवेशस्तत्र वर्त्तिनीमित्यर्थः।

उत्कीर्णाम् = निःसृताम्। षडिमानि प्रतिमाविशेषणानि।

भा० स्वप्नज्ञानालम्बनं निद्राज्ञानालम्बनं वा तदाकारं योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३८ ॥

सू० यथाऽभिमतध्यानाद्वा ॥ ३९ ॥

भा० यदेवाभिमतं तदेव ध्यायेत् । तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति ॥ ३९ ॥

सू० परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥

भा० सूक्ष्मे निविशमानस्य परमाण्वन्तं स्थितिपदं लभत इति । स्थूले निविशमानस्य परममहत्त्वान्तं स्थितिपदं चित्तस्य । एवं तामुभयीं कोटिमनुधावतो योऽस्याऽप्रतिघातः स परो वशीकारः, तद्वशीकारात्परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्माऽपेक्षत इति ॥ ४० ॥ ॥ अथ लब्धस्थितिकस्य

टी० मालाहारिणीं, मनोहरां, भगवतो महेश्वरस्य प्रतिमामाराधयन्नेव प्रबुद्धः प्रसन्नमनास्तदा तामेव स्वप्नज्ञानाऽवलम्बनीभूतामनुचिन्तयतस्तस्य तदेकाकारमनसस्तत्रैव चित्तं स्थितिपदं लभते । निद्रा चेह सात्त्विकी ग्रहीतव्या, यस्याः प्रबुद्धस्य— सुखमहमस्वाप्सामिति प्रत्यवमर्शी भवति, एकाग्रं हि तस्यां मनो भवति । तावन्मात्रेण चोक्तम्[१] एतदेव ब्रह्मविदो ब्रह्मणो रूपमुदाहरन्ति सषुप्तावस्थेति । ज्ञानं च ज्ञेयरहितं न शक्यं गोचरयितुमिति ज्ञेयमपि गोचरीक्रियते ॥ ३८ ॥ "यथाभिमतध्यानाद्वा" किं बहुना यदेवाभिमतं तत्तद्देवतारूपमिति ॥ ३९ ॥ ॥ कथं पुनः स्थितिपदमात्मीभावोऽवगन्तव्य इत्यत आह ॥ "परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥ व्याचष्टे "सूक्ष्म" इति । उक्तमर्थं पिण्डीकृत्य वशीकारपदार्थमाह "एवं तामुभयीम्" इति । वशीकारस्यावान्तरफलमाह "तद्वशीकाराद्" इति ॥ ४० ॥ तदेवं चित्तस्थितेरुपाया दर्शिताः, लब्धस्थितिकस्य वशीकारोऽपि दर्शितः । सम्प्रति लब्धस्थितिकस्य चेतसः किंविषयः, किंरूपश्च संप्रज्ञातो भवतीति पृच्छति "अथ" इति ।

टि० (१) सात्त्विक्यां निद्रायां मन एकाग्रं भवतीत्येतावन्मात्रेण सूत्रकृता निद्राज्ञानस्याऽऽ-

भा० चेतसः किंस्वरूपा किंविषया वा समापत्तिरिति। तदुच्यते

सू०— क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४१ ॥

भा० क्षीणवृत्तेरिति = प्रत्यस्तमितप्रत्ययस्येत्यर्थः। अभिजातस्येव[1] मणेरिति दृष्टान्तोपादानम्। यथा स्फटिक उपाश्रयभेदात्तत्तद्रूपोपरक्त उपाश्रयरूपाकारेण निर्भासते तथा ग्राह्यालम्बनोपरक्तं[2] चित्तं ग्राह्यसमापन्नं ग्राह्यस्वरूपाकारेण निर्भासते। भूतसूक्ष्मोपरक्तं भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्वरूपाभासं भवति। तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं स्थूलरूपाभासं

---

टी० अत्रोत्तरसूत्रमवतारयति "तदुच्यते" इति। सूत्रं पठति "क्षीणवृत्तेरित्यादि-समापत्त्यन्तम्" ४१॥ तद्व्याचष्टे "क्षीण" इति। अभ्यासवैराग्याभ्यां क्षीणराजसतामसप्रमाणादिवृत्तेश्चित्तस्य। तस्यव्याख्यानं 'प्रत्यस्तमितप्रत्ययस्य' इति। तदनेन चित्तसत्त्वस्य स्वभावस्वच्छस्य जस्तमोभ्यामभिभव उक्तः। दृष्टान्तं स्पष्टयति 'यथा' इति। उपाश्रय = उपाधिः, जपाकुसुमादिः। उपरक्तः = तच्छायापन्नः। उपाश्रयस्य यदात्मीयं रूपं लोहितनीलादि तदेवाकारस्तेन लक्षितो निर्भासते। दार्ष्टान्तिके योजयति "तथा ग्राह्य" इति ग्राह्यञ्च तदालम्बनञ्च तेनोपरक्तं तदनुविद्धम्। तदनेन ग्रहीतृग्रहणाभ्यां व्यवच्छिनत्ति। आत्मीयमन्तःकरणरूपमपिधाय ग्राह्यसमापन्नं = ग्राह्यतामिव प्राप्तमिति यावत्। अतो ग्राह्यस्वरूपाकारेण निर्भासते। ग्राह्योपराग-

---

टि० लम्बनत्वमुक्तम्। न केवलं निद्राज्ञानमात्रमालम्बनं येनाऽपुरुषार्थत्वमपि तु सौषुप्तं नैजं रूपमत्राऽऽलम्बनं विवक्षितमित्याशयेनाऽऽह "ज्ञानञ्च" इति ॥ (१) अभिजातस्य= निर्मलस्य। (२) यद्यपि सूत्रकृता ग्रहीतृग्रहणग्राह्येष्विति पठितं तथाऽपि भूमिकाक्रममादाय प्रथमं ग्राह्यनिष्ठां समापत्तिमाह "तथा ग्राह्यालम्बनोपरक्तम्" इति।

भा० भवति। तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं भवति। तथा ग्रहणेष्वपि=इन्द्रियेष्वपि द्रष्टव्यम्। ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते। तथा ग्रहीतृपुरुषालम्बनोपरक्तं ग्रहीतृपुरुषसमापन्नं ग्रहीतृपुरुषस्वरूपाकारेण निर्भासते। तथा मुक्तपुरुषालम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तपुरुषस्वरूपाकारेण निर्भासते। तदेवमभिजातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु = पुरुषेन्द्रियभूतेषु, या तत्स्थतदञ्जनता = तेषु स्थितस्य तदाकारापत्तिः, सा समापत्तिरित्युच्यते ॥ ४१ ॥

---

टी० मेव सूक्ष्मस्थूलताभ्यां विभजते "भूतसूक्ष्म" इति। विश्वभेदश्चेतनाचेतनस्वभावो गवादिर्घटादिश्च द्रष्टव्यः। तदनेन वितर्कविचारानुगतौ समाधी दर्शितौ। "तथा ग्रहणेष्वपीन्द्रियेषु" इति "गृह्यन्ते एभिरर्था इति ग्रहणानीन्द्रियाणि। एतदेव स्पष्टयति "ग्रहणालम्बने"ति। ग्रहणं चालम्बनं च तदिति ग्रहणालम्बनं तेनोपरक्तम् = अनुविद्धम्, आत्मीयमन्तः करणरूपमपिधाय, ग्रहणमिव = बहिःकरणमिवापन्नमिति। तदनेनाऽऽनन्दाऽनुगतमुक्त्वाऽस्मिताऽनुगतमाह। "तथा ग्रहीतृपुरुष" इति। अस्मिताऽऽस्पदं हि ग्रहीता पुरुष इति भावः। पुरुषत्वाविशेषादनेनैवमुक्तोऽपि पुरुषः शुकप्रह्लादादिः समाधिविषयतया संग्रहीतव्य इत्याह "तथा मुक्त" इति। उपसंहरन् तत्स्थतदञ्जनतापदं व्याचष्टे "तदेवम्" इति। तेषु = ग्रहीतृग्रहणग्राह्येषु, स्थितस्य = धारितस्य ध्यानपरिपाकवशादपहृतरजस्तमोमलस्य चित्तसत्त्वस्य, या तदञ्जनता = तदाकारता, सा समापत्तिः = सम्प्रज्ञातलक्षणो योग उच्यते। तत्र च ग्रहीतृग्रहणग्राह्येष्विति सौत्रः पाठक्रमोऽर्थक्रमविरोधान्नादर्त्तव्यः। एवम्भाष्येऽपि प्रथमं भूतसूक्ष्मोपन्यासोऽप्यनादरणीय इति सर्वं रमणीयम् ॥ ४१ ॥ ॥ सामान्यतः समापत्तिरुक्ता, सेयमवान्तरभेदाच्चतुर्विधा भवति। तद्यथा, सवितर्का, निर्वितर्का, सविचारा, निर्विचारा चेति। तत्र सवितर्कायाः। समापत्तेर्लक्षण-

सू० तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का समापत्तिः ॥ ४२ ॥

भा० तद् यथा गौरितिशब्दो, गौरित्यर्थः, गौरिति ज्ञानमित्यविभागेन विभक्तानामपि ग्रहणं दृष्टम् । विभज्यमानाश्चान्ये शब्दधर्मा, अन्येऽर्थधर्मा, अन्ये विज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः। तत्र समापन्नस्य योगिनो यो गवाद्यर्थः समाधिप्रज्ञायां समारूढः स चेच्छब्दार्थज्ञानविकल्पानुविद्ध उपावर्त्तते सा सङ्कीर्णा समापत्तिः सवितर्केत्युच्यते ॥ ४२ ॥

---

टी० माह "तत्र, इत्यादि सामापत्त्यन्तं" सूत्रम्। तत्र = तासु समात्तिषु मध्ये(१) सवितर्का समापत्तिः प्रत्येतव्या। कीदृशी, शब्दश्चार्थश्च ज्ञानं च तेषां विकल्पा वस्तुतो भिन्नानामपि शब्दादीनामितरेतराध्यासाद्, विकल्पोऽप्येकस्मिन् भेदमादर्शयति भिन्नेषु चाभेदम्। तेन शब्दार्थज्ञानविकल्पैः सङ्कीर्णा = मिश्रेत्यर्थः। तद्यथा गौरिति शब्द इति—गौरित्युपात्तयोरर्थज्ञानयोः शब्दाभेदविकल्पो दर्शितः। गौरित्यर्थ इति—गौरित्युपात्तयोः शब्दज्ञानयोरर्थाभेदविकल्पो दर्शितः। गौरितिज्ञानमिति—गौरित्युपात्तयोः शब्दार्थयोर्ज्ञानाभेदविकल्पो दर्शितः। तदेवमाविभागेन विभक्तानामपि शब्दार्थज्ञानानां ग्रहणं लोके द्रष्टव्यम्। यद्यविभागेन ग्रहणं कुतस्तर्हि विभाग इत्यत आह "विभज्यमानाश्च" इति विभज्यमानाश्चान्वयव्यतिरेकाभ्यां परीक्षकैरन्ये शब्दधर्माः = ध्वनिपरिणाममात्रस्य शब्दस्योदात्तादयो धर्माः, अन्येऽर्थस्य जडत्वमूर्त्तत्वादयः, अन्ये प्रकाशमूर्त्तिविरहादयो ज्ञानस्य धर्मा इति । तस्मादेतेषां विभक्तः पन्थाः = स्वरूपभेदोन्नयनमार्गः। तत्र = विकल्पते गवाद्यर्थे "समापन्नस्येति" तदनेन योगिनोऽपरं प्रत्यक्षमुक्तम् । शेषं सुगमम् ॥ ४२ ॥

---

टि० (१) तत्रेति सप्तम्या निर्धारणार्थत्वबोधनाय मध्ये-इतिपदं, न तु तत्र निविष्टं, षष्ठीप्रसङ्गात् ।

भा० यदा पुनः शब्दसङ्केतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणाऽवस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवाऽवच्छिद्यते सा च निर्वितर्का समापत्तिः। तत्परं प्रत्यक्षम्। तच्च श्रुताऽनुमानयोर्बीजं, ततः श्रुताऽनुमाने प्रभवतः। न च श्रुताऽनुमानज्ञानसहभूतं तद्दर्शनं, तस्मादसङ्कीर्णं प्रमाणान्तरेण योगिनो निर्वितर्कसमाधिजं दर्शनमिति, (१) निर्वितर्कायाः समापत्तेरस्याः सूत्रेण लक्षणं द्योत्यते।

टी० सूत्रं योजयितुं प्रथमतस्तावन्निर्वितर्कां व्याचष्टे "यदा पुनरिति। परिशुद्धिः = अपनयः, शब्दसङ्केतस्मरणपूर्वे खल्वागमानुमाने प्रवर्त्तेते। सङ्केतश्चायं गौरितिशब्दार्थज्ञानानामितरेतराध्यासात्मा, ततश्चागमानुमानज्ञानविकल्पौ भवतः। तेन तत्पूर्वा समाधिप्रज्ञा सवितर्का। यदा पुनरर्थमात्रप्रवणेन चेतसाऽर्थमात्राऽऽदृतेन तदभ्यासान्नान्तरीयकतामुपगता सङ्केतस्मृतिस्त्यक्ता, तत्त्यागे च श्रुतानुमानज्ञानविकल्पौ तन्मूलौ त्यक्तौ, तदा तच्छून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपमात्रतयैव, न तु विकल्पितेनाकारेण परिच्छिद्यते सा निर्वितर्का समापत्तिरिति। तद् योगिनां परं प्रत्यक्षम्, असदारोपगन्धस्याप्यभावात्। स्यादेतत्, परेण प्रत्यक्षेणार्थतत्त्वं गृहीत्वा योगिन उपपादयन्ति उपदिशन्ति च, कथं वाऽतद्विषयाभ्यामागमपरार्थानुमानाभ्यां सोऽर्थ उपदिश्यते उपपाद्यते च। तस्मादागमानुमाने तद्विषये, ते च विकल्पाविति परमपि प्रत्यक्षं विकल्प एवेत्यत आह "तच्च श्रुते"ति। यदि हि सवितर्कामिव श्रुताऽनुमानसहभूतं = तदनुषक्तं स्याद् भवेत्सङ्कीर्णं, तयोस्तु बीजमेवैतत्, ततो हि श्रुताऽनुमाने प्रभवतः। न च यद् यस्य कारणं तत्तद्विषयं भवति। नहि धूमज्ञानं वह्निज्ञानकारणमिति वह्निविषयम्। तस्मादविकल्पेन प्रत्यक्षेण गृहीत्वा विकल्प्योपदिशन्ति चोपपादयन्ति च। उपसंहरति "तस्माद्" इति। व्याख्येयं सूत्रं योजयति "निर्वितर्काया" इति।

टि० (१) इति = इत्थम्भूताया अस्या निर्वितर्काया लक्षणमग्रिमेण सूत्रेण द्योत्यत इत्येवमिति-शब्द उत्तरान्वयी वा बोध्यः।

सू० स्मृतिपरिशुद्धौ स्वरूपशून्येवाऽर्थमात्रनिर्भासा निर्वितर्का (१) ॥४३॥

भा० या शब्दसङ्केतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ ग्राह्यस्वरूपोपरक्ता प्रज्ञा स्वमिव प्रज्ञारूपं ग्रहणात्मकं त्यक्त्वा पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति सा निर्वितर्का समापत्तिः। तथा च व्याख्याता[२] । तस्या[३] एकबुद्ध्युपक्रमो ह्यर्थात्माऽणुप्रचयविशेषाऽऽत्मा गवादिर्घटादिर्वा लोकः । स च

---

टी० स्मृतिपरिशुद्धावित्यादि सूत्रम् । शब्दसङ्केतश्च श्रुतं चाऽनुमानञ्च तेषां ज्ञानमेव विकल्पः, तस्मात् स्मृतिस्तस्याः परिशुद्धिः=अपगमः, तस्याम्। अत्र च सङ्केतस्मृतिपरिशुद्धिर्हेतुः। श्रुतादिज्ञानस्मृतिपरिशुद्धिश्च हेतुमती। अनुमान-शब्दश्च कर्मसाधनोऽनुमेयवाचकः। स्वमिवेतीवकारो भिन्नक्रमः, त्यक्त्वेतिपदाऽनन्तरं द्रष्टव्यः। विषयविप्रतिपत्तिं निराकरोति "तस्या एक" इति । एकां बुद्धिमुपक्रमते=आरभत इत्येकबुद्ध्युपक्रमः। तदनेन परमाणवो नानाऽऽत्मानो न निर्वितर्कविषया इत्युक्तं भवति।

योग्यत्वेऽपि तेषां परमसूक्ष्माणां नानाभूतानां महत्त्वैकार्थसमवेतैकत्वनिर्भासप्रत्ययविषयत्वाऽयोगात्। अस्तु तर्हि परमार्थसत्सु परमाणुषु सांवृतः(१) प्रतिभासधर्मः स्थौल्यमित्यत आह "अर्थात्मा" इति। न स्थूल-

---

टि० [१] स्मृतिपरिशुद्धौ=शब्दार्थज्ञानविकल्पाऽपगमे सति, या स्वरूपशून्येवाऽत एवाऽर्थमात्रनिर्भासा स्वान्तःस्थितिः सा निर्वितर्का समापत्तिः, निर्विकल्पसमाधिरिति यावत् ।

(२) तथा च व्याख्याता—एतत्सूत्रपातनिकायामस्माभिरिति शेषः । पूर्वाचार्य्यैरिति शेष इति विज्ञानभिक्षूक्तिस्त्वनवधानप्रयुक्तैवेति हेया ।

[३] तस्याः=निर्वितर्कायाः समापत्तेः, गवादिर्घटादिर्वा लोकः=विषय इत्यन्वयः, एकबुद्ध्युपक्रम इत्यादीनि त्रीणि विशेषणानि तु मतान्तरनिराकरणपराणीति ध्येयम् । तथाहि एकबुद्ध्युपक्रम=इत्यनेन वैभाषिकसौत्रान्तिकाऽभिमतपरमाणुपुञ्जानिरासः । अर्थात्मा=इत्यनेन

भा० संस्थानविशेषोभूतसूक्ष्माणांसाधारणो धर्मआत्मभूतः फलेन व्यक्तेनाऽनुमितः स्वव्यञ्जकाञ्जनः[२] प्रादुर्भवति, धर्मान्तरोदये च तिरोभवति। स एष धर्मोऽवयवीत्युच्यते। योऽसावेकश्च[३]

टी० मनुभवसिद्धमसति बाधके शक्यापह्नवमिति भावः। तत्र ये पश्यन्ति द्व्यणुकादिक्रमेण गोघटादय उपजायन्त इति तान् प्रत्याह "अणुप्रचय" इति। अणूनां प्रचयः=स्थूलरूपः परिणामः स च विशिष्यतेऽन्यस्मात् परिणामान्तरात्, स एवाऽऽत्मा=स्वरूपं यस्य स तथोक्तः। गवादिर्भोगायतनं, घटादिर्विषयः, तच्चैतदुभयमपि लोक्यत इति लोकः॥ नन्वेष सूक्ष्मभूतेभ्यो भिन्नोऽभिन्नो वा स्याद्, भिन्नश्चेत् कथन्तदाश्रयः, कथञ्च तदाकारः। न हि घटः पटादन्यस्तदाऽऽकारस्तदाऽऽश्रयो वा। अभिन्नश्चेत्तद्वदेव सूक्ष्मोऽसाधारणश्च स्यादत आह—

"स च" इति। अयमभिप्रायः। नैकान्ततः परमाणुभ्यो भिन्नो घटादिरभिन्नो

टि० योगाचाराऽभिमतविज्ञानाऽऽकारतानिराकृतिः। अणूनां स्थूलः परिणाम इत्यर्थकेन, अणुप्रचयविशेषाऽऽत्मा—इत्यनेन कणादाद्यभिमताऽऽरम्भवादपक्षप्रतिक्षेप इति।

(१) सांवृतः=विशकलितपरमाणुतत्त्वाऽऽच्छादिका बुद्धिः संवृत्, तया भासमान इत्यर्थः। प्रतिभासधर्मः=प्रतिभासकाले अर्थस्य धर्म इत्यर्थः। विज्ञानवादिन इयमाशङ्केति मते तु ज्ञानधर्म इत्यर्थो बोध्यः।

(२) स्वव्यञ्जकाञ्जनः=स्वाऽभिव्यक्तिहेतुसामग्र्याऽभिव्यज्यमानः सन् प्रादुर्भवति=वर्तमानाऽवस्थां प्राप्नोति, मुद्गरप्रहारादिना च धर्मान्तरोदये तिरोभवति=अतीताऽवस्थां प्राप्नोतीत्यर्थः। एतेन सत्कार्य्यवाद उक्तः। तत्र प्रमाणमाह "फलेन व्यक्तेनाऽनुमितः=अभिव्यक्तिलक्षणेन कार्य्येणाऽनुमितः। असदभिव्यक्तौ तु सर्वत्र सर्वाऽभिव्यक्तिप्रसङ्ग इति भावः। तथा च सांख्यसूत्रं "सर्वत्र सर्वदा सर्वाऽसम्भवादिति" अ० १ सू० ११६।

(३) "योऽसावेकश्च" इत्यादिनाऽयमेको महान् स्थूलो घट इति प्रत्यक्षमेवाऽवयविनि प्रमाणमित्युक्तम्। तथाहि, किमेकबुद्धिरभिन्नाऽर्थविषया? आहोस्विन्नानाऽर्थविषया? आद्ये अवयविसिद्ध्याऽर्थान्तराऽनुज्ञानम्। द्वितीये भिन्नेष्वेकदर्शनाऽनुपपत्तिः। न च यथा सेनाङ्गेषु वनाङ्गेषु च दूरादगृह्यमाणपृथक्त्वेषु, एकमिदमिति बुद्धिरुत्पद्यत एवं परमाणुषु सञ्चितेष्वगृह्यमाणपृथक्त्वेष्वेकोऽयमिति बुद्धिरुत्पत्स्यत इति साम्प्रतम्। तथा सति परमाणूनामतीन्द्रियत्वात् प्रत्यक्षे च महत्त्वस्य हेतुत्वात्प्रत्यक्षाऽनुपपत्तेः। तथाच न्यायसूत्रं "सेनावनादिवदिति चेन्नाऽतीन्द्रियत्वादणूनाम्" इति। अधिकमात्मतत्त्वविवेके निरीक्ष्यम्।

भा० महाँश्चाणीयाँश्च स्पर्शवाँश्च क्रियाधर्मकश्चानित्यश्च, तेनाऽवयविना व्यवहाराः क्रियन्ते। यस्य पुनरवस्तुकः स प्रचयविशेषः[१]

टी०वा। भिन्नत्वे गवाश्ववद् धर्मधर्मिभावानुपपत्तेः। अभिन्नत्वे धर्मिरूपवत्तदनुपपत्तेः। तस्मात्कथञ्चिद् भिन्नः कथञ्चिदभिन्नश्चास्थेयस्तथा च सर्वमुपपद्यते। "भूतसूक्ष्माणाम्" इति षष्ठ्या कथञ्चिद् भेदं सूचयति, "आत्मभूत" इतिचाभेदम्। फलेन व्यक्तेन=तदनुभवलक्षणेन तद्व्यवहारलक्षणेन च व्यक्तेन विप्रतिपन्नं प्रत्यनुमापितः। कारणभेदेन च कारणाकारतोपपन्नेत्याह "स्वव्यञ्जकाञ्जन" इति। स किं तदात्मभूतो धर्मो नित्यो ? नेत्याह "धर्मान्तर" इति। धर्मान्तरस्य=कपालादेरुदय इत्यर्थः। तस्यावयविनः परमाणुभ्यो व्यावृत्तं रूपमादर्शयति "स एष" इति। परमाणुसाध्यायाः क्रियाया अन्या क्रिया मधूदकादिधारणलक्षणा तद्धर्मक इति। न केवलमनुभवादपि तु व्यवहारतोऽपि तन्निबन्धनत्वाल्लोकयात्राया इत्याह "तेन" इति। स्यादेतद्, असति बाधकेऽनुभवोऽवयविनं व्यवस्थापयेद्, अस्ति च बाधकं यत्सत् तत्सर्वमनवयवं यथा विज्ञानं सच्च गोघटादि इति स्वभावहेतुः,[२] सत्त्वं हि[३] विरुद्धधर्मसंसर्गरहितत्वेन व्याप्तं, तद्विरुद्धश्च विरुद्धधर्मसंसर्गः साऽवयव उपलभ्यमानो व्यापकविरुद्धोपलब्ध्या[४] सत्त्वमपि निवर्त्तयति। अस्तिचावयविनि[५] तद्दे-

टि० (१) यस्य=सौगतस्य मते स प्रचयविशेषः=स्थूलरूपः परिणामोऽवयवी, अवस्तुकः=तुच्छस्तस्याऽवयव्यभावाद् हेतोः सर्वमेव मिथ्याज्ञानं प्राप्तमित्यन्वयः।

(२) स्वभावहेतुः-अनौपाधिको हेतुः सद्धेतुरिति न अर्थान्तरम्। सदनुमानस्येयं प्राचां संज्ञा॥

(३) ननु घटादिकं निरवयवं सत्त्वाद् विज्ञानवद् इत्यनुमानप्रयोजकं हेतुरस्तु साध्यं मा भूदितिविपक्षे बाधकाऽभावादित्याशङ्क्य विपक्षे साऽवयवे सत्त्वनिवृत्तिमेव बाधकमाह, "सत्त्वं हीत्यादिना, निवर्त्तयतीत्यन्तेन"।

(४) व्यापकविरुद्धोपलब्ध्या=घटादयो न सन्तः। विरुद्धधर्मसंसर्गराहित्यवैधुर्य्यादित्येकं व्यापकाऽभावेन व्याप्याऽभावाऽनुमानेन विरुद्धधर्मसंसर्गः सत्त्वमपि निवर्त्तयति इत्यर्थः।

(५) वृक्षे कासु चिच्छाखासु कम्पमानासु तदंशेऽवयवी कम्पते, इतरास्वकम्पमानासु तदंशे न कम्पते। नचैतदेकस्मिन् वृक्षाऽवयविनि संघटते। न हि सम्भवति—तदेव कम्पते न कम्पते चेति, तथा घटादिष्वप्यर्द्धमाव्रियतेऽर्द्धन्नेति, तथा पटादावप्यर्द्धं रक्तं दृश्यतेऽर्द्धं नेत्येवंलक्षणो विरुद्धधर्मसंसर्गोऽवयविन्यस्ती ति नाऽसिद्धो हेतुरिति भावः।

टी०शत्वाऽतद्देशत्वाऽऽवृतत्वाऽनावृतत्वरक्ताऽरक्तत्वचलाऽचलत्वलक्षणो विरुद्धधर्मसंसर्ग इत्यत आह, "यस्य पुनः" इति । अयमभिप्रायः। अनुभवसिद्धं सत्त्वं हेतुः क्रियते यत्किल पांशुलपादुको हालिकोऽपि प्रतिपद्यते अन्यद्वाऽनुभवसिद्धात्। तत्राऽन्यदसिद्धत्वादहेतुः। अनुभवसिद्धन्तु घटादीनां सत्त्वमर्थक्रियाकारित्वरूपं न स्थूलादन्यत्। सोऽयं हेतुः स्थूलत्वमपाकुर्वन्नात्मानमेव व्याहन्ति। ननु न स्थूलत्वमेव सत्त्वम्, अपि त्वसतो व्यावृत्तिः, अस्थौल्यव्यावृत्तिश्च स्थौल्यं, व्यावर्त्त्यभेदाच्च व्यावृत्तयो भिद्यन्ते, अतः स्थौल्याऽभावेऽपि न सत्त्वव्याहतिरन्यत्वात्। भवतु वा व्यावृत्तिभेदादवसायविषयभेदो यत्पूर्वकास्त्ववसायास्तस्याऽनुभवस्याऽविकल्पस्य प्रमाणस्य को विषय इति निरूपयतु भवान्। रूपपरमाणवो[१] हि निरन्तरोत्पादा अगृहीतपरमसूक्ष्मतत्त्वा इति चेत्। हंतै[२] ते गन्धरसस्पर्शपरमाणुभिरन्तरिता न निरन्तराः। तस्मादन्तरालाऽग्रहे एकघनवनप्रत्ययवत्परमाण्वालम्बनः सन्नयं विकल्पो मिथ्येति तत्प्रभवा विकल्पा न पारम्पर्य्येणापि वस्तुप्रतिबद्धा इति कुतस्तदवसितस्यसत्त्वस्यानवयवत्वसाधकत्वम्। तस्मादविकल्पस्यप्रत्यक्षस्य प्रामाण्यमिच्छता तदनुभूयमानस्थौल्यस्यैव सत्त्वमविकल्पावसेयमकामयता-

---

टि० (१) भवतु वेत्यादिना कल्पनाऽपोढाख्यस्य निर्विकल्पप्रमाणस्य को विषय इति सिद्धान्तिना पृष्टे वैभाषिक आह—"रूपपरमाणवो हि" इति । एकविज्ञानोपारोहिणो निरन्तरमुत्पन्ना रूपपरमाणव एव स्थौल्यं, स एव प्रतिभासकालिकोऽर्थस्य धर्मो गोचरः । तेन मा नाम भून्नीलत्वादिवत् परमाणुधर्मः स्थौल्यं, प्रत्येकं परमाणुष्वभावात् । प्रतिभासदशाऽऽपन्नानां तु तेषां भविष्यति बहुत्वादिव सांवृतं स्थौल्यम् । यथाहुः "ग्रहेऽनेकस्य चैकेन किञ्चिद् रूपं हि गृह्यते । सांवृतं प्रतिभासस्थं तदेकात्मन्यसम्भवात् । न च तद्दर्शनं भ्रान्तं नानावस्तुग्रहाद् यतः । सांवृतं ग्रहणं नाऽन्यन्न च वस्तुग्रहो भ्रम" इति । इति वैभाषिकाऽऽकूतम् ।

(२) नैरन्तर्य्याऽवभासस्य भ्रमत्वमापादयन् पूर्वोक्तं निराकरोति सिद्धान्ती "हंतैते" इति । यदि हि निरन्तरा रूपपरमाणव एवैकधीगोचरास्तर्हि रूपपदार्थे रसगन्धस्पर्शपरमाणूनामपि सत्त्वेन रूपपरमाणूनां नैरन्तर्य्यमसिद्धम् । ततश्च सान्तरेषु वृक्षेषु दूराद् घनवनप्रत्ययवत् सान्तरेषु परमाणुषु भ्रान्त एव स्थौल्यप्रत्यय इति भावः । नचाऽऽरोप्यते नैरन्तर्य्यमिति साम्प्रतम् । इतरेतराऽऽश्रयदोषप्रसङ्गात् । तदुक्तमुदयनाऽऽचार्य्यैरात्मतत्त्वविवेके "नैरन्तर्य्याऽऽरोपे तेषां स्थूलानां ग्रहणं तद्ग्रहणे च सति नैरन्तर्य्यारोप" इति ।

भा० सूक्ष्मं च कारणमनुपलभ्यमविकल्पस्य[1] तस्याऽवयव्यभावादतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव प्राप्तं मिथ्याज्ञानमिति । तदा च सम्यग्ज्ञानमपि किं स्याद्विषयाऽभावाद्, यद् यदुपलभ्यते तत्तदवयवित्वेनाघ्रातं, * तस्मादस्त्यवयवी यो महत्त्वादिव्यवहाराऽऽपन्नः समापत्तेर्निर्वितर्काया विषयो भवति ॥४३॥

## सू० एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥४४॥

टी०ऽभ्युपेयम्। तथाचतद्बाधमानंसत्त्वमात्मानमेवाऽपबाधेत। परमसूक्ष्माः परमाणवो विजातीयपरमाण्वन्तरिता अनुभवविषयाइतिव्याहतमङ्गीकरणम् । तदिदमुक्तं 'यस्य पुनरवस्तुकः स प्रचयविशेषो निर्विकल्पस्य विषय इति । सन्तु तर्हि सूक्ष्माः परमाणवो निर्विकल्पविषया इत्यत आह "सूक्ष्मं च कारणमनुपलभ्यमविकल्पस्य" इति । तस्याऽवयव्यभावाद् हेतोः 'अतद्रूपप्रतिष्ठं मिथ्याज्ञानम्' इति लक्षणेन सर्वमेव प्राप्तं मिथ्याज्ञानं = यत् स्थौल्याऽऽलम्बनं यच्च तदधिष्ठानसत्त्वाऽऽलम्बनमित्यर्थः । नन्वेतावताऽपि न ज्ञानमात्मानि मिथ्या भवति तस्याऽवयवित्वेनाऽप्रकाशादित्यत आह "प्रायेण" इति । ननु किमेतावताऽपीत्यत आह "तदा च" इति । सत्त्वादिज्ञानं चेन्मिथ्या तदा सत्त्वादिहेतुकमनवयवित्वादिज्ञानमपि मिथ्यैव । तस्याऽपि हि निर्विकल्पागोचराऽस्थूलमेवावसेयतया विषयः । स च नास्तीतितात्पर्य्यार्थः । विषयाऽभाव एव कुत इत्यत आह "यद् यद्" इति । विरोधश्च[2] परिणामवैचित्र्येण भेदाऽभेदेन चोक्तोपपत्त्यनुसारेणोद्धर्तव्य इति सर्वं रमणीयम् ॥४३॥

सू० "एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता" । अभिव्यक्तो घटादिधर्मो यैस्ते तथोक्ताः, घटादिधर्मोपगृहीता इति यावत् ।

टि० (१) अविकल्पस्येति न सार्वत्रिकः पाठः। सूक्ष्मं यदवयवाऽऽरब्धं कारणं तद् अविकल्पस्याऽनुपलभ्यं निर्विकल्पप्रत्यक्षाऽग्राह्यमिति यावदिति योजना । * आम्नातमिति पाठान्तरम् ।
(२) ननु ग्रहणाऽग्रहणतद्देशत्वाऽतद्देशत्वादिविरोधपरिहारः कथमत आह "विरोधश्च" इति । एतच्च पञ्चविधविरोधध्वंसनप्रस्ताव आत्मतत्त्वविवेके स्पष्टम् ।

भा० तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिस्सा सविचारेत्युच्यते।*तत्राऽप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं भूतसूक्ष्ममालम्बीभूतं समाधिप्रज्ञायामुपतिष्ठते। या पुनः सर्वथा सर्वतः शान्तोदिताऽव्यपदेश्यधर्माऽनवच्छिन्नेषु सर्वधर्माऽनुपातिषु सर्वधर्मात्मकेषु समापत्तिः

देशः = उपर्य्यधःपार्श्वादिः, कालो = वर्त्तमानः, निमित्तम् = पार्थिवस्य परमाणोर्गन्धतन्मात्रप्रधानेभ्यः पञ्चतन्मात्रेभ्य उत्पत्तिः। एवमाप्यस्य परमाणोर्गन्धतन्मात्रवर्जितेभ्यो रसतन्मात्रप्रधानेभ्यश्चतुर्भ्यः, एवं तैजसस्य परमाणोर्गन्धरसतन्मात्ररहितेभ्यो रूपतन्मात्रप्रधानेभ्यस्त्रिभ्यः, एवं वायवीयस्य परमाणोर्गन्धादि(१)तन्मात्रहीनाभ्यां स्पर्शप्रधानाभ्यां स्पर्शशब्दतन्मात्राभ्याम्, एवं नाभसस्य शब्दतन्मात्रादेवैकस्मात्। तदिदं निमित्तं भूतसूक्ष्माणाम्। एतेषां देशकालनिमित्तानामनुभवस्तेनाऽवच्छिन्नेषु, नाननुभूतविशेषणा बुद्धिर्विशेष्य उपजायत इत्यर्थः। ननु सवितर्कया सह किं सारूप्यं सविचाराया इत्यत आह "तत्राऽपि" इति। पार्थिवो हि परमाणुपञ्चतन्मात्रप्रचयाऽऽत्मा एकबुद्धिनिर्ग्राह्यः, एवमाप्यादयोऽपि चतुस्त्रिद्व्येकतन्मात्राऽऽत्मान एकबुद्धिनिर्ग्राह्या वेदितव्याः। उदितो = वर्त्तमानो धर्मस्तेन विशिष्टम्। एतावता चात्र सङ्केतस्मृत्याऽऽगमानुमानविकल्पाऽनुवेधः सूचितः। न हि प्रत्यक्षेण स्थूले दृश्यमाने परमाणवः प्रकाशन्तेऽपि त्वागमानुमानाभ्याम्। तस्मादुपपन्नमस्याः सङ्कीर्णत्वमिति। निर्विचारामाह "या पुनरिति। सर्वथा = सर्वेण नीलपीतादिप्रकारेण। सर्वत इति सार्वविभक्तिकस्तसिः। सर्वैः=देशकालनिमित्ताऽनुभवैरित्यर्थः। तदनेन स्वरूपेण कालाऽनवच्छेदः परमाणूनामिति दर्शितम्। नाऽपि तदाऽऽरब्धधर्मद्वारेणे(२)त्याह "शान्त" इति। शान्ताः = अतीताः, उदिताः = वर्त्तमाना, अव्यपदेश्याः = भविष्यन्तो धर्मास्तैरनवच्छिन्नेषु। अनवच्छिन्ना धर्मैः परमाणवः किमसंबद्धा एव तैरित्यत आह "सर्वधर्मानुपातिषु(३)" इति।

टि० *अत्राऽपीति पाठान्तरम्। (१) गन्धादीत्यादिपदेन रसरूपयोर्ग्रहणम्। (२) द्वारेणेत्यस्याऽग्रे कालाऽवच्छेद इति शेषः। (३) सर्वधर्माऽनुपातिषु = सर्वधर्मानुगतेष्वित्यर्थः।

भा० सा निर्विचारेत्युच्यते । एवंस्वरूपं हि[1] तद् भूतसूक्ष्ममेतेनैव स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति । प्रज्ञा च स्वरूपशून्येवाऽर्थमात्रा यदा भवति तदा निर्विचारेत्युच्यते, तत्र महद्वस्तुविषया सवितर्का निर्वितर्का च, सूक्ष्मविषया सविचारा निर्विचारा च, एवमुभयोरेतयैव[2] निर्वितर्कया विकल्पहानिर्व्याख्याता इति ॥ ४४ ॥

सू० सूक्ष्मविषयत्वं चाऽलिङ्गपर्य्यवसानम् ॥ ४५ ॥

भा० पार्थिवस्याऽणोर्गन्धतन्मात्रं सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रं, तैजसस्य रूपतन्मात्रं, वायवीयस्य स्पर्शतन्मात्रम्, आकाशस्य शब्दतन्मात्रमिति, तेषामहङ्कारः,[3] अस्याऽपि लिङ्ग-

---

टी० कतमेन सम्बन्धेन धर्माननुपतन्ति परमाणव इत्यत आह, "सर्वधर्मात्मकेषु" * इति । कथञ्चिद् भेदः कथञ्चिदभेदो धर्माणां परमाणुभ्य इत्यर्थः । कस्मात् पुनरियं समापत्तिरेतद्विषयेत्यत आह, "एवं स्वरूपं हि" इति । वस्तुतत्त्वग्राहिणी नाऽतत्त्वे प्रवर्त्तत इत्यर्थः ।

विषयमभिधायाऽस्याः स्वरूपमाह "प्रज्ञा च" इति । सङ्कलय्य स्वरूपभेदोपयोगि विषयमाह "तत्र" इति । उपसंहरति "एवम्" इति । उभयोः=आत्मनश्च † निर्विचारायाश्चेति ॥ ४४ ॥

किं भूतसूक्ष्म एव ग्राह्यविषया समापत्तिः समाप्यते ? न, किन्तु "सूक्ष्मविषयत्वं चाऽलिङ्गपर्य्यवसानम्" ॥ पार्थिवस्य परमाणोः सम्बन्धिनी या गन्धतन्मात्रता सा समापत्तेः सूक्ष्मो विषयः। एवमुत्तरत्राऽपि योज्यम्।

---

* सर्वधर्मात्मकेषु=सर्वधर्माणामाश्रयेष्वित्यर्थः † आत्मनश्च=निर्वितर्कायाश्चेत्यर्थः ।

टि० (१) हि-शब्दो हेत्वर्थे, यतस्तद् भूतसूक्ष्मम् एवंस्वरूपमत एतेनैव स्वरूपेणाऽऽलम्बनीभूतं सत् समाधिप्रज्ञास्वरूपमुपरञ्जयति=स्वसमानाऽऽकारं करोतीत्यर्थः ।

(२) एतया=पूर्वसूत्रोक्तया निर्वितर्कयैव, उभयोः=निर्वितर्काया निर्विचारायाश्च, विकल्पहानिः=शब्दार्थविकल्पशून्यता, व्याख्यातेत्यर्थः। उभयोरित्यस्य सविचारनिर्विचारयोरित्यर्थ इति विज्ञानभिक्षुव्याख्यानं तु महदसङ्गतम् । सविचाराया विकल्पशून्यत्वाभावात्।

(३) तेषाम्—पञ्चतन्मात्राणां कारणं योऽहङ्कारः स तेभ्यः पञ्चतन्मात्रेभ्यः

भा० मात्रं सूक्ष्मो विषयः। लिङ्गमात्रस्याऽप्यलिङ्गं सूक्ष्मो विषयः। न चाऽलिङ्गात्परं सूक्ष्ममस्ति । नन्वास्ति पुरुषः सूक्ष्म इति[१], सत्यम् । यथालिङ्गात्परमलिङ्गस्य सौक्ष्म्यं, न चैवं पुरुषस्य, किन्तु लिङ्गस्यान्वयिकारणं पुरुषो न भवति हेतुस्तु भवतीति[२] । अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम् ॥ ४५ ॥

---

लिङ्गमात्रं=महत्तत्वं, तद्धि लयं गच्छति प्रधान इति । अलिङ्गं = प्रधानं, तद्धि न क्वचिल्लयं गच्छति इत्यर्थः । अलिङ्गपर्य्यवसानत्वमाह "नचाऽलिङ्गात्परम्" इति । चोदयति "ननु" इति । पुरुषोऽपि सूक्ष्मो नाऽलिङ्गमेवेत्यर्थः । परिहरति "सत्यम्" इति । उपादानतया सौक्ष्म्यम् अलिङ्ग एव नाऽन्यत्रेत्यर्थः । तत्र पुरुषार्थनिमित्तत्वान्महदहङ्कारादेः पुरुषोऽपि कारणमलिङ्गवद्[३] इति । कुत एवंलक्षणम् अलिङ्गस्यैव सौक्ष्म्यमित्याशयवान् पृच्छति "किन्तु" इति । उत्तरमाह "लिङ्गस्य' इति । सत्यं कारणं, न तूपादानम् । यथा हि प्रधानं महदादिभावेन परिणमते

---

सूक्ष्मो विषयः समापत्तेरित्यर्थः । एवमग्रेऽपि बोध्यम् । यद्वा तेषामित्यादिषष्ठ्यन्तानि पञ्चम्यन्ताऽर्थकानि ।

(१) ननु "अव्यक्तात्पुरुषः पर" इति श्रुत्या पुरुष एव निरतिशयं सौक्ष्म्यमाख्यायते, तत्कथं प्रधाने सौक्ष्म्यकाष्ठाकथनमित्याशयेन शङ्कते "नन्वस्ति पुरुषः सूक्ष्म" इति, अङ्गीकरोति "सत्यम्" इति । कथन्तर्हि अलिङ्गापर्य्यवसानमित्युक्तमत आह । "यथा" इति। यथा--शब्दो यादृशार्थकः। तथा च यादृशं परिणामित्वेनोपादानतया महत्तत्वाऽपेक्षितं सौक्ष्म्यं प्रधानेऽस्ति, नैवं पुरुषस्य प्रधानाऽपेक्षितं सौक्ष्म्यम् । पुरुषस्याऽपरिणामित्वात् । परिणामित्वसमानाधिकरणसौक्ष्म्यस्य प्रधान एव विश्रान्तिरिति भावः ।

(२) इति = शब्दो हेत्वर्थे। यतः पुरुषो हेतुः = निमित्तकारणमेव लिङ्गादीनां, नाऽन्वयिकारणम् = उपादानकारणम्, अत उपादानतया विवक्षितं सौक्ष्म्यं प्रधान एव निरतिशयं व्याख्यातं सूत्रकृता। अन्वयिकारणत्वाऽविवक्षायान्तु पुरुषोऽपि सूक्ष्मोऽस्त्येवेति भावः।

(३) अलिङ्गवत् प्रधानवदित्यर्थः। महदहङ्कारादेः पुरुषार्थनिमित्तत्वात्पुरुषोऽपि महदहङ्कारदेः कारणमेव प्रधानवद् इति = यतोऽतः कुत एवं लक्षणम् = उपादानत्वलक्षणमलिङ्गस्यैव सौक्ष्म्यमित्यर्थः ।

सू० ता एव सबीजः समाधिः ॥४६॥

भा० ताश्चतस्रः समापत्तयो बहिर्वस्तुबीजा[१] इति समाधिरपि सबीजः। तत्र स्थूलेऽर्थे सवितर्को निर्वितर्कः, सूक्ष्मेऽर्थे सविचारो निर्विचार इति चतुर्द्धोपसंख्यातः समाधिरिति॥४६॥

---

टी० न तथा पुरुषस्तद्धेतुरपीत्यर्थः[२]। उपसंहरति "अतः प्रधान एव सौक्ष्म्यं निरतिशयं व्याख्यातम्" इति ॥४५॥

चतसृणामपि समापत्तीनां ग्राह्यविषयाणां सम्प्रज्ञातत्वमाह "ता एव सबीजः समाधिः" ॥४६॥ एव-कारो भिन्नक्रमः[३] सबीज इत्यस्याऽनन्तरं द्रष्टव्यः। ततश्चतस्रः समापत्तयो ग्राह्यविषयाः सबीजतया नियम्यन्ते। सबीजता त्वनियता ग्रहीतृग्रहणगोचरायामपि समापत्तौ विकल्पाऽविकल्पभेदेनाऽनिषिद्धा व्यवतिष्ठते। तेन ग्राह्ये चतस्रः समापत्तयो ग्रहीतृग्रहणयोश्च चतस्र इत्यष्टौ ते ❀ भवन्तीति। निगदव्याख्यातं भाष्यम् ॥४६॥ ❀ समाधयः।

---

टि० (१) बहिर्वस्तुबीजाः = अस्मिताद्यनात्मवस्त्वेवाऽऽलम्बनत्वेन बीजं यासां ता बहिर्वस्तुबीजा इत्यर्थः। (२) तद्धेतुरपि = तेषां महदादीनां निमित्तकारणमपि पुरुषो, न तथा = न प्रधानवन्महदाद्याकारपरिणामीत्यर्थः।

(३) ननु सूत्रे ता एव इत्यनेन पूर्वोक्तानां ग्राह्यविषयाणां चतसृणां समापत्तीनामेव परामर्शात्तासामेव सबीजत्वेन सम्प्रज्ञातत्वं स्यात्, तथाच ग्रहीतृग्रहणसमापत्त्योः सबीजत्वाऽनुक्त्या न्यूनतापत्तिरित्यत आह "एवकारो भिन्नक्रम" इति। तथा च नाऽनेन सूत्रेण चतसृणामेव समापत्तीनां सबीजत्वमुच्यते, किन्तर्हि सबीजा एवेमे इति निर्बीजत्वं निषिद्ध्यते। तथा चेतरयोः समापत्त्योः सबीजत्वमक्षतमेवेति ॥ यत्त्वाहोपुरुषिकया मत्सरेण विज्ञानभिक्षुणोद्गारि— न एवकारो भिन्नक्रमो, ग्रहीत्रादिसमापत्तेः सबीजत्वाऽनुक्त्याऽत्र सूत्रकारस्य न्यूनतापत्तेरित्यादि। तदसत्, ग्रहणग्रहीतृसमापत्त्योरपि सबीजत्वस्य सर्वसम्मतत्वेनोपायान्तराऽभावान्न्यूनतापरिहारायैवं व्याख्यानस्याऽऽवश्यकत्वात्। किञ्च। यदि च सूत्रकृता ग्रहीतृग्रहणसमापत्त्योः सबीजत्वं नोक्तं, तत्कथं त्यक्ताऽपत्रपेण ता = ग्रहीतृग्रहणग्राह्यसमापत्तय एव सबीजः समाधिरित्येवं सूत्रार्थो वर्णितस्त्वयेत्यलं विस्तरेण। वस्तुतस्तु

सू० निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥४७॥

भा० अशुद्ध्याऽऽवरणमलाऽपेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतःस्वच्छःस्थितिप्रवाहो वैशारद्यम् । यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवत्यध्यात्मप्रसादः = भूतार्थविषयः क्रमाऽननुरोधी स्फुटप्रज्ञालोकः[१] तथाचोक्तं, "प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् । भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति" ॥४७॥

---

टी० चतसृषु समापत्तिषु ग्राह्यविषयासु निर्विचारायाः शोभनत्वमाह "निर्विचारवैशारद्येऽध्यात्मप्रसादः" ॥४७॥ वैशारद्यपदार्थमाह "अशुद्धि" इति । रजस्तमसोरुपचयोऽशुद्धिः सैवाऽऽवरणलक्षणो मलस्तस्मादपेतस्य, प्रकाशात्मनः = प्रकाशस्वभावस्य, बुद्धिसत्त्वस्य अत एवाऽनभिभूतः । स्यादेतद्, ग्राह्यविषया चेत् समापत्तिः कथमात्मविषयः प्रसाद इत्यत आह, "भूतार्थविषय" इति । नात्मविषयः किन्तु तदाधार इत्यर्थः । क्रमाऽननुरोधी = युगपदित्यर्थः । अत्रैव पारमर्षीङ्गाथामुदाहरति "तथाच" इति । ज्ञानाऽऽलोकप्रकर्षेणात्मानं सर्वेषामुपरि पश्यन् दुःखत्रयपरीतान् शोचतो जनान् जानातीत्यर्थः ॥४७॥

---

टि० ग्रहीतृग्रहणयोरपि चित्तवृत्तिदशायां ग्राह्यकोटौ निक्षेपाद्, ग्रहीतृग्रहणसमापत्त्योरपि ग्राह्यसमापत्त्यावन्तर्भाव इति ता एवेति वदतः सूत्रकारस्याशयः । तथा हि । इन्द्रियविषया हि वृत्तिर्ग्रहणसमापत्तिरस्मितविषया च ग्रहीतृसमापत्तिरित्युच्यते । अस्मितेन्द्रिययोश्च सूक्ष्मविषयत्वं स्पष्टमेव । अतएव सूक्ष्मग्राह्यविषये सविचारनिर्विचारे समापत्ती उक्त्वा सूक्ष्मविषयः किम्पर्य्यन्त इत्याकांक्षायामलिङ्गपर्य्यन्तः सूक्ष्मो विषय इत्युक्तं सूत्रकृता । यद्यपि भाष्यकृतेन्द्रियाणां सूक्ष्मत्वं नोक्तं तथापि तन्मात्रैरिन्द्रियाण्यप्युपलक्षणीयानि । सविचारनिर्विचारभेदेन संप्रज्ञातस्य द्वैविध्येऽपि तदवान्तरभेदमादाय "क्षीणवृत्ते" रिति सूत्रेण त्रैविध्यमभिहितम् । तत्राऽप्यवान्तरभेदेन "वितर्कविचार" इत्यनेन चातुर्विध्यमुक्तम् । तत्रापि च विकल्पाऽविकल्पभेदेनाष्टविधत्वमिति तत्त्वम् । एतेन षोढा सम्प्रज्ञात इति विज्ञानोक्तिर्नादरणीया ।

(१) भूतार्थविषयः = यथार्थवस्तुविषयः । क्रमाननुरोधी = युगपत्सर्वार्थग्राही, स्फुटः = प्रत्यक्षो ज्ञानालोको, न श्रुताऽनुमितरूप इत्यर्थः ।

सू० ऋतम्भरा तत्र प्रज्ञा ॥ ४८ ॥

भा० तस्मिन्[१] समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति सञ्ज्ञा भवति। अन्वर्था च सा। सत्यमेव बिभर्त्ति, न तत्र विपर्य्यासगन्धोऽप्यस्तीति । तथाचोक्तम् "आगमेनाऽनुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्" इति॥ ४८॥

भा० सा पुनः,—

सू० श्रुताऽनुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥

---

टी० अत्रैव योगिजनप्रसिद्धाऽन्वर्थसञ्ज्ञाकथनेन योगिसंमतिमाह । "ऋतम्भरा तत्र प्रज्ञा"॥ ४८॥सुगमं भाष्यम्। 'आगमेन'-इति वेदविहितं श्रवणमुक्तम्, 'अनुमानेन'-इति मननं, ध्यानं=चिन्ता, तस्याऽभ्यासः=पौनःपुन्येनाऽनुष्ठानं, तस्मिन् रस=आदरः । तदनेन निदिध्यासनमुक्तम् ॥ ४८॥

स्यादेतद्, आगमाऽनुमानगृहीतार्थविषयभावनाप्रकर्षलब्धजन्मा निर्विचाराऽऽगमाऽनुमानविषयमेव गोचरयेत् । न खल्वन्यविषयाऽनुभवजन्मा संस्कारः शक्तोऽन्यत्र ज्ञानं जनयितुम् । अतिप्रसङ्गात् । तस्मान्निर्विचारा चेद् ऋतम्भराऽऽगमाऽनुमानयोरपि तत्प्रसङ्ग इत्यत आह "श्रुताऽनुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वाद्" इति ॥ ४९ ॥ ॥ बुद्धिसत्त्वं हि प्रकाशस्वभावं सर्वार्थदर्शनसमर्थमपि तमसाऽऽवृतं यत्रैव रजसोद्घाट्यते तत्रैव गृह्णाति । यदा त्वभ्यासवैराग्याभ्यामपास्तरजस्तमोमलमनवद्यवैशारद्यम् उद्द्योतते तदाऽस्याऽतिपतितसमस्तमानमेयसीम्नः[२]

---

टि० (१) सौत्रतत्रशब्दस्य व्याख्यानं-तस्मिन्निति । तस्मिन्=निर्विचारसमाधिवैशारद्यजन्येऽध्यात्मप्रसादे सति, समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवतीत्यर्थः । तस्मिन्=सबीजयोगे समाहितचित्तस्येति विज्ञानीयविवरणं तु फल्गु । व्यवहितपरामर्शस्यायुक्तत्वात् । (२) अतिपतिता=अतिक्रान्ता, समस्ता मानमेयसीमा=मर्य्यादा येन तस्य बुद्धिसत्त्वस्येत्यर्थः । मर्य्यादाऽतिक्रमणं च भूतभविष्यद्दूरव्यवहितसूक्ष्मवस्तुग्रहणेन बोध्यम् । तदेवाह "किन्नाम यन्न गोचर" इति । अपि त्वेतादृशबुद्धिसत्त्वस्य सर्व एव गोचर इति भावः ।

भा०श्रुतम्=आगमविज्ञानम् । तत्सामान्यविषयम् । न ह्यागमेन शक्यो विशेषोऽभिधातुं, कस्माद्, न हि विशेषेणाकृतसङ्केतः शब्द इति। तथाऽनुमानं सामान्यविषयमेव। यत्र प्राप्तिस्तत्र गतिर्यत्राप्राप्तिस्तत्र न भवति गतिरित्युक्तम्। अनुमानेन च सामान्येनोपसंहारः। तस्माच्छ्रुताऽनुमानविषयो न विशेषः कश्चिदस्तीति। न चाऽस्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणं, न चास्य विशेषस्याऽप्रामाणिकस्याऽभावोऽस्तीति[1]समाधिप्रज्ञानिर्ग्राह्य एवं स विशेषो भवति, भूतसूक्ष्मगतो वा पुरुषगतो वा ।

टी० प्रकाशाऽऽनन्त्ये सति किन्नाम यन्न गोचर इति भावः। व्याचष्टे "श्रुतमागमविज्ञानं तत्सामान्यविषयम्" इति । कस्माद् "न ह्यागमेन शक्यो विषयोऽभिधातुं" कुतः। यस्मादानन्त्याद्व्यभिचाराच्च न विशेषेण कृतसङ्केतः शब्दः।यस्मादस्य विशेषेण सह न वाच्यवाचकसम्बन्धः प्रतीयते, न च वाक्यार्थोऽपीदृशो विशेषः सम्भवति। अनुमानेऽपि लिङ्गलिङ्गिसम्बन्धग्रहणाऽधीनजन्मनि गतिरेषैवेत्याह "तथाऽनुमानम्" इति । यत्राऽप्राप्तिरित्यत्र, यत्रतत्रशब्दयोः स्थानपरिवर्त्तनेन व्याप्यव्यापकभावो गमयितव्यः[2], अतोऽत्राऽनुमानेन सामान्येनोपसंहारः । उपसंहरति "तस्माद्" इति । अस्तु तर्हि सम्बन्धग्रहाऽनपेक्षं लोकप्रत्यक्षं, न तत् सामान्यविषयमित्यत आह ।"नचाऽस्य" इति । मा भूत् सम्बन्धग्रहाऽधीनं लोकप्रत्यक्षमिन्द्रियाऽधीनं तु स्याद् । नचेन्द्रियाणामस्मिन्नस्ति योग्यतेत्यर्थः । ननु यद्यागमाऽनुमानप्रत्यक्षाऽगोचरो विशेषस्तर्हि नास्ति प्रमाणविरहादित्यत आह "नच" इति । न हि प्रमाणं व्यापकं कारणं वा प्रमेयस्य,येन तन्निवृत्तौ

टि० (१) इति–शब्दो हेत्वर्थे।यतोऽप्रामाणिकस्य=लौकिकप्रत्यक्षाद्यगोचरस्याऽपि पुरुषादिगतविशेषस्याऽभावो न शक्यते वक्तुमतः समाधिप्रज्ञानिर्ग्राह्य एव स विशेष इति भावः ।

(२) "नियम्यत्वनियन्तृत्वे भावयोर्यादृशे मते । विपरीते प्रतीयेते ते एव तदभावयोः" इति भट्टपादवचनेनाऽभावयोर्वैपरीत्येन व्याप्यव्यापकभावाऽभ्युपगमाद्, यत्र गत्यभावस्तत्र प्राप्त्यभाव इति वैपरीत्येन व्याप्यव्यापकभावो गमयितव्य इत्यर्थः ।

भा० तस्माच्छ्रुताऽनुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वाद् इति ॥ ४९ ॥ समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवो जायते[१] ।

सू० तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥

समाधिप्रज्ञाप्रभवः संस्कारो व्युत्थानसंस्काराऽऽशयं बाधते,

टी० निवर्त्तेत । नो खलु[२] कलावतश्चन्द्रस्य परभागवर्त्तिहरिणसद्भावं प्रति नसन्दिहते प्रामाणिका इत्यर्थः । इति = तस्मात्समाधिप्रज्ञानिर्ग्राह्य एवेति । अत्र च विवादाऽध्यासिताः परमाणव आत्मानश्च प्रातिस्विकविशेषशालिनः द्रव्यत्वे सति परस्परं व्यावर्त्तमानत्वाद्, ये द्रव्यत्वे सति परस्परं व्यावर्त्तन्ते ते प्रातिस्विकविशेषशालिनो यथा खण्डमुण्डादय इत्यनुमानेन, आगमेन च ऋतम्भरप्रज्ञोपदेशपरेण । यद्यपि विशेषो निरूप्यते, तदनिरूपणे संशयः स्याद् । न्यायप्राप्तत्वात्, तथाऽप्यदूरविप्रकर्षेण तत्सत्त्वं कथञ्चिद्गोचरयतः श्रुताऽनुमाने, नतु साक्षाच्चार्थमिव समुच्चयादिपदानि लिङ्गसंख्यायोगितया । तस्मात् सिद्धं श्रुताऽनुमानप्रज्ञाभ्यामन्यविषयेति । स्यादेतद्, भवतु परमार्थविषयः सम्प्रज्ञातो यथोक्तोपायाऽभ्यासाद्, अनादिना तु व्युत्थानसँस्कारेण निरूढनिबिडतया प्रतिबन्धनीया समाधिप्रज्ञा सा, * वात्याऽऽवर्त्तमध्यवर्त्तिप्रदीपपरमाणुरिव-इति शङ्कामपनेतुं सूत्रमवतारयति "समाधिप्रज्ञा" इति । सूत्रं पठति "तज्जः सँस्कारोऽन्यसँस्कारप्रतिबन्धी" ॥५०॥ 'तद्'इति निर्विचारां समापत्तिं परामृशति 'अन्य' इति व्युत्थानमाह । भूतार्थपक्षपातो हि धियां स्वभावः । तावदेवेयमनवस्थिता भ्राम्यति न यावत् तत्त्वं प्रतिलभते तत्प्रतिलम्भे तत्रास्थितपदा सती सँस्कारबुद्धिः सँस्कारचक्रक्रमेणाऽऽवर्त्त-

टि० (१) निर्विचारसमाध्युत्कर्षजन्यऋतम्भरप्रज्ञालाभे सति यस्तत्समाधिजन्यः सँस्कारो नवो नवो जायते स सँस्कारोऽन्यसँस्काराणां=व्युत्थानसँस्काराणां प्रतिबन्धी भवतीत्येवं सूत्रेणैकवाक्यतयाऽन्वयो बोध्यः ।

(२) प्रमाणनिवृत्तौ प्रमेयानिवृत्तिरित्यत्र दृष्टान्तमाह । "नो खलु" इति । कलावतः= द्वितीयाचन्द्रस्येत्यर्थः । हरिणसद्भावं = चन्द्रवाहनमृगसद्भावमित्यर्थः । * वातसमूहः ।

भा० व्युत्थानसंस्काराऽभिभवात् तत्प्रभवा प्रत्यया न भवन्ति, प्रत्ययनिरोधे समाधिरुपतिष्ठते, ततः समाधिप्रज्ञा, ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्काराऽऽशयो जायते, ततः प्रज्ञा ततश्च संस्कारा इति। कथमसौ संस्काराऽऽतिशयश्चित्तं साऽधिकारं न करिष्यति इति, न ते प्रज्ञाकृताः संस्काराः क्लेशक्षयहेतुत्वाच्चित्तमधिकारविशिष्टं कुर्वन्ति। चित्तं हि ते स्वकार्य्याद् अवसादयन्ति। ख्यातिपर्य्यवसानं हि चित्तचेष्टितमिति ॥५०॥

टी० मानमनादिमप्येतत्तत्त्वसँस्कारबुद्धिक्रमं बाधत एवेति। तथा च बाह्या[1] अप्याहुः "निरुपद्रवभूतार्थस्वभावस्य विपर्य्ययैः। न बाधोऽनादिमत्त्वेऽपि बुद्धेस्तत्पक्षपाततः[2]" इति। स्यादेतत्, समाधिप्रज्ञातोऽस्तु व्युत्थानजस्य संस्कारस्य निरोधः, समाधिजस्तु संस्काराऽतिशयः समाधिप्रज्ञाप्रसवहेतुरस्त्यविकल इति तदवस्थैव चित्तस्य साऽधिकारतेति। चोदयति "कथमसौ" इति। परिहरति "न ते" इति। चित्तस्य हि कार्य्यद्वयं शब्दाद्युपभोगो विवेकख्यातिश्चेति। तत्र क्लेशकर्माशयसहितं शब्दाद्युपभोगे प्रवर्त्तते, प्रज्ञाप्रभवसँस्कारोन्मूलितनिखिलक्लेशकर्माशयस्य तु चेतसोऽवसितप्रायाऽधिकारभावस्य विवेकख्यातिमात्रमवशिष्यते कार्य्यम्। तस्मात्समाधिसँस्काराश्चित्तस्य न भोगाधिकारहेतवः, प्रत्युत तत्परिपन्थिन इति। स्वकार्य्याद् = भोगलक्षणाद्, अवसादयन्ति = असमर्थं कुर्वन्ति इत्यर्थः। कस्मात्, ख्यातिपर्य्यवसानं हि चित्तचेष्टितम्। तावद्धि भोगाय चित्तं चेष्टते न यावद्विवेकख्यातिमनुभवति। सँजातविवेकख्यातिनस्तु क्लेशनिवृत्तौ न भोगाऽधिकार इत्यर्थः। तदत्र भोगाऽधिकारप्रशान्तिः प्रयोजनं प्रज्ञासँस्काराणामित्युक्तम् ॥५०॥

टि० (१) बाह्याः=वेदबाह्यास्तथागतमताऽनुगता इत्यर्थः।

(२) नीलपीतादिविपर्य्ययज्ञानानामनादिमत्त्वेऽपि न तैर्विपर्य्ययज्ञानैर्निरुपद्रवभूतार्थस्वभावस्य=चतुर्विधभावनाजन्यस्य नीलपीताद्युपप्लवशून्यविशुद्धविज्ञानसन्तानोदयस्य बाध इत्यर्थः। तत्र हेतुमाह—"बुद्धेस्तत्पक्षपाततः"=तत्त्वपक्षपातस्य ज्ञानस्वभावत्वादित्यर्थः। यत्त्वत्र योगवार्त्तिककारेणोक्तम् "अखिलसँस्कारबाधस्य योगफलवचनात्प्रारब्धकर्मणोऽप्यतिक्रमेणाशुतरमोक्षः केवलज्ञानाऽसाध्यो योगस्य फलम्। न हि भोगसँस्कारस्य निःशेषतो दाहे प्रारब्धकर्माऽपि फलायाऽलम्" इति। तदेतद्यद्यपि न मन्दं तथाप्यभिनिवेशलक्षणसूत्रे सम्प्रज्ञातयोगिनोऽपि सँस्कारवशेनाऽभिनिवेशोऽस्तीत्येतद्विरुद्धं वदता कथं मन्दाक्षं त्यक्तमिति प्रष्टव्योऽसौ।

भा० किञ्चाऽस्य भवति।

सू० तस्यापि निरोधेसर्वनिरोधान्निर्बीजः समाधिः॥५१॥

स न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी भवति। कस्माद्, निरोधजः संस्कारः समाधिजान् संस्कारान् बाधत इति। निरोधस्थितिकालक्रमाऽनुभवेन निरोधचित्तकृतसंस्काराऽस्तित्वमनुमेयम्।

टी० पृच्छति। "किञ्च" इति किञ्चाऽस्य भवति=प्रज्ञासँस्कारवच्चित्तं प्रज्ञाप्रवाहजनकतया तथैव साधिकारमित्यधिकारापनुत्तयेऽन्यदपि किञ्चिदपेक्षणीयमस्तीत्यर्थः[१]। सूत्रेणोत्तरमाह "तस्याऽपि निरोधे सर्वनिरोधान्निर्बीजः समाधिः" ॥ ५१ ॥

परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन सँस्कारोपजनद्वारा तस्याऽपि प्रज्ञाकृतस्य सँस्कारस्य निरोधो, न केवलं प्रज्ञाया इत्यपिशब्दार्थः। सर्वस्योत्पद्यमानस्य सँस्कारप्रवाहस्य निरोधात् कारणाभावेन कार्य्यानुत्पादनात्, सोऽयं निर्बीजः समाधिः। व्याचष्टे "स" इति। सः=निर्बीजः समाधिः। समाधिप्रज्ञाविरोधिनः परस्माद्वैराग्याजायमानः[२] स्वकारणद्वारेण[३] न केवलं समाधिप्रज्ञाविरोधी प्रज्ञाकृतानामप्यसौ सँस्काराणां परिपन्थी भवति। ननु वैराग्यजं विज्ञानं सद्विज्ञानं प्रज्ञामात्रं बाधतां, संस्कारं त्वविज्ञानरूपं कथं बाधते। दृष्टा हि जाग्रतोऽपि स्वप्नदृष्टार्थे स्मृतिरित्याशयवान् पृच्छति "कस्माद्" इति। उत्तरमाह। "निरोधज" इति। निरुद्ध्यते प्रज्ञाऽनेनेति निरोधः=परं वैराग्यं, ततो जातो निरोधजः सँस्कारः। सँस्कारादेव दीर्घकालनैरन्तर्य्यसत्काराऽऽसेवितपरवैराग्यजन्मनः प्रज्ञासँस्कारबाधो, न तु विज्ञानादित्यर्थः। स्यादेतद्, निरोधजसँस्कारसद्भावे किं प्रमाणं? स हि प्रत्यक्षेण वाऽनुभूयेत, स्मृत्या वा कार्य्येणाऽनुमीयेत। न च सर्ववृत्तिनिरोधे प्रत्यक्षमस्ति योगिनो, नाऽपि स्मृतिः, तस्य वृत्तिमात्रनिरोधतया स्मृतिजनकत्वाऽसम्भवादित्यत आह, "निरोध" इति। निरोधस्थितिः=चित्तस्य

टि० (१) समाधिप्रज्ञायास्तत्संस्काराणां च निरोधायाऽन्यदपि किंचिदपेक्षणीयमस्ति, न वेत्यर्थः। (२) उपजायमान इति पाठान्तरम्।
(३) स्वकारणद्वारेण=विरामप्रत्ययाऽभ्यासकारणकज्ञानप्रसादलक्षणपरवैराग्यद्वारेणेत्यर्थः।

भा० व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्याम्प्रकृताववस्थितायां प्रविलीयते, तस्माच्चे संस्काराश्चित्तस्याऽधिकारविरोधिनो न स्थितिहेतवो, यस्मादवसिताऽधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्त्तते तस्मिन्निवृत्ते पुरुषः स्वरूपप्रतिष्ठोऽतः शुद्धमुक्त इत्युच्यते ॥ ५१ ॥

इति पातञ्जले सांख्यप्रवचने[१] योगशास्त्रे समाधिपादः प्रथमः ॥

टी० निरुद्धाऽवस्था, तस्याः कालक्रमो = मुहूर्त्ताऽर्द्धयामयामाऽहोरात्रादिः, तदनुभवेन। एतदुक्तं भवति। वैराग्याभ्यासप्रकर्षानुरोधी निरोधप्रकर्षो मुहूर्त्ताऽर्द्धयामादिव्यापितयाऽनुभूयते योगिना। न च परवैराग्यक्षणाः क्रमानियततया परस्परमसम्भवन्तस्तत्तत्कालव्यापितया साऽतिशयं निरोधं कर्तुमीशत इति तत्तद्वैराग्यक्षणप्रचयजन्यः स्थायी संस्कारप्रचय एषितव्य इति भावः। ननूच्छिद्यन्तां प्रज्ञासंस्कारा, निरोधसंस्कारस्तु कुतः समुच्छिद्यते, अनुच्छेदे वा साऽधिकारत्वमेवेत्यत आह "व्युत्थान" इति। व्युत्थानं च तस्य निरोधसमाधिश्च = सम्प्रज्ञातः, तत्प्रभवा संस्काराः कैवल्यभागीयाः = निरोधजाः संस्कारा इत्यर्थः। व्युत्थानप्रज्ञासंस्काराश्चित्ते प्रलीना इति भवति चित्तं व्युत्थानप्रज्ञासंस्कारवत्। निरोधसंस्कारस्तु प्रत्युदित एवाऽऽस्ते चित्ते। निरोधसंस्कारे सत्यपि चित्तमनधिकारवत्। पुरुषार्थजनकं हि चित्तं साऽधिकारं, शब्दाद्युपभोगविवेकख्याती च तथा पुरुषार्थौ। संस्कारशेषतायान्तु न बुद्धेः प्रतिसंवेदी पुरुष इति नाऽसौ पुरुषार्थः। विदेहप्रकृतिलयानां न निरोधभागितया साधिकारं चित्तम्, अपि तु क्लेशवासिततयेत्याशयवानाह यस्मादिति। शेषं सुगमम्। "योगस्यो[२]द्देशनिर्देशौ तदर्थं वृत्तिलक्षणम्। योगोपायाः प्रभेदाश्च पादेऽस्मिन्नुपवर्णिताः" ॥ इतिश्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां (तत्त्ववैशारद्यां) प्रथमः समाधिपादः समाप्तः ॥ १ ॥

टि० (१) सांख्यप्रवचने = साङ्ख्यशास्त्रस्यैव प्रकर्षेण वचनं साङ्ख्यप्रवचनं साङ्ख्ये ह्यभ्युगमवादेनेश्वरं प्रतिषिद्ध्यासम्प्रज्ञातयोगनिरपेक्षात् तत्त्वज्ञानान्मोक्ष उक्तोऽत्र तु निरुपद्रवाऽसन्दिग्धैच्छिकमुक्तिनियमाय परमेश्वरविद्याऽऽशुमोक्षहेतुरसम्प्रज्ञातयोगश्च प्रदर्शित इत्यर्थ इति विज्ञानभिक्षुः । (२) पादार्थसङ्ग्राहकं श्लोकमाह । "योगस्य" इति । उद्देशनिर्देशौ = योगारम्भप्रतिज्ञायोगलक्षणे । योगोपायाः = अभ्यासवैराग्यादयः, तत्प्रभेदाः = वितर्कविचारादय इत्यर्थः। इति श्रीमदुदासीनपूज्यपादसत्प्रकाशशिष्यबालरामकृतं टिप्पणम् ॥

# पातञ्जलदर्शने साधनपादः ॥२॥

भा० उद्दिष्टः समाहितचित्तस्य योगः, कथं[१] व्युत्थितचित्तोऽपि योगयुक्तः स्याद् इत्येतदाऽऽरभ्यते ।

## सू० तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥१॥

टी० ननु प्रथमपादेनैव सोपायः साऽवान्तरप्रभेदः सफलो योग उक्तस्तत्किमपरमत्रशिष्यते यदर्थं द्वितीयपादः प्रारभ्येतेत्यत आह "उद्दिष्ट" इति। अभ्यासवैराग्ये हि योगोपायौ प्रथमे पाद उक्तौ, न च तौ व्युत्थितस्य द्रागित्येव[२] संभवत इति[३] द्वितीयपादोपदेश्यानुपायानपेक्षते सत्त्वशुद्ध्यर्थम्।ततो हि विशुद्धसत्त्वः कृतरक्षासंविधानो[४]ऽभ्यासवैराग्ये प्रत्यहं भावयति । समाहितत्वम् = अविक्षिप्तत्वं, कथं व्युत्थितचित्तोऽप्युपदेक्ष्यमाणैरुपायैर्युक्तः सन् योगी स्यादित्यर्थः । तत्र वक्ष्यमाणेषु नियमेष्वाकृष्य प्राथमिकं प्रत्युपयुक्ततरतया प्रथमतः क्रियायोगमुपदिशति[५] सूत्रकारः "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोग:" ॥ १ ॥

---

टि० (१) उत्तरपादेन सङ्गतिमभिधातुं पूर्ववृत्तमनुवदति "उद्दिष्ट" इति। पूर्वपादे समाहितचित्तस्य = योगारूढस्योत्तमाधिकारिणो । योग उद्दिष्टः = कथितः, साम्प्रतं व्युत्थितचित्तो = योगमारुरुक्षुरपि, कथं नु नाम योगयुक्तः स्यादित्यनुकम्पयताऽऽचार्य्येण तदर्थमेतत्सूत्रजातमारभ्यत इत्यर्थः । एकाग्रचित्तस्य सम्प्रज्ञातयोग उक्तो, निरुद्धचित्तस्य चाऽसम्प्रज्ञातयोगोऽभिहितो, विक्षिप्तचित्तस्य तु न काऽपि गतिरुक्ताऽतो विक्षिप्तचित्तोऽपि यैः साधनजातैर्विक्षेपमपनीयाऽभ्यासवैराग्ये भावयन् सम्प्रज्ञातसमाधिस्थः स्यात्तत्साधनजातं प्रतिपादयितुं द्वितीयः पाद आरभ्यत इति भावः । (२) द्रागित्येव = झटित्येवेत्यर्थः ।

[३] इति = अतः सत्त्वशुद्ध्यर्थं द्वितीयपादोपदेश्यान् तपःस्वाध्यायादीनपेक्षत इत्यर्थः ।

[४] कृतरक्षासंविधानः = अभ्यस्ताऽभ्यासवैराग्याऽनुष्ठानौपायिकक्रियायोग इत्यर्थः ।

[५] वक्ष्यमाणबह्वायाससाध्ययमाद्यष्टाऽङ्गानां मध्याद् अल्पायाससाध्यानि तपआदीनि त्रीणि पृथक्कृत्य प्रथमतः क्रियायोगमुपदिशति सूत्रकार इत्यर्थः । क्रियायोगस्य प्रथमोपदेशे हेतुमाह "प्राथमिकम्" इति । प्राथमिकं प्रति = योगमारुरुक्षुं मन्दाऽधिकारिणं प्रति, उपयुक्ततरतया = अल्पायाससाध्यत्वेन स्वान्तशोधकत्वेन चाऽत्युपादेयतया इत्यर्थः ।

भा० नाऽतपस्विनो योगः सिद्ध्यति, अनादिकर्मक्लेशवासनाचित्रा प्रत्युपस्थितविषयजाला चाशुद्धिर्नान्तरेण तपः सम्भेदमापद्यत इति तपस उपादानम्। तच्च[१] चित्तप्रसादनमबाधमानमनेनाऽऽसेव्यमिति मन्यते। स्वाध्यायः = प्रणवादिपवित्राणां जपः, मोक्षशास्त्राध्ययनं वा । ईश्वरप्रणिधानं = सर्वक्रियाणां परमगुरावर्पणं, तत्फलसंन्यासो वा ॥ १ ॥

---

टी० क्रियैव योगः क्रियायोगः योगसाधनत्वात्, अत एव विष्णुपुराणे खाण्डिक्यकेशिध्वजसंवादे "योगयुक् प्रथमं योगी युञ्जमानोऽभिधीयते" इत्युपक्रम्य तपःस्वाध्यायादयो दर्शिताः। व्यतिरेकमुखेन तपस उपायत्वमाह "नातपस्विन" इति । तपसोऽवान्तरव्यापारमुपायतोपयोगिनं दर्शयति "अनादि" इति। अनादिभ्यां कर्मक्लेशवासनाभ्यां चित्रा* अत एव प्रत्युपस्थितम् = उपनतं विषयजालं यस्यां सा तथोक्ता, अशुद्धिः= रजस्तमःसमुद्रेको, नाऽन्तरेण तपः सम्भेदमापद्यते = सान्द्रस्य नितान्तविरलता सम्भेदः । ननूपादीयमानमपि तपो धातुवैषम्यहेतुतया योगप्रतिपक्ष इति कथन्तदुपाय इत्यत आह "तच्च" इति । तावन्मात्रमेव तपश्चरणीयं, न यावता धातुवैषम्यमापद्येतेत्यर्थः। प्रणवादयः = पुरुषसूक्तरुद्रमण्डलब्राह्मणादयो वैदिकाः, पौराणिकाश्च ब्रह्मपारायणादयः। परमगुरुः = भगवानीश्वरः तस्मिन्। यत्रेदमुक्तं "कामतोऽकामतो वाऽपि यत्करोमि शुभाऽशुभम्। तत्सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम्" इति। तत्फलसंन्यासो वा = फलाऽनभिसन्धानेन कार्यकरणं, यत्रेदमुक्तं "कर्मण्येवाऽधिकारस्ते मा फलेषु कदाचन । मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्मणि" इति ॥१॥

---

[१] तपःशब्देन चात्र कामानशनत्वं हितमितमेध्याशित्वं च गृह्यते, न तु "उपवासपराकादिकृच्छ्रचान्द्रायणादिभिः। शरीरशोषणं प्राहुस्तापसास्तप उत्तमम्" इत्यादिस्मृत्युक्तम्, उपवासाद्यभ्यासे मरणाऽऽपातात्। चान्द्रायणाद्याभ्यासे धातुवैषम्यापत्तेश्च। अत एव श्रुतौ "तपसाऽनाशकेन" इत्याम्नातम् । तदेतदाह "तच्च" इति। अनेन योगिना चित्तप्रसादाऽविरोध्येव तपोऽनुष्ठेयमिति परमर्षिभिर्मन्यत इत्यर्थः। * नानाविधा ।

भा० स हि क्रियायोगः[१] ।

सू० समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥

स हि आसेव्यमानः समाधिम्भावयति, क्लेशांश्च प्रतनूकरोति, प्रतनूकृतान् क्लेशान् प्रसङ्ख्यानाऽग्निना दग्धबीजकल्पानप्रसवधर्मिणः करिष्यतीति, तेषां तनूकरणात्पुनः क्लेशैरपरामृष्टा सत्त्वपुरुषाऽन्यताख्यातिः सूक्ष्मा प्रज्ञा समाप्ताऽधिकारा प्रतिप्रसवाय कल्पिष्यत इति ॥ २ ॥

टी० तस्य प्रयोजनाऽभिधानाय सूत्रमवतारयति "स हि" इति । "समाधि-, भावनार्थः क्लेशतनूकरणार्थश्च" ॥२॥ ननु क्रियायोग एव चेत् क्लेशान् प्रतनूकरोति कृतं तर्हि प्रसङ्ख्यानेनेत्यत आह "प्रतनूकृतान्" इति-क्रियायोगस्य प्रतनूकरणमात्रे व्यापारो, न तु वन्ध्यत्वे[२] क्लेशानाम् । प्रसङ्ख्यानस्य तु तद्वन्ध्यत्वे, दग्धबीजकल्पान्—इति वन्ध्यत्वेन दग्धकलमःबीजसारूप्यमुक्तम्। स्यादेतत्, प्रसङ्ख्यानमेव चेत् क्लेशान्अप्रसवधर्मिण-करिष्यति कृतमेषां प्रतनूकरणेनेत्यत आह "तेषाम्" इति । क्लेशानाम्तेअतानवे हि बलवद्विरोधिग्रस्ता सत्त्वपुरुषाऽन्यताख्यातिरुदेतुमेव नोत्सहप्रागेव[३] तद्वन्ध्यभावं कर्त्तुम् । प्रविरलीकृतेषु तु क्लेशेषु दुर्बलेषु तद्विरोधिन्यपि वैराग्याऽभ्यासाभ्यामुपजायते। उपजाता चैतैरपरामृष्टा=अनभिभूता नैव यावत्परामृश्यते, सत्त्वपुरुषाऽन्यतामात्रख्यातिः । सूक्ष्मा प्रज्ञा=अतीन्द्रियतया सूक्ष्मोऽस्या विषय इति सूक्ष्मा प्रज्ञा, प्रतिप्रसवाय=प्रविलयाय कल्पिष्यते । कुतः ? यतः समाप्ताऽधिकारा = समाप्तोऽधिकारः कार्य्याऽऽरम्भणं गुणानां यया हेतुभूतया सा तथोक्तेति॥ २॥

टि० (१) स हीति भाष्यं सूत्रेणैकवाक्यतया व्याख्येयम् । विज्ञानभिक्षुस्तु "ईश्वरप्रणिधानमत्र पूर्वपादोक्तं भावनारूपमेव कथन्न भवतीत्याशङ्क्य, स हि क्रियायोग इत्यत्रतात्पर्य्यं, स हि फलसंन्यासः कर्मार्पणं च क्रियायोगो भवति कर्मशेषत्वात्, पूर्वोक्तं च भावनारूपं प्रणिधानं ज्ञानमेव कर्मतच्छेषत्वयोरभावाद् इत्येवं पूर्वान्वयितया व्याचष्टे । परन्त्वेवं सति-अयं हि क्रियायोग इति, अयमेवेति वा वक्तुमुचितम् ।

(२) क्लेशानां वन्ध्यत्वे=अप्रसवधर्मित्वसंपादने न क्रियायोगस्य व्यापार इत्यर्थः ।

(३) प्रागेव=दूरत एवेत्यर्थः । क्लेशानामतनुत्वे विपक्षान्तर्गता विवेकख्यातिरुदेतुमेव नोत्सहते तदप्रसवधर्मित्वकरणं तु दूरापास्तमिति भावः । प्रागेवेति निपातसमुदायोऽतिशयार्थ इति वर्द्धमानोपाध्यायः । तन्मतेऽपीदमेव फलति इति बोध्यम् ।

भा० अथ के ते क्लेशाः, कियन्तो वेति ।

सू०५ अविद्याऽस्मितारागद्वेषाऽभिनिवेशाः पञ्च[१] क्लेशाः ॥ ३ ॥

भा० क्लेशा इति[२] पञ्च विपर्य्यया इत्यर्थः। ते स्यन्दमाना गुणाऽधिकारं द्रढयन्ति, परिणाममवस्थापयन्ति, कार्य्यकारणस्रोत उन्नमयन्ति, परस्परानुग्रहतन्त्रीभूत्वा कर्मविपाकं चाऽभिनिर्हरन्ति इति ॥ ३ ॥

---

टी० पृच्छति "अथ" इति। "अविद्या" इति सूत्रेण परिहरति "अविद्याऽस्मितारागद्वेषाभिनिवेशाः क्लेशाः"॥ ३॥ "क्लेशा" इति व्याचष्टे "पञ्च विपर्य्यय्या" इति । अविद्या तावद्विपर्य्यय एव । अस्मितादयोऽप्यविद्योपादानास्तदविनाभाववर्त्तिन इति विपर्य्यया: । ततश्चाविद्यासमुच्छेदे तेषामपि समुच्छेदो युक्त इति भावः । तेषामुच्छेत्तव्यताहेतुं संसारकारणत्वमाह "ते" इति । स्यन्दमानाः=समुदाचरन्तो[३] गुणानामधिकारं[४] द्रढयन्ति=बलवन्तं कुर्वन्ति। अत एव परिणाममवस्थापयन्ति,[५] अव्यक्तमहदहङ्कारपरम्परया हि कार्य्यकारणस्रोत उन्नमयन्ति=उद्भावयन्ति। यदर्थं सर्वमेतत्कुर्वन्ति तद् दर्शयति "परस्पर" इति। कर्मणां विपाकः=जात्यायुर्भोगलक्षणः पुरुषार्थः, तममी क्लेशा अभिनिर्हरन्ति=निष्पादयन्ति । किम्प्रत्येकं निष्पादयन्ति, नेत्याह "परस्परानुग्रह" इति । कर्मभिः क्लेशाः क्लेशैश्च कर्माणीति[६] ॥ ३ ॥

---

टि० (१) अत्र पञ्चेत्यर्थाल्लब्धं विपर्य्यया इति च भाष्यकृता पूरितमिति वदता विज्ञानभिक्षुणा, पञ्चेति न सूत्रान्तर्गतमिति ध्वनितम् । अत एव कुत्र चिद् उपलभ्यते कुत्र चिन्नेति, वाचस्पतिमिश्रास्तूदासीना एवात्रेति ज्ञेयम् ।

(२) इति=शब्दोऽविद्यादिपरामर्शी, तथा चाऽविद्यादयः पञ्च विपर्य्यया क्लेशा इति योजना । कियन्त इति प्रश्नस्योत्तरं पञ्चेत्यनेनोक्तम् । के ते इति प्रश्नस्योत्तरं विपर्य्यया इत्यनेनोक्तमिति विज्ञानाभिक्षुः ।

(३) समुदाचरन्तः=लब्धप्रातिस्विकवृत्तयः सन्त इत्यर्थः ।

(४) गुणानामधिकारम्=सत्त्वादिगुणानां कार्य्यारम्भणसामर्थ्यम् इत्यर्थः ।

(५) परिणाममवस्थापयन्ति = गुणानां वैषम्यरूपं परिणामं सर्जननिदानं निर्वर्त्तयन्तीत्यर्थः ।

(६) इति = इत्येवं परस्पराऽनुग्रहतन्त्रीभूत्वा निष्पादयन्तीत्यर्थः । तन्त्वा इति पाठान्तरम् । अविद्यातो रागो रागाच्चाऽविद्येत्येवमादिरूपाऽन्योऽन्याऽनुग्रहाऽधीना भूत्वा जात्यायुर्भोगं निष्पादयन्तीत्यर्थ इत्येके ।

सू० अविद्या क्षेत्रमुत्तरेषां प्रसुतप्तनुविच्छिन्नोदाराणाम् ॥ ४ ॥

भा० अत्राऽविद्या क्षेत्रम्=प्रसवभूमिः, उत्तरेषाम्=अस्मितादीनां चतुर्विधकल्पितानां प्रसुप्ततनुविच्छिन्नोदाराणाम्। तत्र का प्रसुप्तिः चेतसि शक्तिमात्रप्रतिष्ठानां बीजभावोपगमः,[१] तस्य प्रबोध आलम्बने संमुखीभावः प्रसङ्ख्यानवतो दग्धक्लेशबीजस्य संमुखीभूतेऽप्यालम्बने नासौ पुनरस्ति, दग्धबीजस्य कुतः प्ररोह इति।

---

टी० हेयानां क्लेशानामविद्यामूलत्वं दर्शयति "अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" ॥४॥ "तत्र का प्रसुप्तिरिति। स्वोचितामर्थक्रियामकुर्वतां क्लेशानां सद्भावे न प्रमाणमस्तीत्यभिप्रायः पृच्छतः। उत्तरमाह "चेतसि" इति। मा नामाऽर्थक्रियां कार्षुः क्लेशाः, विदेहप्रकृतिलयानां[२] बीजभावं प्राप्तास्तु ते शक्तिमात्रेण सन्ति क्षीर इव दधि। न हि विवेकख्यातेरन्यदस्ति कारणं तद्वन्ध्यतायाम्। अतो विदेहप्रकृतिलया विवेकख्यातिविरहिणः प्रसुप्तक्लेशा न यावदवधिकालं प्राप्नुवन्ति, तत्प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास्तेषु तेषु विषयेषु संमुखीभवन्ति शक्तिमात्रेण प्रतिष्ठा येषां ते तथोक्ताः, तदनेनोत्पत्तिशक्तिरुक्ता, बीजभावोपगम=इति च कार्य्यशक्तिरिति। ननु

---

टि० (१) विदेहानां प्रकृतिलीनानां च चेतसि शक्तिमात्रेण=अनागताऽवस्थयाऽवस्थितानां क्लेशानां यो बीजभावोपगमः=स्वकार्य्यजननसामर्थ्यं, सा प्रसुप्तिरित्यर्थः। दग्धक्लेशेभ्यः सुप्तानां क्लेशानां वैलक्षण्यं बीजभावोपगम इत्यादिनोक्तं स्पष्टयति "तस्य प्रबोध" इति। आलम्बने=स्वस्वविषये, यः संमुखीभावः=सन्निकृष्टता, स एव तस्य=सुप्तक्लेशस्य प्रबोध इत्यर्थः। यथा प्राप्ताऽवधीनां प्रकृतिलीनानां क्लेशाः प्रबुध्यन्ते न तथा सन्निकृष्टेऽपि विषये ज्ञानिनां दग्धक्लेशानां ते प्रबुध्यन्त इत्याह। "प्रसङ्ख्यान" इति। आलम्बनीभूतेऽपि विषये न प्रसंख्यानवतोऽसौ=क्लेशप्रबोधो भवतीत्यर्थः। तत्र हेतुमाह "दग्धबीजस्य कुतः प्ररोह इति" इति।

(२) विदेहप्रकृतिलयानामित्यत्र चेतसीति शेषो बोध्यः।

भा०अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते, तत्रैव सा दग्धबीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति,[१] सतां क्लेशानां तदा बीजसामर्थ्यं दग्धमिति विषयस्य सम्मुखीभावेऽपि सति न भवत्येषां प्रबोध इत्युक्ता प्रसुप्तिर्दग्धबीजानामप्ररोहश्च तनुत्वमुच्यते, प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति। तथा विच्छिद्य विच्छिद्य तेन तेनाऽऽत्मना पुनः समुदाचरन्ति[२] इति विच्छिन्नाः। कथं, रागकाले क्रोधस्यादर्शनात्। न हि रागकाले क्रोधः समुदाचरति रागश्चक्वचिद् दृश्यमानो न विषयान्तरे नास्ति

---

टी०विवेकख्यातिमतोऽपि क्लेशाः कस्मान्न प्रसुप्ता इत्यत आह "प्रसंख्यानवत" इति। चरमदेहः = न तस्य देहान्तरमुत्पत्स्यते यदपेक्षयाऽस्य देहः पूर्व इत्यर्थः। नाऽन्यत्र = विदेहादिष्वित्यर्थः। ननु सतो नाऽत्यन्तविनाश इति किमिति तदीययोगर्द्धिबलेन विषयसंमुखीभावे न क्लेशाः प्रबुद्ध्यन्त इत्यत आह "सताम्" इति। सन्तु क्लेशाः, दग्धस्त्वेषां प्रसङ्ख्यानाग्निना बीजभाव इत्यर्थः। क्लेशप्रतिपक्षः क्रियायोगस्तस्य भावनम् = अनुष्ठानं तेनोपहतास्तनवः। अथवा सम्यग् ज्ञानम् अविद्यायाः प्रतिपक्षः, भेददर्शनम् अस्मितायाः, माध्यस्थ्यं[३] रागद्वेषयोः, अनुबन्धबुद्धिनिवृत्ति[४]रभिनिवेशस्येति। विच्छितिमाह, "तथा" इति। क्लेशानामन्यतमेन समुदाचरताऽभिभवाद्वाऽत्यन्तं विषयसेवया वा विच्छिद्य विच्छिद्य

---

टि० (१) "यस्येदं जन्म पाश्चात्यं तमेवाशु महामते। विशन्ति विद्या विमला मुक्ता वेणुमिवोत्तमम्" इति स्मृतिसिद्धे चरमदेह एव दग्धबीजभावाऽवस्था, नाऽन्यत्र = प्रकृतिलीनादिष्वित्यर्थः।

(२) तेन तेनाऽत्मना = पूर्ववदतनुभावेनैव, समुदाचरन्ति = लब्धवृत्तयो भवन्तीत्यर्थः।

[३] माध्यस्थ्यम् = अहेयाऽनुपादेयज्ञानवैधुर्य्यम्।

[४] अनुबन्धबुद्धिनिवृत्तिः = मा न भूवं, किन्तु भूयासमिति नैसर्गिकमरणत्रासनिवृत्तिरित्यर्थः। उपकरणाऽख्याऽनुबन्धबुद्धिनिवृत्तिरित्यन्ये।

भा०[1]नैकस्यां स्त्रियां चैत्रो रक्त इत्यन्यासु स्त्रीषु विरक्त इति किन्तु तत्र रागो लब्धवृत्तिः, अन्यत्र भविष्यद्वृत्तिरिति। स हि तदा प्रसुप्ततनुविच्छिन्नो भवति। विषये यो लब्धवृत्तिः स उदारः। सर्व एवैते क्लेशविषयत्वन्नातिक्रामन्ति। कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेश इति। उच्यते। सत्यमेवैतत्, किन्तु विशिष्टा-

---

टी० तेन तेनात्मना समुदाचरन्ति = आविर्भवन्ति, वाजीकरणा[2]द्युपयोगेन वाऽभिभावकदौर्बल्येन वेति, वीप्सया विच्छेदसमुदाचारयोः पौनःपुन्यं दर्शयता यथोक्तात्प्रसुप्ताद् भेद उक्तः। रागेण वा समुदाचरता विजातीयः क्रोधोऽभिभूयते, सजातीयेन वा विषयान्तरवर्त्तिना रागेणैव विषयान्तरवर्त्ती रागोऽभिभूयत इत्याह "राग" इति।

भविष्यद्वृत्तेस्त्रयी गतिर्यथायोगं वेदितव्येत्याह 'सहि' इति। भविष्यद्वृत्ति क्लेशमात्रपरामर्शि सर्वनाम,(३) न चैत्रागपरामर्शि, तस्य * विच्छिन्नत्वादेवेति। उदारमाह "विषय" इति,। ननूदार एव पुरुषान् क्लिश्नातीति भवतु क्लेशः, अन्ये त्वक्लिश्नन्तः कथं क्लेशा इत्यत आह "सर्व एवैत इति। क्लेशविषयत्वं = क्लेशपदवाच्यत्वं, नाऽतिक्रामन्ति उदारतामाप-द्यमाना, अत एव तेऽपि हेया इति भावः। क्लेशत्वेनैकतां मन्यमानश्चोदयति "कस्तर्हि" इति। क्लेशत्वेन समानत्वेऽपि यथोक्ताऽवस्थाभेदाद्विशेष इति परिहरति "उच्यते सत्यम्" इति। स्यादेतद्, अविद्यातो भवन्तु क्लेशास्तथाप्यविद्यानिवृत्तौ कस्मान्निवर्त्तन्ते, न खलु पटः

---

टि० (१) विषयान्तरे रागो नास्तीति न, किन्त्वस्त्येवेत्यर्थः। तत्र लोकप्रसिद्धं दृष्टान्तमाह। "नैकस्याम्" इति। एकस्यां स्त्रियां चैत्रो रक्त इति हेतोरन्यासु विरक्त इति न, किन्तु तत्र = एकस्यां स्त्रियां रागो लब्धवृत्तिः = उदारः, अन्यासु स्त्रीषु भविष्यद्वृत्तिः = विच्छिन्न इत्यर्थः। नायं नियमोऽन्यत्र विच्छिन्न एव क्लेशो भवति इति, किन्तर्हि केचिद् भविष्यद्वृत्तयः क्लेशाः साम्प्रतं प्रसुप्ताः, केचित् तनवः, केचिच्च विच्छिन्ना इत्याह "स हि इति"। स हि = भविष्यद्वृत्तिः क्लेशः, तदा = एकस्मिन् क्लेश उदाराऽवस्थामापन्ने सति, कुत्रचित्प्रसुप्तो भवति, कुत्रचिच्च तनुर्भवति, क्वचिच्च विच्छिन्नो भवति, नाऽत्यन्ताऽसन् भवत्यसत उत्पादाऽसम्भवादित्यर्थः। प्रकृते च विच्छिन्नावस्थामादाय चैत्रीयराग उदाहृतः। एवमन्यत्राऽपि बोध्यमिति भावः। (२) वाजीकरणादि = शुक्रचिरपातलिङ्गवृद्ध्यादि कम्पटपामरेषु प्रसिद्धम्। (३) सर्वनाम = स हीत्यत्रत्यस्तच्छब्दः। * चैत्रीयरागस्य।

भा० नामेवैतेषां विच्छिन्नादित्वं [१] यथैव प्रतिपक्षभावनातो निवृत्तस्तथैव स्वव्यञ्जकाञ्जनेनाभिव्यक्त [२] इति सर्व एवाऽमी क्लेशा अविद्याभेदाः, कस्मात् ? सर्वेष्वविद्यैवाऽभिप्लवते [३] यदविद्यया वस्त्वाकार्य्यते तदेवानुशेरते [४] क्लेशाः, विपर्य्यासप्रत्ययकाल उपलभ्यन्ते, क्षीयमाणां चाविद्यामनु क्षीयन्त इति॥ ४ ॥ तत्राऽविद्यास्वरूपमुच्यते

सू० अनित्याऽशुचिदुःखाऽनात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥

अनित्ये कार्य्ये नित्यख्यातिः, तद्यथा, ध्रुवा पृथिवी, ध्रुवा सचन्द्रतारका द्यौः, अमृता दिवौकस इति ।

---

टी० कुविन्दनिवृत्तौ निवर्त्तत इत्यत आह "सर्व एव" इति । भेदा इव भेदास्तदविनिर्भागवर्त्तिन इति * यावत् । पृच्छति "कस्माद्" इति । उत्तरमाह "सर्वेषु" इति । तदेव स्फुटयति "यद्" इति । आकार्य्यते = समारोप्यते शेषं सुगमम् । "प्रसुप्तास्तत्त्वलीनानां तन्ववस्थाश्च योगिनाम् । विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनाम्" इति सङ्ग्रहः ॥ ४ ॥ "अनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥ अनित्यत्वोपयोगि विशेषणं "कार्य्य" इति । केचित्किल भूतानि नित्यत्वेनाभिमन्यमानास्तद्रूपमभीप्सवस्तान्येवोपासते, एवं धूमादिमार्गानुपासते चन्द्रसूर्य्यतारकाद्युलोकान्नित्यानभिमन्यमानास्तत्प्राप्तये, एवं दिवौकसः = देवानमृतानभिमन्यमानास्तद्भावाय सोमं पिबन्ति, आम्नायते हि "अपाम सोमममृता अभूम" इति । सेयमनित्येषु नित्यख्यातिरविद्या ।

---

टि० [१] प्रसुप्तादिरूपेण चतुर्विधानां क्लेशानां वस्तुत एकत्वमित्येतत्सत्यमेव यद्यपि तथाऽपि तत्तदवस्थाविशिष्ट्यमादाय चातुर्विध्येन विभागोऽभिहित इति भावः ।

[२] स्वव्यञ्जकाञ्जनेन = विषयचिन्तनादिना कारणेन, अभिव्यक्तः = लब्धवृत्तिः सन्नुदारो भवति क्लेश इत्यर्थः । एतेन यथा प्रतिपक्षभावना क्लेशतानवहेतुरेवं विषयाभिष्वङ्गत्यागोऽपीति ध्वनितम् ।

[३] सर्वेष्वेव ऽस्मितादिक्लेशेष्वविद्याऽन्वीय वर्त्तत इत्यर्थः ।

[४] अनुशेरते = अनुगता भवन्तीत्यर्थः, यद्वस्त्वविद्यया विपरीक्रियते तस्मिन्नेव वस्तुनि क्लेशा अपि लब्धवृत्तयो भवन्तीति भावः। *अविद्याऽन्वयव्यतिरकाऽनुविधायिनः।

भा० तथाऽशुचौ = परम बीभत्से[१] काये[२] उक्तञ्च "स्थानाद्बीजादुपष्टम्भान्निस्पन्दान्निधनादपि। कायमाधेयशौचत्वात्पण्डिताह्यशुचिं विदुः" इत्यशुचौ शुचिख्यातिर्दृश्यते । नवेव शशाङ्कलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयन्तीवेति। कस्य केनाऽभिसम्बन्धो, भवति चैवमशुचौ शुचिविपर्य्यासप्रत्यय इति। एतेनापुण्ये पुण्यप्रत्ययस्तथैवाऽनर्थे चाऽर्थप्रत्ययो व्याख्यातः। तथा दुःखे सुखख्यातिं वक्ष्यति, परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्चदुःखमेवसर्वंविवे-

टी० तथाऽशुचौ = परमबीभत्से काये, अर्द्धोक्त एव कायबीभत्सतायां वैयासिकीं गाथां पठति "स्थानाद्" इति। मातुरुदरं मूत्राद्युपहतं स्थानम्, पित्रोर्लोहितरेतसी बीजम्, आशितपीताऽऽहाररसादिभाव उपष्टम्भः, तेन हि शरीरं संधार्य्यते। निस्पन्दः = प्रस्वेदः। निधनञ्च-श्रोत्रियशरीरमप्यपवित्रयति। तत्स्पर्शे स्नानविधानाद्। ननु यदि शरीरमशुचि कृतं[३] तर्हि मृज्जलादिक्षालनेनेत्यत आह "आधेयशौचत्वाद्" इति। स्वभावेनाशुचेरपि शरीरस्य शौचमाधेयं, सुगन्धितेव कामिनीनामङ्गरागादिति। अर्द्धोक्तं पूरयति "इत्यशुचौ" इति। इत्युक्तेभ्यो हेतुभ्योऽशुचौ शरीर इत्यर्थः। शुचिख्यातिमाह "नवा" इति। हावः = शृङ्गारजा लीला, कस्य = स्त्रीकायस्य परमबीभत्सस्य, केन = मन्दतमसादृश्येन शशाङ्कलेखादिना सम्बन्धः। एतेन = अशुचिस्त्रीकाये शुचिख्यातिप्रदर्शनेन। अपुण्ये =

टि० (१) परमबीभत्से=अत्यन्तविकृते, क्रूरे, कुत्सितेऽपवित्र इति यावत्, कुत्सितत्वं च "शरीरमिदंमैथुनादेवोद्भूतं, संवृद्ध्युपेतं निरये, अथ मूत्रद्वारेण निष्क्रान्तम्, अस्थिभिश्चितं, मांसेनाऽनुलिप्तं, चर्मणाऽवनद्धम्" इत्यादिना मैत्रायणीयशाखायां स्पष्टम्।
(२) काये-इत्यस्याग्रे—शुचिख्यातिरिति पाठो यद्यपि सर्वत्रोपलभ्यते तथापि "अर्द्धोक्त एव कायबीभत्सतायाम्" इत्यादिवाचस्पत्याऽनुरोधनोपेक्षि स इत्यवधेयम्।
(३) कृतमिति प्रतिषेधार्थकमव्ययं, गम्यमानसाधनक्रियाऽपेक्षया च क्षालनेनेति करणे तृतीया, तथाच तर्हि मृज्जलादिक्षालनेन न किमपि साध्यमिति मुधैव तदित्यर्थो बोध्यः।

भा० किनः" इतितत्र सुखख्यातिरविद्या तथानात्मन्यात्मख्यातिः बाह्योपकरणेषु[१] चेतनाऽचेतनेषु, भोगाधिष्ठाने वा शरीरे, पुरुषोपकरणे वा मनस्यनात्मन्यात्मख्यातिरिति । तथैतदत्रोक्तं,[२] व्यक्तमव्यक्तं वासत्त्वमात्मत्वेनाभिप्रतीत्यतस्यसम्पदमनु नन्दत्यात्मसम्पदं मन्वानस्तस्य व्यापदमनुशोचत्यात्मव्यापदं मन्यमानः[३] स सर्वोऽप्रतिबुद्ध" इति । एषा चतुष्पदा भवत्यविद्या मूलमस्य क्लेशसन्तानस्य कर्माशयस्य च सविपाकस्य इति ।

---

टी० हिंसादौ, संसारमोचकादीनां पुण्यप्रत्ययः' एवमर्जनरक्षणादिदुःखबहुलतयाऽनर्थे = धनादौ अर्थप्रत्ययो व्याख्यातः । सर्वेषां जुगुप्सितत्वेनाऽशुचित्वात् । "तथा दुःख" इति । सुगमम् । "तथाऽनात्मनि" इति, सुगमम् । 'तथैतदत्रोक्तं'—पञ्चशिखेन, व्यक्तम् = चेतनं पुत्रदारपश्वादि, अव्यक्तम् = अचेतनं शय्यासनाशनादि, स सर्वोऽप्रतिबद्धः = मूढः । चत्वारि पदानि = स्थानान्यस्या इति चतुष्पदा । नन्वन्या अपि दिङ्मोहालातचक्रादिविषयाऽनन्तपदाऽविद्या, तत्किमुच्यते चतुष्पदेत्यत आह "मूलमस्य" इति । सन्तु नामाऽन्या अप्याविद्याः, संसारबीजं चतुष्पदैवेति । नन्वविद्येति नञ्समासः पूर्वपदार्थप्रधानो वा स्याद् यथाऽमक्षिकमिति, उत्तरपदार्थप्रधानो वा यथाऽराजपुरुष इति, अन्यपदार्थप्रधानो वा यथाऽमक्षिको देश इति,[४] तत्र पूर्वपदार्थप्रधानत्वे विद्यायाः प्रसज्ज्यप्रतिषेधो गम्येत । नचाऽस्य क्लेशादिकारणत्वम्[५] उत्तरपदार्थप्रधानत्वे वा विद्यैव कस्य चिदभावेन विशिष्टा गम्येत । सा च क्लेशादिपरिपन्थिनी, न तु तद्बीजम् । न हि प्रधानोपघाती प्रधानगुणो युक्तस्तदनुपघाताय

---

टि० (१) बाह्यस्य=देहस्य, उपकरणेषु=पुत्रपशुभृत्यशय्यासनादिष्वनात्मस्वित्यर्थः ।

(२) तथैतदत्रोक्तम्=यथा मयोक्तं तथा अत्र=चतुर्थेऽविद्याविषये पञ्चशिखेनाऽप्येतदुक्तमित्यर्थः । (३) मन्यमान इत्यस्याग्रे, य इति शेषो बोध्यः ।

(४) द्वन्द्ववत्स्वतन्त्रपदार्थद्वयाऽनवगमादुभयपदार्थप्रधानत्वं नाऽऽशङ्कितमिति माधवाचार्यः । (५) उपलक्षणं चैतत् अविद्याशब्दस्य स्त्रीलिङ्गत्वाऽभावाऽऽपत्तेश्चेत्यस्याऽपि ।

भा० तस्याश्चाऽमित्राऽगोष्पदवद् वस्तुसतत्त्वं विज्ञेयम्। यथा नाऽमित्रो मित्राऽभावो, न मित्रमात्रं किन्तु तद्विरुद्धः सपत्नः, तथाऽगोष्पदं न गोष्पदाभावो, न गोष्पदमात्रं किन्तु देश एव ताभ्यामन्यद् वस्त्वन्तरम्। एवमविद्या नप्रमाणं, नप्रमाणा-भावः, किन्तु विद्याविपरीतं ज्ञानान्तरमविद्येति ॥ ५ ॥

---

टी० गुणे त्वन्याय्यकल्पना[१], तस्माद्विद्यास्वरूपाऽनुपघाताय नञोऽन्यथा-करणम् अध्याहारो वा निषेधस्येति, अन्यपदार्थप्राधान्ये त्वविद्यमानविद्या बुद्धिर्वक्तव्या, नचाऽसौ विद्याया अभावमात्रेण क्लेशादिबीजं, विवेकख्या-तिपूर्वकनिरोधसम्पन्नाया अपि तथात्वप्रसङ्गात्। तस्मात्सर्वथैवाऽविद्याया न क्लेशादिमूलतेत्यत आह। "तस्याश्च" इति। वस्तुनो भावो वस्तुस-तत्त्वं वस्तुत्वमित्यर्थः। तदनेन न प्रसज्ज्यप्रतिषेधो, नाऽपि विद्यैवाऽविद्या नाऽपि तदभावविशिष्टा बुद्धिरपि तु विद्याविरुद्धं विपर्य्यज्ञानमविद्येत्युक्तं, लोकाधीनाऽवधारणो हि शब्दार्थसंबन्धः[२]। लोके चोत्तरपदार्थप्रधानस्याऽपि नञ उत्तरपदाऽभिधेयोपमर्दकस्य तल्लक्षिततद्विरुद्धपरतया तत्र तत्रोपलब्धे[३] रिहाऽपि तद्विरुद्धे वृत्तिरिति भावः। दृष्टान्तं विभजते "यथा नाऽमित्र" इति। न मित्राऽभावो नाऽपि मित्रमात्रमित्यस्यानन्तरं वस्त्वन्तरं किन्तु तद्विरुद्धः सपत्न इति वक्तव्यम्। तथाऽगोष्पदमिति=न गोष्पदाभावो, न गोष्पदमात्रं किन्तु देश एव विपुलो गोष्पदविरुद्धः, ताभ्याम्=अभावगोष्पदाभ्यामन्य* इति, अर्थाद्वस्त्वन्तरम्। दार्ष्टान्तिके योजयति "एवम्" इति ॥ ५ ॥

---

टि० (१) हि=यतः प्रधानस्य=उत्तरपदार्थस्याऽविद्याशब्दाऽभिधेयस्य, उपघाती= उप-मर्दकः, प्रधानगुणो=नञर्थो, न युक्तोऽतस्तदनुपघाताय गुण एवान्याय्यकल्पना युक्तेत्यर्थः। एवं च न विद्याविरुद्धमविद्यापदवाच्यमपि त्वभावविशिष्टा विद्या सा च न क्लेशमूलमिति भावः।

(२) स्पष्टं चैतल्लोकवेदशब्दार्थैक्याऽधिकरणे, यथाहुः "वृद्धप्रयोगगम्यो हि शब्दार्थः सर्व एव नः। तेन यत्र प्रयुक्तो यो न तस्मादपनीयते" इति।

(३) अब्राह्मणाऽधर्मादिपदेषूपलब्धेरित्यर्थः, तदुक्तं "नामधात्वर्थयोगे तु नैव नञ् प्रतिषेधकः। वदत्यब्राह्मणाऽधर्मावन्यमात्रविरोधिनौ" इति। * अन्यादिति पाठान्तरम्

सू० दृग्दर्शनशक्त्योरेकात्मतेवाऽस्मिता ॥ ६ ॥

भा० पुरुषो दृक्शक्तिर्बुद्धिर्दर्शनशक्तिरित्येतयोरेकस्वरूपापत्तिरिवाऽस्मिताक्लेश उच्यते । भोक्तृभोग्यशक्त्योरत्यन्तविभक्तयोरत्यन्ताऽसङ्कीर्णयोरविभागप्राप्ताविव सत्यां भोगः कल्पते, स्वरूपप्रतिलम्भे तु तयोः कैवल्यमेव भवति, कुतो भोग इति । तथाचोक्तं "बुद्धितः परं पुरुषमाकारशीलविद्यादिभिर्विभक्तमपश्यन् कुर्यात्तत्रात्मबुद्धिं मोहेन" इति ॥ ६ ॥

टी० अविद्यामुक्त्वा तस्याः कार्यमस्मितां[१] रागादिवरिष्ठामाह । "दृग्दर्शनशक्त्योरेकात्मतेवाऽस्मिता" इति ॥ ६ ॥ दृक् च दर्शनं च ते एव शक्ती तयोरात्मानात्मनोः, अनात्मन्यात्मज्ञानलक्षणाऽविद्यापादिता या एकात्मतेव = एकार्थतेव, न तु परमार्थत एकात्मता साऽस्मिता । दृग्दर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोग्यतालक्षणं सम्बन्धं दर्शयितुं शक्तिग्रहणम्। सूत्रं विवृणोति "पुरुष" इति । नन्वनयोरभेदप्रतीतेरभेद एव कस्मान्न भवति कुतश्चैकत्वं क्लिष्णाति पुरुषमित्यत आह "भोक्तृभोग्यशक्त्योः" इति। भोक्तृशक्तिः= पुरुषः, भोग्यशक्तिः= बुद्धिः, तयोरत्यन्तविभक्तयोः, कुतोऽत्यन्तविभक्तत्वमित्यत आह "अत्यन्ताऽसंकीर्णयोः" इति । अपरिणामित्वादिधर्मकः पुरुषः, परिणामित्वादिधर्मिका बुद्धिरित्यसंकीर्णता, तदनेन प्रतीयमानोऽप्यभेदो न पारमार्थिक इत्युक्तम् । अविभागेति क्लेशत्वमुक्तम् । अन्वयं दर्शयित्वा व्यतिरेकमाह "स्वरूप" इति । प्रतिलम्भः = विवेकख्यातिः, परस्याप्येतत्संमतमित्याह "तथाचोक्तं पञ्चशिखेन बुद्धित" इति । आकारः = स्वरूपं, सदा विशुद्धिः, शीलम् = औदासीन्यं, विद्या=चैतन्यं, बुद्धिरविशुद्धा अनुदासीना जडा चेति । तत्रात्मबुद्धिरविद्या, मोहः=पूर्वाऽविद्याजनितः संस्कारः, तमो वा । अविद्यायास्तामसत्वादिति ॥ ६ ॥

टि० (१) अतस्मिंस्तद्बुद्धिरूपाया अविद्यायाः कार्यभूतां बुद्धिपुरुषयोरभेदाऽभिमानरूपामित्यर्थः । असत्यामस्मितायां रागाद्यनुत्पत्तेरस्मिताया रागादिहेतुत्वेन वरिष्ठत्वमितिभावः ।

सू० सुखानुशयी रागः[१] ॥ ७ ॥

भा० सुखाऽभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्द्धस्तृष्णा लोभः स राग इति ॥ ७ ॥

सू० दुःखानुशयी द्वेषः ॥ ८ ॥

भा० दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा यः प्रतिघो मन्युर्जिघांसा क्रोधः स द्वेष इति ॥ ८ ॥

---

टी० विवेकदर्शने रागादीनां विनिवृत्तेरविद्यापादितास्मिता रागादीनां निदानमित्यस्मिताऽनन्तरं रागादीन् लक्षयति "सुखानुशयी रागः ॥७॥ सुखाऽनभिज्ञस्य स्मृतेरभावात्सुखाभिज्ञस्येत्युक्तम् । स्मर्य्यमाणे सुखे रागः सुखानुस्मृतिपूर्वकः, अनुभूयमाने तु सुखे नानुस्मृतिमपेक्षते, तत्साधने तु स्मर्य्यमाणे दृश्यमाने वा सुखानुस्मृतिपूर्व एव रागः, दृश्यमानमपि हि सुखसाधनं तज्जातीयस्य सुखहेतुतां स्मृत्वा तज्जातीयतया चास्य सुखहेतुमनुमायेच्छति । अनुशयीति पदार्थमाह "य" इति ॥ ७ ॥

दुःखानुशयी द्वेषः ॥ ८ ॥ दुःखाभिज्ञस्येति पूर्ववद् व्याख्येयम् । अनुशयिपदार्थमाह "यः प्रतिघ" इति । प्रतिहन्तीति प्रतिघः । एतदेव पर्य्यायैर्विवृणोति "मन्युः" इति ॥ ८ ॥

---

टि० (१) सुखमनुशेते यः कश्चिद् धीवृत्तिविशेषोऽभिलाषाऽपरपर्य्यायः स राग इत्यर्थः । अनुशयीत्यत्र ग्रह्यादित्वाण्णिनिप्रत्यये विषयिविशयिशब्दवन्निपातनाद् वृद्ध्यभावो बोध्यः । माधवाऽऽचार्य्यास्तु सर्वदर्शनसंग्रहे मत्वर्थीयेनिप्रत्ययान्तोऽयमित्याह । न च "एकाक्षरात्कृतो जातेः सप्तम्याञ्च न तौ स्मृतौ" इति निषेधात् कथमिनिप्रत्यय इति रेकणीयम् । कार्य्यीत्यादिप्रयोगाऽनुरोधेन स्ववानित्यादिप्रयोगाणामनभिधानमाश्रित्य तस्य वचनस्य महाभाष्ये प्रत्याख्यातत्वात् । प्रायिकाऽभिप्रायमिदं वचनमिति माधवीयं समाधानं तु वृत्तिकाररीत्येत्यलं बहुना ।

सू० स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः[१] ॥९॥

भा०सर्वस्य प्राणिन इयमात्माशीर्नित्या भवति मा न भूवं भूयासमिति, [२] नचाऽननुभूतमरणधर्मकस्यैषा भवत्याऽऽत्माऽऽशीः। एतया च पूर्वजन्माऽनुभवः प्रतीयते। स चाऽयमभिनिवेशः क्लेशः स्वरसवाही कृमेरपि जातमात्रस्य प्रत्यक्षाऽनुमानागमैरसम्भा-

---

टी० "स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" ॥९॥ अभिनिवेशपदार्थं व्याचष्टे "सर्वस्य प्राणिन" इति। इयमात्माऽऽशीः = आत्मनि प्रार्थना मा न भूवं=मा अभावी भूवं, भूयासं = जीव्यासमिति। नचाननुभूतमरणधर्मकस्य = अननुभूतो मरणधर्मो येन जन्तुना तस्यैवं भवत्यात्माशीः = अभिनिवेशो मरणभयं, प्रसङ्गतो जन्मान्तरं प्रत्याचक्षाणं नास्तिकं निराकरोति "एतया" इति। प्रत्युदितस्य शरीरस्य ध्रियमाणत्वात् पूर्वजन्मानुभवः प्रतीयते = निकायविशिष्टाभिरपूर्वाभिर्देहेन्द्रियवेदनाभिरभिसम्बन्धो जन्म तस्याऽनुभवः = प्राप्तिः सा प्रतीयते, कथमित्यत आह "स चायभिनिवेश" इति। अर्द्धोक्तावेवास्य क्लेशत्वमाह "क्लेश" इति। अयमहितकर्मादिना जन्तून् क्लिश्नाति = दुःखाकरोति इति क्लेशः। वक्तुमुपक्रान्तं परिसमापयति "स्वरसवाही" इति। स्वभावेन = वासनारूपेण वहनशीलो, न पुनरागन्तुकः।

---

टि० (१) तथेति तच्छब्देनाऽपि—शब्दसमुच्चितोऽविद्वान् परामृश्यते। तथा च यथाऽविदुषो नैसर्गिको मरणत्रासस्तथा विदुषोऽपि = श्रुताऽनुमितविवेकिनोऽपि, यो रूढो मरणत्रासः सोऽभिनिवेशाऽख्यः क्लेश इत्यर्थः। अत्र च शास्त्रज्ञ एव विद्वच्छब्देनोच्यते, न तत्त्वज्ञः। प्रसंख्यानाऽग्निनाऽविद्याया दग्धत्वात् तन्मूलस्याऽभिनिवेशस्य तस्मिन्नसम्भवात्। एतेन तत्त्वज्ञ एवाऽत्र विद्वच्छब्दार्थ इति विज्ञानभिक्षूक्तिर्निर्दलिता।

(२) अहमभावशीलो मा भूवं, किन्तु भूयासमेवेति प्रार्थना सर्वस्याऽस्तीति भावः।

भा० वितो[१] मरणत्रास उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति। यथा चायमत्यन्तमूढेषु दृश्यते क्लेशस्तथा विदुषोऽपि = विज्ञातपूर्वापरान्तस्य रूढः। कस्मात्। समाना हि तयोः कुशलाकुशलयोर्मरणदुःखानुभवादियं वासनेति ॥ ९ ॥

टी० कृमेरपि जातमात्रस्य = दुःखबहुलस्य निकृष्टतमचैतन्यस्य, अनागन्तुकत्वे हेतुमाह "प्रत्यक्ष" इति 'प्रत्यक्षाऽनुमानागमैः प्रत्युदिते[२] जन्मन्यसम्भावितः = असम्पादितः पूर्वजन्माऽनुभूतं मरणदुःखमनुमापयति। अयमभिसन्धिः। जातमात्र एव हि बालको मारकवस्तुदर्शनाद् वेपमानः कम्पविशेषादनुमितमरणप्रत्ययासक्तिस्ततो बिभ्यदुपलभ्यते। दुःखाद् दुःखहेतोश्च भयं दृष्टं, न चाऽस्मिन् जन्मन्यनेन मरणमनुभृतमनुमितं श्रुतं वा प्रागेवास्य दुःखत्वं तद्धेतुत्वं वाऽवगम्यते। तस्मात्तस्य तथाभूतस्य स्मृतिः परिशिष्यते। नचेयं संस्कारादृते। न चायं संस्काराऽनुभवं विना। न चास्मिन् जन्मन्यनुभव इति प्राग्भवीयः परिशिष्यत इत्यासीत्पूर्वजन्मसंबन्ध इति। तथा–पदं यथा–पदमाकाङ्क्षत इत्यर्थप्राप्ते यथा–पदे सति यादृशो वाक्यार्थो भवति तादृशं दर्शयति "यथा चायम्" इति। अत्यन्तमूढेषु = मन्दतमचैतन्येषु, विद्वत्तां दर्शयति "विज्ञातपूर्वापरान्तस्य" इति। अन्तः = कोटिः पूरुषस्य हि पूर्वा कोटिः संसार, उत्तरा कैवल्यं, सैव विज्ञाता श्रुताऽनुमानाभ्यां येन स तथोक्तः। सोऽयं मरणत्रास आ कृमेरा च विदुषो रूढः = प्रसिद्ध इति। नन्वविदुषो भवतु मरणत्रासो, विदुषस्तु न संभवति विद्ययोन्मूलित्वाद्। अनुन्मूलने वाऽस्य मरणत्रासस्य स्यादत्यन्तसत्त्वमित्याशयवान् पृच्छति "कस्माद्" इति। उत्तरं "समानाहि" इति। न संप्रज्ञातवान् विद्वान् अपि तु श्रुताऽनुमानविवेकी[३] इति भावः ॥ ९ ॥

टि० (१) प्रत्यक्षादिनेह जन्मन्यननुभूत इत्यर्थः। यतो जातमात्रस्य कृमेरपि प्रत्यक्षादिनेह जन्मन्यनुभूत उच्छेददृष्ट्यात्मको मरणत्रासः पूर्वानुभूतं मरणदुःखमनुमापयत्यतो योऽयमभिनिवेशाख्यः क्लेशः स स्वरसवाही = नैसर्गिकः सर्वजन्तुसाधारणः, पूर्वजन्मसद्भावज्ञापकश्चेति फलितार्थः

(२) प्रत्युदिते = वर्त्तमाने जन्मनीत्यर्थः

(३) श्रुतानुमानविवेक इति पाठे तु श्रुताऽनुमानाभ्यां निष्पन्नो विवेको यस्येत्यर्थो बोध्यः। यत्तु विज्ञानभिक्षुणा–सम्प्रज्ञातयोगिनोऽपि मरणभयमस्ति इति जल्पितं, तद् 'न बिभेति कुतश्चन" इति श्रुतिविरोधाद् हेयम्। "तज्जः सँस्कारोऽन्यसँस्कारप्रतिबन्धी" इति सूत्रादन्यसँस्काराणां प्रतिबद्धत्वात्सँस्कारस्योत्तेजकत्वात्तत्त्वज्ञस्याऽप्यभिनिवेश इत्यपि मन्दमित्यलं बहुना।

सू० ते प्रतिप्रसवहेयाः सूक्ष्माः[१]॥१०॥

भा० ते पञ्च क्लेशा दग्धबीजकल्पा योगिनश्चरिताऽधिकारे चेतसि प्रलीने सह तेनैवास्तं गच्छन्ति ॥ १० ॥ स्थितानान्तु बीजभावोपगतानां[२]—

सू० ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥

भा० क्लेशानां या वृत्तयः स्थूलास्ताः क्रियायोगेन तनूकृताः सत्यः प्रसङ्ख्यानेन ध्यानेन हातव्या यावत्सूक्ष्मीकृता यावद् दग्धबीजकल्पा इति-

---

टी० तदेवं क्लेशा लक्षितास्तेषां च हेयानां, प्रसुप्ततनुविच्छिन्नोदाररूपतया चतस्रोऽवस्था दर्शिताः। कस्मात्पुनः पञ्चमी क्लेशाऽवस्था दग्धबीजभावतया सूक्ष्मा न सूत्रकारेण कथितेत्यत आह "ते प्रतिप्रसवहेयाः सूक्ष्माः" ॥१०॥यत्किल पुरुषप्रयत्नगोचरस्तदुपदिश्यते, न च सूक्ष्माऽवस्था हानप्रयत्नगोचरः, किन्तु प्रतिप्रसवेन=कार्य्यस्य चित्तस्याऽस्मितालक्षणकारणभावापत्त्या हातव्येति । व्याचष्टे "ते" इति । सुगमम् ॥१०॥ अथ क्रियायोगतनूकृतानां क्लेशानां किंविषयात् पुरुषप्रयत्नाद् हानमित्यत आह "स्थितानान्तु बीजभावोपगतानाम्" इति। अनेन वन्ध्येभ्यो व्यवच्छिनत्ति। सूत्रं पठति "ध्यानहेयास्तद्वृत्तयः" इति॥ ११॥व्याचष्टे "क्लेशानाम्" इति। क्रियायोगतनूकृता अपि हि प्रतिप्रसवहेतुभावेन कार्य्यतः स्वरूपतश्च शक्या उच्छेत्तुमिति स्थूला उक्ताः । पुरुषप्रयत्नस्य प्रसङ्ख्यानगोचरस्य अवधिमाह "यावद्" इति । सूक्ष्मीकृता इति विवृणोति "दग्ध" इति ।

---

टि० (१) क्रियायोगतनूकृतास्तदनु प्रसङ्ख्यानाग्निना दग्धबीजभावकल्पा ये सूक्ष्माः क्लेशास्ते प्रतिप्रसवेन = प्रसवाद्विरुद्धः प्रतिप्रसवः प्रलयश्चित्तस्य स्वकारणे लयः, असम्प्रज्ञातसमाधिरिति यावत् । तेन हेया इत्यर्थः ।

(२) स्थितानाम् = अदग्धानाम्। अत एव बीजभावोपगतानां क्लेशानां या वृत्तयस्तद्वृत्तयः क्रियायोगेन पूर्वं तनूकृत्य ध्यानेन = प्रसङ्ख्यानाऽग्निना हेयाः = दग्धबीजभावकल्पाः कर्त्तव्या इत्येवं सूत्रेण सहैकवाक्यतयेदं भाष्यं व्याख्येयम् । स्थितानामित्यस्य तद्वृत्तय इतिसमासाऽन्तर्गततच्छब्दस्यार्थैः क्लेशैः सहान्वय इति विज्ञानभिक्षुविवरणे तु सौत्रः समास आश्रयणीय इति बोध्यम् ।

भा० यथा च वस्त्राणां स्थूलो मलः पूर्वं निर्धूयते[१] पश्चात्सूक्ष्मो यत्नेनोपायेन चाऽपनीयते, तथा स्वल्पप्रतिपक्षाः स्थूला वृत्तयः क्लेशानां, सूक्ष्मास्तु महाप्रतिपक्षा इति ॥११॥

सू० क्लेशमूलः कर्माशयो दृष्टाऽदृष्टजन्मवेदनीयः ॥१२॥

भा० तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रोधप्रसवः। स दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च। तत्र[२] तीव्रसंवेगेन मन्त्रतपः

टी० अत्रैव दृष्टान्तमाह "यथा च वस्त्राणाम्" इति। यत्नेन = तत्क्षालनादिना, उपायेन = क्षारसंयोगादिना, स्थूलसूक्ष्मतामात्रतया दृष्टान्तदार्ष्टान्तिकयोः साम्यं न पुनः प्रयत्नापनेयतया, प्रतिप्रसवहेयेषु तदसम्भवात्। स्वल्पः प्रतिपक्षः = उच्छेदहेतुर्यासां तास्तथोक्ताः। महान् प्रतिपक्ष = उच्छेदहेतुर्यासां तास्तथोक्ताः। प्रतिप्रसवस्य चाऽधस्तात् क्लेशोच्छेदसाधकं स्यात्प्रसंख्यानमित्यवरतया स्वल्पत्वमुक्तम्[३] ॥११॥ स्यादेतद्, जात्यायुर्भोगहेतवः क्लिश्नन्तः क्लेशाः, कर्माशयश्च तथा, न त्वऽविद्यादयः। तत्कथमविद्यादयः क्लेशा इत्यत आह "क्लेशमूलः कर्माशयो दृष्टाऽदृष्टजन्मवेदनीयः" ॥१२॥ क्लेशो मूलं यस्योत्पादे च कार्य्यकरणे च स तथोक्तः। एतदुक्तं भवति, अविद्यादिमूलः कर्माशयो-जात्यायुर्भोगहेतुरित्यविद्यादयोऽपि तद्धेतवोऽतः क्लेशा इति। व्याचष्टे "तत्र" इति। आशेरते सांसारिकाः पुरुषा अस्मिन्नित्याशयः, कर्मणामाशयौ = धर्माधर्मौ, कामात्काम्यकर्मप्रवृत्तौ स्वर्गादिहेतुर्धर्मो भवति,

टि० (१) निर्धूयते = प्रक्षालनं विनैव वस्त्रविधूननादिना निरस्यत इत्यर्थः।

(२) अदृष्टजन्मवेदनीयं प्रसिद्धत्वादनुदाहृत्य दृष्टजन्मवेदनीयं पुण्यमुदाहरति, "तत्र तीव्रेति।

(३) प्रतिप्रसवात्पूर्वभावितया प्रसंख्यानस्य स्वल्पत्वमुक्तमित्यर्थः। अत्र चायं क्रमः-यथा स्थूलो मलो विधूननेन, सूक्ष्मस्तु प्रक्षालनेन, सूक्ष्मतरस्तु क्षारसंयोगेन निरस्यते, तथा स्थूला = उदाराऽवस्थापन्नाः क्लेशाः क्रियायोगेन तनूकर्त्तव्याः, तनूकृतास्तु प्रसंख्यानेन दग्धबीजभावकल्पाः कर्त्तव्या, दग्धबीजभावकल्पाश्च प्रतिप्रसवेन हेया इति।

भा० समाधिभिर्निर्वर्त्तित ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति। तथा[१] तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः[२] स चाऽपि पापकर्माशयः सद्य एव परिपच्यते * । यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः, तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्य्यक्त्वेन परिणत इति। तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्माशयः, क्षीणक्लेशानामपि नास्ति अदृष्टजन्मवेदनीयः कर्माशय इति ॥१२॥

---

टी० एवं लोभात्परद्रव्यापहारादावधर्मः। एवं मोहादधर्मे हिंसादौ धर्मबुद्धेः प्रवर्त्तमानस्याऽधर्म एव, न त्वस्ति मोहजो धर्मः। अस्ति क्रोधजो धर्मः, तद्यथा ध्रुवस्य जनकाऽवमानजन्मनः क्रोधात् तज्जिगीषयाऽऽहितेन[३] कर्माशयेन पुण्येनान्तरिक्षलोकवासिनामुपरि स्थानम्। अधर्मस्तु क्रोधजो ब्रह्मवधादिजन्मा प्रसिद्ध एव भूतानाम्। तस्य द्वैविध्यमाह "स दृष्टजन्मवेदनीयश्च" इति। दृष्टजन्मवेदनीयमाह "तीव्रसंवेगेन" इति। यथासंख्येन दृष्टान्तावाह[४] "यथा नन्दीश्वर" इति। तत्र नारकाणामिति" = येन कर्माशयेन कुम्भीपाकादयो नकरभेदाः प्राप्यन्ते तत्कारिणो नारकाः, तेषां नास्ति दृष्टजन्मवेदनीयः कर्माशयः। न हि मनुष्यशरीरेण तत्परिणामभेदेन वा सा तादृशी वत्सरसहस्रादिनिरन्तरोपभोग्या वेदना संभवति[५] इति। शेषं सुगमम् ॥१२॥

---

टि० (१) दृष्टजन्मवेदनीयं पापमुदाहरति—तथेत्यादिना ।

(२) अपकार इत्यस्याऽग्रे य इत्यनुषज्जनीयम् । * इहैव जन्मनि फलोन्मुखीभवति ।

(३) तज्जिगीषया=स्वतातोत्तानपादैश्वर्य्याऽधिकैश्वर्य्यलिप्सयाऽऽहितेन=सम्पादितेनाऽनुष्ठितेनेत्यर्थः । (४) उक्तयोः पुण्यपापयोर्यथाक्रममुदाहरणमाहेत्यर्थः ।

(५) विज्ञानभिक्षुस्तु नारकिपुरुषाणां धर्माद्यनुत्पत्तेर्न दृष्टजन्मवेदनीयः कर्माशयः, स्वर्गिणां तु भारतवर्षमागत्य लीलामानुषविग्रहेण प्रयागादौ कर्माऽनुष्ठानस्य तत्फलस्य च श्रवणादस्त्येव दृष्टजन्मवेदनीयः कर्माशय इति नारकिमात्रवचनम् इत्येवं व्याचचक्षे ।

सू० सति मूले तद्विपाको जात्यायुर्भोगाः[1] ॥१३॥

भा० सत्सु क्लेशेषु कर्माशयो विपाकाऽऽरम्भी भवति, नोच्छिन्नक्लेशमूलः। यथा तुषाऽवनद्धाः शालितण्डुला अदग्धबीजभावाः[2] प्ररोहसमर्था भवन्ति, नाऽपनीततुषा दग्धबीजभावा वा। तथा क्लेशाऽवनद्धः कर्माशयो विपाकप्ररोही भवति, नाऽपनीतक्लेशो न प्र-

टी० स्यादेतद्। अविद्यामूलत्वे कर्माशयस्य विद्योत्पादे सत्याविद्याविनाशान्मा नाम कर्माशयान्तरं चैषीत्, प्राक्तनकर्माशयानामनादिभवपरम्परासंचितानामसंख्यातानामनियतविपाककालानां भोगेन क्षपयितुमशक्यत्वादशक्योच्छेदः संसारः स्यादित्यत आह "सति मूले तद्विपाको जात्यायुर्भोगा" इति ॥१३॥

एतदुक्तं भवति। सुखदुःखफलो हि कर्माशयस्तादर्थ्येन तन्नान्तरीयकतया जन्माऽऽयुषी अपि प्रसूते, सुखदुःखे च रागद्वेषाऽनुषक्ते तदविनिर्भागवर्तिनी[3] तदभावे न भवतः, न चास्ति संभवो, न च तत्र यस्तुष्यति वोद्विजते वा तच्च तस्य सुखं वा दुःखं वेति[4]। तदियमात्मभूमिः क्लेशसलिलावसिक्ता कर्मफलप्रसवक्षेत्रमित्यस्ति क्लेशानां फलोपजननेऽपि कर्माशयसहकारितेति, क्लेशसमुच्छेदे सहकारिवैकल्यात् सन्नप्यनन्तोऽप्यनियतविपाककालोऽपि प्रसंख्यानदग्धबीजभावो न फलाय कल्पत इति। उक्तमर्थं भाष्यमेव द्योतयति "सत्सु" इति। अत्रैव दृष्टान्तमाह "यथातुष" इति। सतुषा अपि दग्धबीजभावाः स्वेदादिभिः। दार्ष्टान्तिके योजयति "तथा" इति। ननु न क्लेशाः शक्या अपनेतुम्। न हि सतामपनय

टि० (१) मूले सेति = धर्माऽधर्मयोर्मूलभूते रागद्वेषादिक्लेशे सति. तद्विपाकः = तस्य कर्माशयस्य फलं भवतीत्यर्थः। स चायं विपाकस्त्रिविध इत्याह "जात्यायुर्भोगा" इति। जातिः = जन्म, आयुः = जीवनकालः, भोगः = ह्लादपरितापफला सुखदुःखात्मिका चित्तवृत्तिरित्यर्थः।

(२) दग्धबिजभावा वा इत्युत्तरभाष्यादत्र वा—शब्दो निक्षेपणीयः।

(३) तदविनिर्भागवर्त्तिनी = रागद्वेषाऽविनाभाववर्त्तिनी।

(४) यत्र यस्तुष्यति तत्तस्य सुखं न, यस्माच्चोद्विजते तत्तस्य दुखं नेति यतो न च सम्भवत्यतः सुखदुःखे रागद्वेषाऽनुषक्ते इति भावः।

भा० सङ्ख्यानदग्धक्लेशबीजभावो वेति। स च विपाकस्त्रिविधो जातिरायुर्भोग इति। तत्रेदं विचार्य्यते, किमेकं कर्मैकस्य जन्मनः कारणम्, अथैकं कर्मानेकं जन्माक्षिपतीति। द्वितीया विचारणा किमनेकं कर्मानेकं जन्म निर्वर्त्तयति, अथाऽनेकं कर्मैकं जन्म निर्वर्तयतीति। न तावदेकं कर्मैकस्य जन्मनः कारणं, कस्माद् अनादिकालप्रचितस्या[१]ऽसङ्ख्येयस्याऽवशिष्टकर्मणः साम्प्रतिकस्य[२] च फलक्रमाऽनियमादनाश्वासो लोकस्य प्रसक्तः, स चाऽनिष्ट इति। न चैकं कर्मानेकस्य जन्मनः कारणं, कस्माद् अनेकेषु

टी० इत्यत आह "न प्रसङ्ख्यानदग्धबीजभावो वा" इति। विपाकस्य त्रैविध्यमाह "स च" इति। विपच्यते = साध्यते कर्मभिरिति विपाकः। कर्मैकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा प्रथमा विचारणा, द्वितीया तु कर्माऽनेकत्वं ध्रुवं कृत्वा जन्मैकत्वाऽनेकत्वगोचरा। तदेवं चत्वारो विकल्पाः। तत्र प्रथमं विकल्पमपाकरोति "न तावदेकं कर्मैकस्य जन्मनः कारणम्" इति। पृच्छति "कस्माद्" इति। उत्तरमाह "अनादि" इति। अनादिकाले एकैकजन्मप्रचितस्य, अत एवासङ्ख्येयस्य, एकैकजन्मक्षपितादेकैकस्मात्कर्मणोऽवशिष्टस्य कर्मणः, साम्प्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः, स चाऽनिष्ट इति। एतदुक्तं भवति,-कर्मक्षयस्य विरलत्वात् तदुत्पत्तिबाहुल्याचाऽन्योन्यसंपीडिताश्च कर्माशया निरन्तरोत्पत्तयो निरुच्छ्वासाः स्वविपाकं प्रतीति न फलक्रमः शक्योऽवधारयितुं प्रेक्षावतस्त्यऽनाश्वासः पुण्यानुष्ठानं प्रति प्रसक्त[३] इति। द्वितीयं विकल्पमपाकरोति। "न चैकं कर्मानेकस्य जन्मनः कारणम्" इति। पृच्छति "कस्माद्" इति। उत्तरमाह "अनेकेषु" इति। अनेकस्मिन् जन्मन्याहितमेकमेव कर्मानेकस्य जन्म-

टि० (१) प्रचितस्य=सञ्चितस्य। अनादिकालैकैकप्रचितस्येति क्वाचित्कः पाठः।

(२) साम्प्रतिकस्य=वर्त्तमानजन्मन्यनुष्ठितस्य। (३) भाविपापादिनाऽनुष्ठीयमानपुण्यनाशसंभवात्पुण्याऽनुष्ठानं प्रत्यनाश्वासो लोकानां स्यादिति भावः।

भा०कर्मस्वेकैकमेव कर्मानेकस्य जन्मनः कारणमित्यवशिष्टस्य विपाककालाभावः प्रसक्तः, स चाप्यनिष्ट इति । न चानेकं कर्माऽनेकस्य जन्मनः कारणम् । कस्मात् । तदनेकं जन्म युगपन्न सम्भवतीति क्रमेण वाच्यम् । तथाच पूर्वदोषाऽनुषङ्गः, तस्माज्जन्मप्रायणान्तरे[१] कृतः पुण्याऽपुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जनभावेनावस्थितः प्रायणाऽभिव्यक्त[२] एकप्रघट्टकेन मिलित्वा मरणं प्रसाध्य संमूर्च्छित एकमेव जन्म

टी०लक्षणस्य विपाकस्य निमित्तमित्यविशिष्टस्य विपाककालाऽभावः प्रसक्तः, स चाप्यनिष्ट इति कर्मवैफल्येन तदननुष्ठानप्रसङ्गाद्, यदैकजन्मसमुच्छेद्ये कर्मण्येकस्मिन्, फलक्रमानियमादनाश्वासस्तदा कैव कथा बहुजन्मसमुच्छेद्ये कर्मण्येकस्मिन् । तत्र ह्यवसराऽभावाद् विपाककालाभाव एव साम्प्रतिकस्येति भावः । तृतीयं विकल्पमपाकरोति "न चाऽनेकं कर्मानेकस्य जन्मनः कारणम्" इति । तत्र हेतुमाह "तद्"इति । तदनेकं जन्म युगपन्न सम्भवत्ययोगिन इति क्रमेण वाच्यम् । यदि हि कर्मसहस्रं युगपज्जन्मसहस्रं प्रसुवीत तत एव कर्मसहस्रप्रक्षयादवशिष्टस्य विपाककालः फलक्रमानियमश्च स्यातां, न त्वस्ति जन्मनां यौगपद्यम् । एवमेव प्रथमपक्ष एवोक्तं दूषणमित्यर्थः । तदेवं पक्षत्रये निराकृते पारिशेष्यादनेकं कर्मैकस्य जन्मनः कारणमिति पक्षो व्यवतिष्ठत इत्याह"तस्माज्जन्म"इति । जन्म च प्रायणं च जन्मप्रायणे,तयोरन्तरं=मध्यं,तस्मिन्। विचित्रसुखदुःखफलोपहारेण विचित्रः, यदत्यन्तमुद्भूतमनन्तरमेव फलं दास्यति तत्प्रधानं,यत्तु विलम्बेन तदुपसर्जनम्।प्रायणं=मरणं,तेनाऽभिव्यक्तः=स्वकार्य्यारम्भणाऽऽभिमुख्यमुपनीत एक-

टि० (१) जन्माऽऽरभ्य मरणपर्य्यन्तं यो धर्माऽधर्मसमूहो गुणप्रधानभावाऽऽपन्नः शुभाऽशुभकर्मभिर्निष्पादितः स मरणकाल आरब्धकर्मभोगसमाप्त्या लब्धाऽवसरः सन् एकप्रयत्नेन स्वफलदानाय मरणं प्रसाध्य संमूर्च्छितः=एकीभूत एकमेव जन्म करोति, नाऽनेकमित्यर्थः ।

(२) प्रायणाऽभिव्यक्त इत्यनेनाऽभिव्यज्यमानतया फलोन्मुखत्वं सूचयति । अत्रेदमाकूतम् । मरणकाले हि यावन्त्यनारब्धफलानि सञ्चितानि तानि निखिलान्येवाऽभिव्यक्तानि भवन्ति प्राक् तु मरणकालादारब्धफलेन कर्मणा प्रतिबद्धानां न तेषामभिव्यक्तिः । तच्च

भा० करोति। तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति, तस्मिन्नायुषि तेनैव कर्मणा भोगः सम्पद्यत इति असौ कर्माशयो जन्मायुर्भोगहेतुत्वात् त्रिविपाकोऽभिधीयत इति । अत एकभविकः कर्माशय उक्त इति ।

---

टी० प्रघट्टकेन = युगपत्, संमूर्छितः = जन्मादिलक्षणे कार्य्ये कर्त्तव्य एकलोलीभावमापन्न एकमेव जन्म करोति, नाऽनेकम् । तच्च जन्म = मनुष्यादिभावः, तेनैव कर्मणा लब्धायुष्कं = कालभेदान्नियतजीवनं च भवतीति, तस्मिन्नायुषि तेनैव कर्मणा भोगः = सुखदुःखसाक्षात्कारः स्वसंबन्धितया संपद्यत इति । तस्मादसौ कर्माशयो जात्यायुर्भोगहेतुत्वात् त्रिविपाकोऽभिधीयते। औत्सर्गिकमुपसंहरति "अत एकभविकः कर्माशय उक्त" इति । एको भव एकभवः। "पूर्वकालैक" इत्यादिना समासः। एकभवोऽस्यास्तीति मत्वर्थीयष्ठन्। कचित्पाठ "ऐकभविक" इति तत्रैकभवशब्दाद् भवार्थे ठक् प्रत्ययः। एकजन्मावच्छिन्नमस्य भवनमित्यर्थः। तदेवमौत्सर्गिकैकभविकस्य त्रिविपाकत्वमुक्त्वा दृष्टजन्मवेदनीयस्यैहिकस्य कर्मणस्त्रिविपाकत्वं व्यवच्छि-

---

टि० मरणमविशेषाद् अखिलाऽभुक्तकर्माऽभिव्यञ्जकम् । न हि साधारणे निमित्ते नैमित्तिकमऽसाधारणं भवितुमर्हति । न हि समाने प्रदीपाऽभ्यासे घटोऽभिव्यज्यते, न पट इति साम्प्रतम् । नन्विष्टादिकारिणां धूमादिवर्त्मना चन्द्रमण्डलमारूढानां भुक्तभोगानां ततः प्रत्यवरोहणं छान्दोग्य आम्नायते "यावत्सम्पातमुषित्वाऽथैतमेवाऽध्वानं पुनर्निवर्त्तन्ते" इत्यादिना । आवर्त्तमानानां च तेषां "तद् य इह रमणीयचरणा" इत्यादिना जन्माऽऽम्नायते । तदेतदुभयमैकभविकत्वे कर्माशयस्य न सङ्गच्छेत । मरणस्य निखिलकर्माऽभिव्यञ्जकत्वेन निखिलकर्मसन्निधाने एकप्रघट्टकेन मिलित्वा दैवशरीरोपजनोपभोगम्प्रदाय कर्मणां क्षीणत्वाज्जन्मान्तरनिमित्तकर्मशेषाऽभावाद्, "वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपाऽऽयुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते" इत्यापस्तम्बेन. स्पष्टमेव शेषकर्मसद्भावाऽभिधानाच्चेति चेन्नैष दोषः । नियतविपाकस्थल एवैकभविकत्वस्वीकाराद् ऐकभविकत्वस्य क्वाचित्कत्वात् । एतच्चात्रैवाऽनुपदं विस्पष्टयिष्यते भाष्यकारैः । यत्तु विज्ञानभिक्षुणा-स्वर्गादिशरीरे धर्मानुत्पत्तेः प्राचीनसर्वकर्मणां च तत्रैव समापनात्स्वर्गनारकिणां पुनर्जन्मादि न स्याद् इत्याऽऽशङ्क्य, स्वर्गादिजनककर्मणां ब्राह्मणस्थावरादियोनिलाभपर्य्यन्तं फलश्रवणाद् - इति समाहितम् तच्छारीरकीयरंहातिपादशाङ्करभाष्याऽनध्ययनविजृम्भितमेव । यतस्तत्र "यदि हि स्वर्गहेतुकर्मशेषादवरोहः स्यात्तदा रमणीय एवैकोऽनुशयः स्यान्न कपूय इति । एवं चाऽवरोहतां कपूयचरणात् कपूययोन्यापादकं शास्त्रं कदर्थितं स्याद्" इत्यादिनैतन्मतस्योन्मूलितत्वात् ।

भा० दृष्टजन्मवेदनीयस्त्वेकविपाकारम्भी भोगहेतुत्वाद् , द्विविपाकारम्भी वाऽऽयुर्भोगहेतुत्वाद् , नन्दीश्वरवन्नहुषवद्वा इति । क्लेशकर्मविपाकानुभवनिमित्ताभिस्तु वासनाभिरनादिकालसंमूर्छितमिदं चित्तं चित्रीकृतमिव सर्वतो मत्स्यजालं ग्रन्थिभिरिवाततमित्येता अनेकभवपूर्विका वासनाः। यस्त्वयं कर्माशय एष एवैकभविक उक्त इति । ये संस्काराः स्मृतिहेतवस्ता वासनास्ताश्चाऽनादिकालीना इति । यस्त्वसावैकभविकः कर्माशयः स नियतविपाकश्चानियतविपाकश्च । तत्र दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवाऽयं नियमो, न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य । कस्माद्, यो ह्यदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतिः-कृतस्याऽविपक्वस्य* नाशः, प्रधानकर्मण्यावापगमनं वा, नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा

टी०नात्ति।"दृष्ट" इति। नन्दीश्वरस्य खल्वष्टवर्षाऽवच्छिन्नायुषो मनुष्यजन्मनस्तीव्रसंवेगाधिमात्रापायजन्मा पुण्यभेद आयुर्भोगहेतुत्वाद् द्विविपाको, नहुषस्यतुपार्ष्णिप्रहारविरोधिनाऽगस्त्यस्येन्द्रपदप्राप्तिहेतुनैव कर्मणाऽऽयुषो विहितत्वादपुण्यभेदो भोगमात्रहेतुः । ननु यथैकभविकः कर्माशयस्तथा किं क्लेशवासना, भोगानुकूलाश्च कर्मविपाकाऽनुभववासनाः । तथा च मनुष्यस्तिर्य्यग्योनिमापन्नो न तज्जातीयोचितं भुञ्जीतेत्यत आह "क्लेशकर्म" इति। संमूर्च्छितम् = एकलोलीभावमापन्नम् । धर्माऽधर्माभ्यां व्यवच्छेत्तुं वासनायाः स्वरूपमाह " ये संस्कारा" इति । औत्सर्गिकमैकभविकत्वं क्वचिदपवदितुं भूमिकामारचयति "यस्त्वसौ" इति । तु—शब्देन वासनातो व्यवच्छिनत्ति । दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवाऽयम् = एकभविकत्वनियमो, न त्वदृष्टजन्मवेदनीयस्य । किम्भूतस्य अनियतविपाकस्येति । हेतुं पृच्छति । "कस्माद्" इति । हेतुमाह "यो हि" इति । एकां तावद् गतिमाह "कृतस्य" इति । द्वितीयामाह "प्रधान" इति । तृतीयामाह "नियत" इति । तत्र प्रथमां विभजते "तत्र कृतस्य" इति। संन्यासिकर्मभ्योऽशुक्लाऽकृष्णेभ्योऽन्यानि त्रीण्येव कर्माणि

*अदत्तफलस्य ।

भा० चिरमवस्थानमिति । तत्र कृतस्याविपक्वस्य नाशो यथा शुक्लकर्मोदयादिहैव नाशः कृष्णस्य । यत्रेदमुक्तं, "द्वे द्वे ह वै कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽपहन्ति । तदिच्छस्व कर्माणि सुकृतानि कर्तुमिहैव ते कर्म कवयो वेदयन्ति"

टी० कृष्णशुक्लकृष्णाशुक्लानि । तादिह तपःस्वाध्यायादिसाध्यः शुक्लकर्माशय उदित एवाऽदत्तफलस्य कृष्णस्य नाशकः । अविशेषाच्च शबलस्यापि[१] कृष्णभागयोगादिति मन्तव्यम् । तत्रैव भगवानाम्नायमुदाहरति "यत्रेदम्" इति । द्वे द्वे ह वै कर्मणी = कृष्णकृष्णशुक्ले[२], अपहन्तीति सम्बन्धः । वीप्सया भूयिष्ठता सूचिता । कस्येत्यत आह "पापकस्य" इति । पापकस्य पुंस इत्यर्थः । कोऽसावपहन्तीत्यत आह "एको राशिः पुण्यकृतः" इति । समूहस्य समूहिसाध्यत्वात् । तदनेन शुक्लः कर्माशयस्तृतीय उक्तः । एतदुक्तं भवति । ईदृशो नामाऽयं परपीडादिरहितसाधनसाध्यः शुक्लः कर्माशयः । यदेकोऽपि सन् कृष्णान् कृष्णशुक्लांश्चात्यन्तविरोधिनः कर्माशयान् भूयसोऽपि हन्ति । तत् = तस्माद्, इच्छस्वेति छान्दसत्वादात्मनेपदम् । शेषं सुगमम् । अत्र च शुक्लकर्मोदयस्यैव स कोऽपि महिमा यत इतरेषामभावो, न तु स्वाध्यायादिजन्मनो दुःखात् । न हि दुःखमात्रविरोध्यधर्मोऽपि तु स्वकार्य्यदुःखविरोधी[३], न च स्वाध्यायादिजन्यं दुःखं तत्कार्य्यं, तत्कार्य्यत्वे स्वाध्यायादिविधानानर्थक्यात् । तद्बलादेव[४] तदुत्पत्तेः । अनुत्पत्तौ वा कुम्भीपाकाद्यपि विधीयते अविधाने तदनुत्पत्तेरिति सर्वं चतुरस्रम्[५] । द्वितीयां गतिं विभजते ।

टि० (१) शबलस्य=यागीयहिंसादक्षिणादिजन्यः पुण्यपापात्मकः शुक्लकृष्णः कर्माशयः शबल इत्युच्यते । तस्याऽपि स्वाध्यायादिजन्यः शुक्लः कर्माशयो नाशक इत्यर्थः । तत्र हेतुमाह='कृष्णभागयोगात्'=पापसंवलितत्वादित्यर्थः ।

(२) कृष्णशुक्ले इति कर्मकारकम् । एवं च पापकस्य पुरुषस्य ये कृष्णकृष्णशुक्ले कर्मणी ते स्वाध्यायादिजन्यपुण्यसमूहोऽपहन्तीत्यर्थो बोध्यः ।

(३) हि यतो न दुःखभोगमात्रनाश्योऽधर्मोऽपि त्वधर्मजनितदुःखभोगनाश्योऽतो न स्वाध्यायादिजन्यदुःखाद् अधर्मनाशः किन्तु स्वाध्यायजन्यशुक्लकर्मोदयादेव तन्नाश इति भावः ।

(४) तद्बलादेव=अधर्मबलादेव तदुत्पत्तेः=स्वाध्यायाद्युत्पत्तेरित्यर्थः । विपक्षे बाधकमाह । अनुत्पत्तौ वेति ।

(५) विज्ञानभिक्षुस्तु 'द्वे द्वे ह वै" इतीमां श्रुतिमन्यथैव व्याचष्ट । तथा हि पुण्यपाप

भा० प्रधानकर्मण्यावापगमनम् = यत्रेदमुक्तं-"स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः। कुशलस्य नाऽपकर्षायाऽलं, कस्मात्, कुशलं हि मे बह्वन्यदस्ति यत्राऽयम वापं गतः स्वर्गेऽपि अपकर्षमल्पं करिष्यति" इति ।

टी० "प्रधान" इति। प्रधाने कर्मणि ज्योतिष्टोमादिके तदङ्गस्य पशुहिंसादेरावापगमनम्,(१) द्वे खलु हिंसादेः कार्य्ये, प्राधानाङ्गत्वेन विधानात् तदुपकारः, "न हिंस्यात्सर्वा भूतानि" इति हिंसायाः निषिद्धत्वादनर्थश्च। तत्र प्रधानाङ्गत्वेनाऽनुष्ठानादप्रधानैतैवेत्यतो न द्रागित्येव प्रधाननिरपेक्षा सती स्वफलमनर्थं प्रसोतुमर्हति, किन्त्वारब्धविपाके प्रधाने साहायकमाचरन्ती व्यवतिष्ठते, प्रधानसाहायकमाचरन्त्याश्च स्वकार्य्ये बीजमात्रतयाऽवस्थानं प्रधाने कर्मण्यावापगमनम्। "यत्रेदमुक्तं" पञ्चशिखेन—स्वल्पः सङ्करः = ज्योतिष्टोमादिजन्मनः प्रधानाऽपूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण। सपरिहारः = शक्यो हि कियता प्रायश्चित्तेन परिहर्तुम्। अथ प्रमादतः प्रायश्चित्तमपि नाऽऽचरितं प्रधानकर्मविपाकसमये विपच्यते, तथाऽपि यावन्तमसावनर्थं प्रसूते तावान् सप्रत्यवमर्षः। मृष्यन्ते हि पुण्यसंभारोपनीतसुखसुधामहाह्रदाऽवगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्। अतः कुशलस्य = महतः पुण्यस्य, नाऽपकर्षाय = प्रक्षयाय, अलं = पर्य्याप्तः। पृच्छति "कस्माद्" इति। उत्तरं "कुशलम्" इति। कुशलं हि मे = पुण्यवतो वह्वन्यदस्ति = प्रधानकर्मविपाकतया व्यवस्थितं दीक्षणीयादि दक्षिणान्तं, यत्राऽयं = संकरः स्वल्पः, स्वर्गेऽपि = अस्य फले, सङ्कीर्ण्णपुण्यलब्धजन्मनः स्वर्गात् सर्वथा दुःखेनापरामृष्टादूअपकर्षम् अल्पम् = अल्पदुःखसंभेदं करिष्यतीति । तृतीयां

टि० रूपे द्वे कर्मणी वेदितव्ये=अवधारयितव्ये इत्यर्थः। यतः पुण्यकृतः=पुण्यनिर्मित, एको=मुख्यो राशिः, पापकस्य=पापराशेरपहन्ति, चौरस्य निहन्तीतिवत्कर्मणि षष्ठी। तस्मात्सुकृतानि कर्माणि कर्त्तुमिच्छस्व, तच्च कर्म इह लोक एव ते=तुभ्यं, कवयो वेदयन्ति=प्रतिपादयन्ति, न तु लोकान्तर इति श्रुत्यर्थ इति। परन्तु कृष्णशुक्लकृष्णशुक्लभेदेन कर्मणां त्रैविध्येन द्वैविध्याऽवधारणमसमञ्जसमिवाभाति, अत एवाऽस्वरसाद् वाचस्पतिमिश्रैः कर्मणी इति कर्मकारकमाश्रित्य व्याख्यातमिति प्रतिपद्ये। (१) यथा धान्यवीजैः सहोत्पन्नानां तृणवीजानां तैः सहैव कुसूलमध्यस्थापिनां धान्यवीजैः सहैव वपनप्राप्तिर्न स्वातन्त्र्येण तद्वत्प्रधानयागाङ्गतयाऽनुष्ठितानां पशुहिंसादीनां यत् स्वातन्त्र्येण फलदानासामर्थ्यम्, प्रधानकर्मविपाकसमये च फलोन्मुखत्वं तदाऽऽवापगमनम्। तदेव विशदयति—द्वे इत्यादिनाऽऽवापगमनमित्यन्तेन ।

भा० "नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानम्, = कथमिति, अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्मणः समानं मरणमभिव्यक्तिकारणमुक्तं, नत्वदृष्टजन्मवेदनीयस्याऽनियतविपाकस्य। यत्त्वदृष्टजन्मवेदनीयं कर्मानियतविपाकंतन्नश्येद्, आवापं वा गच्छेद्, अभिभूतं वा चिरमप्युपासीत[१] यावत्समानं कर्माऽभिव्यञ्जकं निमित्तस्य न विपाकाऽभिमुखं करोति इति। तद्विपाकस्यैव देशकालनिमित्ताऽनवधारणादियं कर्मगतिर्विचित्रा दुर्विज्ञाना चेति। नचोत्सर्गस्याऽपवादान्निवृत्तिरिति एकभविकः कर्माशयोऽनुज्ञायत[२] इति ॥ १३ ॥

टी० गतिं विभजते "नियत" इति। बलीयस्त्वेनेह प्राधान्यमभिमतं, नत्वङ्गितया। बलीयस्त्वं च नियतविपाकत्वेनाऽन्यदाऽनवकाशत्वाद्, अनियतविपाकस्य तु दौर्बल्यमन्यदा साऽवकाशत्वात्। चिरमवस्थानं बीजभावमात्रेण न पुनः प्रधानोपकारितया। तस्य स्वतन्त्रत्वाद्। ननु प्रायणेनैकदैव कर्माशयोऽभिव्यज्यते इत्युक्तमिदानीं च चिराऽवस्थानमुच्यते तत्कथं परं पूर्वेण न विरुध्यत इत्याशयवान् पृच्छति "कथम्" इति। उत्तरम् "अदृष्ट" इति। जात्यभिप्रायमेकवचनम्। तदितरस्य गतिमुक्तामवधारयति "यत्त्वदृष्ट" इति। शेषं सुगमम् ॥ १३ ॥

टि० (१) नियतविपाकेन बलीयसा कर्मान्तरेण प्रतिबद्धं बहुकालमवतिष्ठेत इत्यर्थः। अवस्थानस्याऽवधिमाह-यावत्समानमिति। समानम्=एतदविरुद्धं, कर्माभिव्यक्तिनिमित्तं यावन्न फलोन्मुखीकरोति तावदित्यर्थः, उपलक्षणं चैतद्, बलीयःकर्मभोगपर्य्यन्तं वेत्यस्याऽपि। तथा च स्मर्य्यते "कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति। मज्जमानस्य संसारे यावद् दुःखाद्विमुच्यते" इति। एतादृशकर्मविपाकाऽभिप्रायेणैव, विचित्रा कर्मगतिरित्यादिवचनानीत्याह "तद्विपाकस्य" = अभिभूतकर्मविपाकस्येत्यर्थः।

(२) एतेन 'यदि च कृत्स्नमारब्धफलं कर्मैकस्मिन् प्रायणेऽभिव्यक्तं सदेकामुत्तरां जातिमारभेत तदा स्वर्गनरकतिर्य्यग्योनिगतानां जन्तूनां तस्मिन् जन्मनि कर्मस्वनधिकारान्नाऽपूर्वकर्मोपजनः, पूर्वकृतस्य कर्मणः प्रायणाऽभिव्यक्ततया फलोपभोगेन प्रक्षयान्नास्ति कर्माशय, इति न ते संसरेयुः, न च ते मुच्येरन्नात्मज्ञानाऽभावाद् इति कष्टान्त आविष्टा दशाम्' इत्यादिदोषाणां नात्र प्रसर इति ध्वन्यते। पूर्वोक्तदोषादेव नियतविपाकस्थल एवैकभविकत्वाऽभ्युगमेनैतस्य मतस्यौत्सर्गिकत्वाऽभ्यनुज्ञानेनाऽसार्वत्रिकत्वेन दोषाऽभावादिति विदांकुर्वन्त्वन्तर्वाणयः।

सू० ते ह्लादपरितापफलाः पुण्याऽपुण्यहेतुत्वात्॥१४॥

भा० ते = जन्मायुर्भोगाः, पुण्यहेतुकाः सुखफला, अपुण्यहेतुका दुःखफला इति। यथा चेदं दुःखं प्रतिकूलात्मकमेवं विषय-सुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः[१] ॥१४॥

कथन्तदुपपद्यते[२]।

सू० परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च* दुःखमेव सर्वं विवेकिनः ॥ १५ ॥

टी० उक्तं क्लेशमूलत्वं कर्मणः, कर्ममूलत्वञ्च विपाकानाम्। अथ विपाकाः कस्य मूलं येनाऽमी त्यक्तव्या इत्यत आह "ते ह्लादपरितापफलाः पुण्याऽपुण्यहेतुत्वाद्" इति ॥१४॥ सूत्रं व्याचष्टे "ते जन्मायुर्भोगा" इति। यद्यपि जन्माऽऽयुषोरेव ह्लादपरितापपूर्वभावितया तत्फलत्वं, न तु भोगस्य ह्लादपरितापोदयाऽनन्तरभाविनस्तदनुभवात्मनः, तथाप्यनुभाव्यतया भोगतया भोगकर्मतामात्रेण भोगफलत्वमिति मन्तव्यम्। नन्वपुण्यहेतुका जात्यायुर्भोगाः परितापफला भवन्तु हेयाः प्रतिकूलवेदनीयत्वात्, कस्मात्पुनः पुण्यहेतवस्त्यज्यन्ते सुखफला अनुकूलवेदनीयत्वात्। नचैषां प्रत्यात्मवेदनीयाऽनुकूलता शक्या सहस्रेणाप्यनुमानागमैरपाकर्तुम्। न च ह्लादपरितापौ परस्पराऽविनाभूतौ। यतो ह्लाद उपादीयमानेऽवर्जनीयतया परितापोऽप्यापतेत्। तयोर्भिन्नहेतुकत्वाद्, भिन्नरूपत्वाच्चेत्यत आह "यथा चेदम्" इति। यद्यपि न पृथग्जनैः प्रतिकूलात्मतया विषयसुखकाले संवेद्यते दुःखं, तथाऽपि योगिभिस्तत्संवेद्यत इति ॥१४॥ प्रश्नपूर्वकं तदुपपादनाय सूत्रमवतारयति "कथन्तदुपपद्यत" इति। "परिणामेत्यादि-विवेकिन" इत्यन्तं सूत्रम् ॥१५॥ परिणा-

टि० [१] यथा चेदं = सर्वजनसंवेद्यमाध्यात्मिकादिदुःखं प्रतिकूलात्मकमेवं विषयजनितसुखाऽनुभवसमयेऽपि योगिनः प्रतिकूलात्मकं सूक्ष्मं दुःखमस्त्येवेत्यर्थः।

[२] विषयसुखकालेऽपि योगिभिर्दुःखं संवेद्यत इति यदुक्तं तत्कथमुपपद्यते = कयोपपत्त्याऽवधारयितुं शक्यत इत्यर्थः। * इत्थंभूतलक्षणे तृतीया।

भा० सर्वस्याऽयं रागानुविद्धश्चेतनाऽचेतनसाधनाऽधीनः[१] सुखाऽनुभवइति तत्रास्ति रागजः कर्माशयः। तथाचद्वेष्टि दुःखसाधनानि मुह्यति चेतिद्वेषमोहकृतोऽप्यस्ति कर्माशयः। तथाचोक्तम्। नाऽनुपहत्य भूतान्युपभोगः संभवतीति हिंसाकृतोऽप्यस्ति शारीरः

टी० मश्च तापश्च संस्कारश्च एतान्येव दुःखानि तैरिति। परिणामदुःखतया विषयसुखस्य दुःखतामाह। "सर्वस्याऽयम्" इति। न खलु सुखं रागाऽनुवेधमन्तरेण संभवति न ह्यस्ति सम्भवो न तत्र तुष्यति तच्च तस्य सुखमिति। रागस्य च प्रवृत्तिहेतुत्वात्प्रवृत्तेश्च पुण्याऽपुण्योपचयकारित्वात् तत्राऽस्ति रागजः कर्माशयः, असतोऽनुपजननात्। तदा च सुखम्भुञ्जानस्तत्र सक्तो विच्छिन्नाऽवस्थेन द्वेषेण द्वेष्टि दुःखसाधनानि, तानि परिहर्त्तुमशक्तो मुह्यति च इति द्वेषमोहकृतोऽप्यस्ति कर्माशयः। द्वेषवन्मोहस्यापि विपर्ययाऽपरनाम्नः कर्माशयहेतुत्वमविरुद्धम्। ननु कथं रक्तो द्वेष्टि मुह्यति वा रागकाले द्वेषमोहयोरदर्शनादित्यत आह "तथाचोक्तम्" इति। विच्छिन्नाऽवस्थान् क्लेशानुपपादयद्भिरस्माभिः(२)। तदनेन वाङ्मनसप्रवृत्तिजन्मनी पुण्याऽपुण्ये दर्शिते इति रागादिजन्मनः कर्तव्यमिदमिति मानसस्य संकल्पस्य साऽभिलाषत्वेन वाचनिकत्वस्याऽप्यऽविशेषाद्। यथाहुः "साऽभिलाषश्च सङ्कल्पो वाच्यार्थान्नाऽतिरिच्यत" इति। शारीरमपि कर्माशयं दर्शयति "नाऽनुपहत्य" इति। अत एव धर्मशास्त्रकाराः- "पञ्चसूना गृहस्थस्य(३)" इत्याहुः। स्यादेतत्। न प्रत्यात्मवेद-

टि० [१] कलत्रमित्रपुत्राऽर्थगृहक्षेत्रधनादिसाधनाऽधीन इत्यर्थः।

[२] यथा च रागकालेऽपि विच्छिन्नाऽवस्थापन्नौ द्वेषमोहौ स्तस्तथोक्तमस्माभिरिति[४] सूत्र इत्यर्थः। तथा चोक्तम् इत्यस्य "यथा सुखस्य रागाऽनुविद्धत्वं तथा मयोक्तं "सुखाऽनुशयी राग" इति सूत्रे सुखाऽभिज्ञस्येत्यादिभाष्येणेत्यर्थ इति तु विज्ञानभिक्षुः। संभवेदयमप्यर्थो यदि नाम रागजः कर्माशय इत्युत्तरं तथा चोक्तमित्युच्येत, उच्यते तु द्वेषमोहकृतोऽपि कर्माशयोऽस्तीत्युत्तरम्, इति वाचस्पत्यार्थ एवानघ इति प्रतिभाति।

[३] "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च बद्ध्यते यास्तु वाहयन्" इति संपूर्णं मानवं वचनम्। मांसविक्रयार्थं पशुवधस्थानं सूना। चुल्ल्यादयोऽपि हिंसागुणयोगात्सूना इव सूनाः। या वाहयन् = स्वकार्येण योजयन् पुरुषो बध्यते = दुष्कृतेन संबध्यते ताश्चुल्ल्यादयः पञ्च सूना इत्यर्थः।

भा० कर्माशय इति, विषयसुखं चाऽविद्येत्युक्तम्। या भोगेष्विन्द्रियाणां तृप्तेरुपशान्तिस्तत्सुखं या लौल्यादनुपशान्तिस्तद्दुःखम् नचेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्त्तुं शक्यम्। कस्माद्, यतो भोगाऽभ्यासमनु विवर्द्धन्ते रागाः, कौशलानि चेन्द्रियाणामिति, तस्मादनुपायः सुखस्य भोगाऽभ्यास इति। स खल्वयं वृश्चिकविषभीत इवाऽऽशीविषेण दष्टो यः सुखार्थी विषयानुवासितो महति दुःखपङ्के निमग्न[१] इति। एषा परिणामदुःखता नाम प्रतिकूला सुखावस्थायामपि योगिनमेव क्लिश्नाति[२]। अथ का तापदुःखता

---

टी० नीयस्य विषयसुखस्य प्रत्याख्यानमुचितं योगिना। अनुभवविरोधादित्यत आह। "विषयसुखं चाऽविद्येत्युक्तम्" इति। चतुर्विधविपर्यासलक्षणामविद्यां दर्शयद्भिः[३] इति। नाऽऽपातमात्रमा[४] द्रियन्ते वृद्धा, अस्ति खल्वापाततो मधुविषसम्पृक्ताऽन्नोपभोगेऽपि सुखाऽनुभवः प्रत्यात्मवेदनीयः, किन्त्वायत्याम[५] सुखम्। इत्थं च दर्शितं भगवतैव—"विषयेन्द्रियसंयोगाद् यत्तदग्रेऽमृतोपमम्। परिणामे विषमिव तत्सुखं राजसं स्मृतम्" इति। चोदयति "या भोगेषु" इति। न वयं विषयाऽऽह्लादं सुखमातिष्ठामेह, किन्त्वतृप्यतां पुसां तत्तद्विषयप्रार्थनया परिक्लिष्टचेतसां तृष्णैव महद् दुःखं, नचेयमुपभोगमन्तरेण शाम्यति, न चाऽस्याः प्रशमो रागाद्यनुविद्ध, इति नाऽस्य परिणामदुःखतेति भावः। तृप्तेः = तृष्णाक्षयाद् हेतोः,

---

टि०(१) विषयाऽनुवासितः=विषयवासनासंवलितः। यः खलु भोगाऽभ्यासेन वैतृष्ण्यं संपिपादयिषति स वृश्चिकभीत आशीविषेण दष्ट इव महति दुखःपङ्के निमग्न इति भाष्यार्थः।

(२) या एषा परिणामदुःखताऽयोगिनं प्रति परिणामकाले प्रतिकूला, सा योगिनं तु सुखाऽवस्थायामपि क्लिश्नाति=अनर्थहेतुदर्शनेन दुःखाकरोतीत्यर्थः। (३) उक्तमित्यनेनाऽऽकाङ्क्षितं पूरयति "चतुर्विध" इत्यादिना। दर्शयद्भिरित्यस्याग्रेऽस्माभिरिति पूरणीयम्।

(४) आपातमात्रं=तात्कालिकरम्यम्, अविचारितरमणीयं विषयसुखं वृद्धा नाद्रियन्त इत्यर्थः। आदरणे बाधकमाह "अस्ति" इत्यादिना। (५) आयत्याम्=परिणामकाले।

भा०सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाऽधीनस्तापाऽनुभवइति तत्राऽस्ति द्वेषजः कर्माशयः, सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा परिस्पन्दते[१]। ततः परमनुगृह्णात्युपहन्ति च, इति पराऽनुग्रहपीडाभ्यां धर्माऽधर्मावुपचिनोति, स कर्माशयो[२] लोभान्मोहाच्च भवति,इत्येषा तापदुःखतोच्यते। का पुनःसंस्कार-दुःखता। सुखाऽनुभवात् सुखसंस्काराऽऽशयो, दुःखाऽनुभवादपि दुःखसंस्काराशय इति। एवं[३] कर्मभ्यो विपाकेऽनुभूयमाने सुखे दुःखे वा पुनः कर्माशयप्रचय इति। एवमिदमनादि दुःखस्रोतो विप्रसृतं योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति। कस्माद् अक्षि-पात्रकल्पो[४] हि विद्वानिति। यथोर्णातन्तुरक्षिपात्रे न्यस्तःस्पर्शेन

टी० इन्द्रियाणामुपशान्तिः = अप्रवर्त्तनं विषयेष्वित्यर्थः। एतदेव व्यतिरे-कमुखेन स्पष्टयति "या लौल्याद्" इति। परिहरति "न चेन्द्रियाणाम्" इति। हेतावनोः प्रयोगः सत्यं तृष्णाक्षयः सुखमनवद्यं, तस्य तु न भोगा-ऽभ्यासो हेतुरपि तु तृष्णाया एव तद्विरोधिन्याः। यथाहुः "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाऽभि-वर्द्धते" इति। शेषमतिरोहितम्। तापदुःखतां पृच्छति—"अथ का" इति। उत्तरमाह—"सर्वस्य" इति। सर्वजनप्रसिद्धत्वेन तत्स्वरूपप्रपञ्चम-कृत्वा तापदुःखताऽपि परिणामदुःखतासमतया[५] प्रपञ्चितेति। संस्कारदुः-खतां पृच्छति का इति। उत्तरं "सुखानुभव" इति। सुखानुभवो हि संस्कार-

टि० (१) चेष्टते इत्यर्थः। (२) स कर्माशयः=सन्तापकालिकः कर्माशय इत्यर्थः। (३) ज्ञानसंस्काराद् दुःखं प्रतिपाद्य धर्माऽधर्मरूपकर्मसंस्कारादपि दुःखं प्रतिपादयति "एवं कर्मभ्य" इति। कर्मभ्यः सुखे दुःखे वा विपाकेऽनुभूयमाने सति पुनः कर्माशयप्रचय इत्यन्वयः। (४) अक्ष्णः पात्रम्=आधारः, गोलकमिति यावत्, तस्मादीषदूनो विद्वान् इत्यर्थः चक्षुर्गोलकतुल्यः सूक्ष्म इति फलितार्थः। (५) परिणामदुःखतासमतया=एतेन परिणामदुःख-तायद्यप्यत्राऽपि समाना तथाऽपि पूर्वकाल उत्तरकाले च सर्वदैव दुःखत्वात् तापदुःखतायाः परिणामदुःखतायाः पृथङ्निर्देश इति सूचितम्।

भा॰ दुःखयति नाऽन्येषु गात्राऽवयवेषु एवमेतानि दुःखानि अक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरं प्रतिपत्तारम्। इतरं तु स्वकर्मोपहृतं दुःखमुपात्तमुपात्तं त्यज्यन्तं त्यक्तं त्यक्तमुपाददानमनादिवासनाविचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिवाऽविद्यया हातव्य एवाऽहङ्कारममकाराऽनुपातिनं जातं जातं बाह्याऽध्यात्मिकोभयनिमित्तास्त्रिपर्वाणस्तापा अनुप्लवन्ते। तदेवमनादिदुःखस्रोतसा व्यूह्यमानमात्मानं भूतग्रामं च दृष्ट्वा योगी सर्वदुःखक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यत इति। गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रीभूत्वा शान्तं घोरं मूढं वा प्रत्ययं त्रिगुणमेवाऽऽरभन्ते चलं च गुणवृत्तमिति

---

टी॰ माधत्ते, स च सुखस्मरणं, तच्च रागं, सच मनःकायवचनचेष्टां, सा च पुण्याऽपुण्ये, ततो विपाकाऽनुभवस्ततो वासनेत्येवमनादिता इति। अत्र च सुखदुःखसंस्काराऽऽशयात्तत्स्मरणं, तस्माच्च रागद्वेषौ, ताभ्यां कर्माणि, कर्मभ्यो विपाक, इति योजना। तदेवं दुःखस्रोतः प्रसृतं योगिनमेव क्लिश्नाति नेतरं पृथग्जनमित्याह- "एवमिदमनादि" इति। इतरं तु त्रिपर्वाणस्तापा अनुप्लवन्त[१] इति सम्बन्धः। आधिदैविकाधिभौतिकयोस्तापयोर्बाह्यत्वेनैकत्वं विवक्षितम्। चित्ते वृत्तिरस्या इत्यविद्या चित्तवृत्तिः। तया हातव्यएव—बुद्धीन्द्रियशरीरादौ दाराऽपत्यादौ चाहङ्कारममकाराऽनुपातिनामिति। तदत्र न सम्यग्दर्शनादन्यत्परित्राणमस्तीत्याह- "तदेवम्" इति। तदेवमौपाधिकं विषयसुखस्य परिणामतः संस्कारतस्तापसंयोगाच्च दुःखत्वमभिधाय स्वाभाविकमादर्शयति " गुणवृत्तिविरोधाच्च इति। व्याचष्टे प्रख्या इति प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिरूपेण परिणता गुणाः= सत्त्वरजस्तमांसि परस्पराऽनुग्रहतन्त्राः शान्तं=सुखात्मकं, घोरं=दुखात्मकं, मूढं=विषादात्मकमेव प्रत्ययं=सुखोपभोगरूपमपि त्रिगुणमारभन्ते। न च सोऽपि

---

(१) इतरन्तु=योगिभिन्नं प्राकृतं जनन्तु, त्रिपर्वाणः=त्रीणि—आध्यात्मिकाऽऽधिभौतिकाऽऽधिदैविकरूपाणि पर्वाणि येषां ते तापा, अनु = स्रोतपत्त्यनन्तरं वर्तमानकाल एव, प्लवन्ते= व्याप्नुवन्ति, न तु योगिवत् परिणामदुःखदृष्ट्या ततः पूर्वमित्यर्थः। यथा योगिना विषयसुखाऽनुभवकाले दुःखं संवेद्यते न तथाऽयोगिना तत्कालेसंवेद्यते, किन्तु दुःखप्राप्तिसमय एवेति भावः। भाष्ये स्वकर्मोपहृतमित्यादीनि जातमित्यन्तानि इतरमित्यस्य विशेषणानि।

भा० क्षिप्रपरिणामि चित्तमुक्तम्। रूपाऽतिशया वृत्त्यतिशयाश्च परस्परेण विरुद्ध्यन्ते सामान्यानि त्वतिशयैः सह प्रवर्त्तन्ते। एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्वरूपा भवन्ति गुणप्रधानभावकृतस्त्वेषां विशेष इति। तस्माद्दुःखमेव सर्वं विवेकिन इति। तदस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्या, तस्याश्च सम्यग्दर्शनमभावहेतुः, यथा चिकित्साशास्त्रं चतुर्व्यूहं- रोगो रोगहेतुः-आरोग्यं-भैषज्यमिति। एवमिदमपि शास्त्रं चतुर्व्यूहमेव। तद्यथा, संसारः-संसारहेतुः-मोक्षः, मोक्षोपाय इति।

टी० तादृशप्रत्ययरूपोऽस्य परिणामः स्थिर इत्याह "चलञ्च गुणवृत्तमिति क्षिप्रपरिणामिचित्तमुक्तम्" इति। नन्वेकः प्रत्ययः कथं परस्परविरुद्धशान्तघोरमूढत्वान्येकदा प्रतिपद्यत इत्यत आह। "रूपाऽतिशया वृत्त्यातिशयाश्च परस्परेण विरुद्ध्यन्त" इति। रूपाणि = अष्टौ भावाधर्मादयः[१] वृत्तयः-सुखाद्याः। तदिह धर्मेण विपच्यमानेनाऽधर्मस्तादृशो[२] विरुद्ध्यते। एवं ज्ञानवैराग्यैश्वर्य्यैः सुखादिभिश्च तादृशान्येव तद्विपरीतानि[३] विरुद्ध्यन्ते, सामान्यानि तु असमुदाचरद्रूपाण्यतिशयैः समुदाचरद्भिः सहाविरोधात्प्रवर्त्तन्त इति। ननु गृह्णीम एतत्, तथाऽपि विषयसुखस्य कुतः स्वाभाविकी दुःखतेत्याह "एवमेत" इति। उपादानाभेदादुपादानात्मकत्वाच्चोपादेयस्याप्यभेद इत्यर्थः। तत्किमिदानीमात्यन्तिकमेव तादात्म्यं, तथा च बुद्धिव्यपदेशभेदौ* न कल्पेते इत्यत आह "गुणप्रधान" इति। सामान्यात्मना गुणभावोऽतिशयात्मना च प्राधान्यं, तस्मादुपाधितः स्वभावतश्च दुःखमेव सर्वं विवेकिन इति दुःखं हेयं प्रज्ञावताम्। न च तन्निदानहानमन्तरेण तद्धेयं भवितुमर्हति, न चाऽपरिज्ञातं निदानं शक्यं हातुमिति मूलनिदानमस्य दर्शयति "तदस्य" इति। दुःखसमुदायस्य प्रभवः = उत्पत्तिर्यतस्तद्बीजमित्यर्थः। तदुच्छेदहेतुं दर्शयति—'तस्याश्च' इति। इदानीमस्य शास्त्रस्य सर्वानुग्रहाय प्रवृत्तस्य तद्विधेनैव शास्त्रेण सादृश्यं दर्शयति "यथा" इति। चत्वारो व्यूहाः = संक्षिप्ता अवयवरचना यस्य तत्तथोक्तम्।

टि० (१) धर्मादयः=धर्मज्ञानवैराग्यैश्वर्य्याऽधर्माऽज्ञानाऽवैराग्यानैश्वर्य्याण्यष्टावित्यर्थः। (२) तादृशः=उत्कर्षत्वेन विपाकाऽभिमुख इत्यर्थः "समबलयोर्हि विरोध" इति न्यायेनोत्कृष्टस्यैवोत्कृष्टेन विरोधो, न त्वपकृष्टस्येति भावः। (३) तद्विपरीतानि=ज्ञानवैराग्यैश्वर्य्यसुखादिविपरीतानि अज्ञानाऽवैराग्यानैश्वर्य्यदुःखानीत्यर्थः। *इदं सत्त्वं सुखात्मकमिदं रजो दुःखात्मकमित्यादिव्यवहारभेदावित्यर्थः।

भा० तत्र[1] दुःखबहुलः संसारो हेयः, प्रधानपुरुषयोः संयोगो हेय-हेतुः, संयोगस्याऽऽत्यन्तिकी निवृत्तिर्हानं, हानोपायः सम्यग्दर्शनम् । तत्र हातुः स्वरूपमुपादेयं हेयं वा न भवितुमर्हतीति, हाने तस्योच्छेदवादप्रसङ्ग, उपादाने च हेतुवाद, उभयप्रत्याख्याने च शाश्वतवाद इत्येतत् सम्यग्दर्शनम् ॥ १५ ॥

टी० ननु दुःखं हेयमुक्त्वा[2] संसारं हेयमभिदधतः कुतो न विरोध इत्यत आह "तत्र दुःखबहुल" इति। *यत्कृत्वाऽविद्या संसारं करोति तदस्या अवान्तरव्यापारं संसारहेतुमाह "प्रधानपुरुषयोः" इति। मोक्षस्वरूपमाह "संयोगस्य" इति। मोक्षोपायमाह "हानोपाय" इति। केचि[3]त्पश्यन्ति हातुः स्वरूपोच्छेद एव मोक्षः। तथाऽऽहुः "प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिन"† इति। अन्ये[4] तु सवासनक्लेशसमुच्छेदाद्विशुद्धविज्ञानोत्पाद एव मोक्ष इत्याचक्षते, तान् प्रत्याह "तत्र" इति। तत्र हानं तावद् दूषयति "हाने तस्य" इति। न हि कश्चित्प्रेक्षावानात्मोच्छेदाय यतते। ननु दृश्यन्ते तीव्रगदो[5]न्मूलितसकलसुखा दुःखमयीमिव मूर्त्तिमुद्वहन्तः स्वोच्छेदाय यतमानाः। सत्यं, केचिदेव ते[6], नत्वेवं संसारिणो विविधविचित्रदेवाद्यानन्दभोगभागिनः।तेऽपि च मोक्षमाणा दृश्यन्ते।तस्मादपुरुषार्थप्रसक्तेर्न हातुः स्वरूपोच्छेदो मोक्षोऽभ्युपेयः, अस्तु तर्हि हातुः स्वरूपमुपादेयमित्यत आह—"उपादाने च हेतुवाद" इति। उपादाने हि कार्य्यत्वेनाऽनित्यत्वे सति मोक्षत्वादेव च्यवेत। अमृतत्वं हि मोक्षः।नाऽपि विशुद्धो विज्ञानसन्तानो भवत्यमृतः।सन्तानिभ्यो व्यतिरिक्तस्य सन्तानस्यवस्तुसतोऽभावात्, सन्तानिनां चानित्यत्वात्। तस्मात्तथा यतितव्यं यथा शाश्वतवादो भवति।तथा च पुरुषार्थत्वमपवर्गस्येत्याह "उभयप्रत्याख्याने" इति।तस्मात्स्वरूपावस्थानमेवात्मनो मोक्ष इत्येतदेव सम्यग्दर्शनम् ॥ १५ ॥

टि० (१) तत्र चतुर्व्यूहानां मध्ये । (२) सर्वदुःखक्षयकारणं सम्यग् दर्शनं योगी शरणं प्रतिपद्यत इत्यादिना दुःखमेव हेयमित्युक्तप्रायमत उक्त्वेत्युक्तम् । उपलक्षणं चैतद् । अग्रिमसूत्रेण दुःखस्यैव हेयत्वाऽभिधास्यमानत्वादित्यस्याऽपि। * यत्कृत्वा=यद्द्वारा।(३) केचित्=क्षणिकं विज्ञानस्कन्धमात्मत्वेनाऽभ्युपयन्तश्चतुर्विधया भावनया नीलपीताद्युपप्लवसंवलितविज्ञानसन्तानस्य प्रदीपनिर्वाणवदत्यन्तोपरममेव कैवल्यमभीप्सन्तो बौद्धविशेषा योगाचारा इत्यर्थः।† सन्तानिनः, चेतस इति पाठान्तरम्। (४) अन्ये=विधूतविषयाकारोपप्लवविशुद्धविज्ञानसन्तानोदयमेवापवर्गमभिलपन्तो बौद्धभेदा माध्यमिका इत्यर्थः।(५) गदः=रोगः। (६) ये आत्मोच्छेदाय यतमाना दृश्यन्ते ते केचिदेव साहसिका, न तु सर्वे लौकिका इत्यर्थः।तदेवाह "न त्वेवम्" इति।

तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते[१] ।

सू० हेयं दुःखमनागतम् ॥ १६ ॥

भा० दुःखमतीतमुपभोगेनातिवाहितं[२] न हेयपक्षे वर्त्तते । वर्त्तमानं च स्वक्षणे भोगाऽऽरूढमिति न तत् क्षणान्तरे हेयतामापद्यते, तस्माद् यदेवाऽनागतं[३] दुःखं तदेवाऽक्षिपात्रकल्पं योगिनं क्लिश्नाति, नेतरं प्रतिपत्तारम् । तदेव हेयतामापद्यते ॥ १६ ॥

तस्माद् यदेव हेयमित्युच्यते तस्यैव कारणं प्रतिनिर्दिश्यते ।

सू० द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

भा० द्रष्टा=बुद्धेः प्रतिसंवेदी पुरुषः, दृश्याः=बुद्धिसत्त्वोपारूढाः

टी० तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते—"हेयं दुःखमनागतम्" ॥१६॥ अनागतमिति अतीतवर्त्तमाने व्यवच्छिन्ने । तत्रोपपत्तिमाह "दुःखमतीतम्" इति । ननु वर्त्तमानमुपभुज्यमानं न भोगेनाऽतिवाहितमिति कस्मान्न हेयमित्यत आह "वर्त्तमानं च" इति । सुगमम् ॥ १६ ॥

हेयमुक्तं,तस्य निदानमुच्यते "द्रष्टृदृश्ययोः संयोगो हेयहेतुः" ॥ १७ ॥ द्रष्टृस्वरूपमाह "द्रष्टा बुद्धेः प्रतिसंवेदी" इति । चितिच्छायाऽऽपत्तिरेव बुद्धेः बुद्धिप्रतिसंवेदित्वमुदासीनस्यापि पुंसः । नन्वेतावताऽपि बुद्धिरेवानेन दृश्येत, न दृश्येरन् शब्दादयोऽत्यन्तव्यवहिता इत्यत आह "दृश्या बुद्धिसत्त्व" इति । इन्द्रियप्रणालिकया बुद्धौ शब्दाद्याकारेण परिणतायां दृश्यायां भवन्ति शब्दादयोऽपि धर्मा दृश्या इत्यर्थः ।

ननु तदाकाराऽऽपत्त्या बुद्धिः शब्दाद्याकारा भवतु, पुंसस्तु बुद्धि-

टि० (१) यथा च तदेतच्छास्त्रं चतुर्व्यूहं तथा सूत्रकारेण हेयादिक्रमद्वारा प्रतिपाद्यतइत्यर्थः । कुत्रचित्तु—इत्यभिधीयते हेयमिति पठ्यते । एतदनुसारेणैव च वाचस्पत्येऽपि तदेतच्छास्त्रं चतुर्व्यूहमतोऽभिधीयते हेयमित्याह "तदेतच्छास्त्रमिति" इति पठ्यते । परन्त्वयं पाठो योगवार्त्तिककाराऽसम्मतः । (२) अतिवाहितम्=अतिक्रान्तम् । भोगेन नाशितामिति यावद् । (३) नचाऽनागतदुःखसत्त्वे मानाऽभाव इति वाच्यं । तृतीये पादे धर्मिलक्षणसूत्रे (१४) जलभूम्यादिदृष्टान्तैः सर्वत्रैव परिणामित्वस्तुनि कार्य्याऽनागताऽवस्थाऽनुमानस्य वक्ष्यमाणत्वात् ।

भा०सर्वे धर्माः।तदेतद् दृश्यमयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन भवति पुरुषस्य स्वंदृशिरूपस्य स्वामिनः।अनुभवकर्मविषयतामापन्नमन्यस्वरूपेण प्रतिलब्धात्मकं स्वतन्त्रमपि

---

टी०संबन्धेऽभ्युपगम्यमाने परिणामित्वम्, असंबन्धे वा कथं तेषां बुद्धिसत्त्वोपारूढानामपि शब्दादीनां दृश्यत्वम् न हि दृशिनाऽसंस्पृष्टं दृश्यं दृष्टमित्यत आह। "तदेतद् दृश्यम्" इति। प्रपञ्चितमिदमस्माभिः प्रथमपाद एव यथा चित्याऽसम्पृक्तमपि बुद्धिसत्त्वमत्यन्तस्वच्छतया चितिबिम्बोद्ग्राहितया समापन्नचैतन्यमिव शब्दाद्यनुभवतीति[१]। अत एव च शब्दाद्याकारपरिणतबुद्धिसत्त्वोपनीतान् सुखादीन् भुञ्जानः स्वामी भवति द्रष्टा, तादृशं चास्य बुद्धिसत्त्वं स्वं भवति। तदेतद् बुद्धिसत्त्वं शब्दाद्याकारवद् दृश्यमयस्कान्तमणिकल्पं पुरुषस्य स्वं भवति दृशिरूपस्य स्वामिनः। कस्माद्, "अनुभव" इति। अनुभवकर्मविषयतामापन्नं यतः। अनुभवो=भोगः पुरुषस्य, कर्म=क्रिया, तद्विषयताम्=भुज्यमानताम्,आपन्नं यस्मादतः स्वं भवतीत्यर्थः। ननु स्वयंप्रकाशं बुद्धिसत्त्वं कथमनुभवविषय इत्यत आह"अन्यस्वरूपेण" इति। यदि हि चैतन्यरूपं वस्तुतो बुद्धिसत्त्वं स्याद् भवेत् स्वयंप्रकाशं, किन्तु स्वं=चैतन्यादन्यज्जडरूपं तेन प्रतिलब्धात्मकं,तस्मात्तदनुभवविषयः। ननु यस्य हि यत्र किञ्चिदायतते तत् तदधीनं, न च बुद्धिसत्त्वस्य पुरुषमुदासीनं प्रति किञ्चिदायतत इति कथं च तत्तन्त्रं, तथा च न तस्य कर्मेत्यत आह। "स्वतन्त्रमपि"इति। परार्थत्वात्=पुरुषार्थत्वात्,परतन्त्रं=पुरुषतन्त्रम्। नन्वयं दृग्दर्शनशक्त्योः संबन्धः स्वाभाविको वा स्यान्नैमित्तिको वा, स्वाभाविकत्वे संबन्धिनोर्नित्यादशक्योच्छेदःसंबन्धः।तथाच संसारनित्यत्वं, नैमित्तिकत्वे तु क्लेशकर्मतद्वासनानामन्तःकरणवृत्तितया सत्यन्तःकरणे भावादन्तःकरणस्य च तन्निमित्तत्वे परस्पराश्रयप्रसङ्गादनादित्वस्य च सर्गादावसंभवादनुत्पाद एव संसारस्य स्याद्,यथोक्तं-"पुमानकर्त्ता येषान्तु तेषामपि गुणैः क्रिया।कथमादौ भवेत्तत्र कर्म तावन्न विद्यते॥१॥मिथ्याज्ञानं न तत्रास्ति

---

टि० (१) यथा च चित्या सह देशतः कालतो वाऽसंबद्धमपि बुद्धिसत्त्वं योग्यता लक्षणसंबन्धेन समापन्नचैतन्यं सत् शब्दाद्यनुभवति तथा प्रथमपादे, वृत्तिसारूप्यमितरत्रेति सूत्र एव प्रपञ्चितमस्माभिरित्यर्थः।

परार्थत्वात्परतन्त्रम्। तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुः=दुःखस्य कारणमित्यर्थः। तथाचोक्तं—"तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतीकारः" कस्माद्, दुःखहेतोः परिहार्यस्य प्रतीकारदर्शनात्। तद्यथा, पादतलस्य भेद्यता, कण्टकस्य भेत्तृत्वम्। परिहारः—कण्टकस्य पादानधिष्ठानं, पादत्राणव्यवहितेन वाऽधिष्ठानम्। एतत् त्रयं[1] यो वेद लोके स तत्र

टी० रागद्वेषादयोऽपि वा। मनोवृत्तिर्हि सर्वेषां नचोत्पन्नं मनस्तदा॥ २॥ इति शङ्कामपनयति। "तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुः" इति। सत्यं न स्वाभाविकः संबन्धः, नैमित्तिकस्तु। न चैवमादिमान्, अनादिनिमित्तप्रभवतया तस्याऽप्यनादित्वात्। क्लेशकर्मतद्वासनासन्तानश्चाऽयमनादिः, प्रतिसर्गावस्थायां[2] च सहान्तःकरणेन प्रधानसाम्यमुपगतोऽपि सर्गादौ पुनस्तादृगेव भवति, वर्षापाय इवोद्भिज्जभेदो[3] मृद्भावमुपगतोऽपि पुनर्वर्षासु पूर्वरूप इत्यसकृदावेदितं प्राक्। भाविततया[4] संयोगस्याविद्या कारणं, स्थितिहेतुतया पुरुषार्थः कारणं, तद्वशेन तस्य स्थितेः* । तदिदमुक्तम् "अर्थकृत" इति।

"तथा चोक्तम्" इति। पञ्चशिखे न[5]। तत्संयोगः=बुद्धिसंयोगः, स एव हेतुर्दुःखस्य तस्य विवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः, अर्थात् तदवर्जने दुःखमित्युक्तं भवति। तत्रैवाऽत्यन्तप्रसिद्धं निदर्शनमाह "तद्यथा" इति। पादत्राणम् = उपानत्। स्यादेतद्, गुणसंयोगस्तापहेतुरित्युच्यमाने गुणानां तापकत्वमभ्युपेयं, न च तपिक्रियाया अस्त्यादेरिव

टि० (१) एतत् त्रयं=भेद्यभेत्तृतत्प्रतीकाररूपमुपायत्रयमित्यर्थः। एतत् त्रयमित्यादि, सामर्थ्यादितीत्यन्तो ग्रन्थो दृष्टान्तभाग एव। लोके भेदजं दुःखं नाप्नोतीत्यादिस्वरसात्। दार्ष्टान्तिकपरत्वे तु बुद्धिसंयोगजं दुःखं नाऽऽप्नोतीत्यत्र वक्तुं युज्येत। विज्ञानभिक्षोर्दार्ष्टान्तिकपरतया व्याख्यानन्तूच्छृङ्खलत्वेनेति नाऽत्र सूक्ष्मविचाराऽपेक्षेत्यलम्। (२) प्रतिसर्गाऽवस्थायां=प्रलयाऽवस्थायाम्। (३) उद्भिज्जभेदः=तृणादिः। (४) भाविततया=उत्पादकतयेत्यर्थः। उपादानतयेति वा। (५) केनोक्तमित्याकाङ्क्षां शमयति। "पञ्चशिखेन" इति।

(*) तद्वशेन=पौरुषेयभोगाऽपवर्गवशेन, तस्य=संयोगस्य, स्थितेरित्यर्थः।

भा० प्रतीकारमारभमाणो भेदजं दुःखं नाऽऽप्नोति। कस्मात्, त्रित्वो-
पलब्धिसामर्थ्यादिति। अत्राऽपि तापकस्य रजसः सत्त्वमेव तप्यं, कस्मात्, तपिक्रियायाः कर्मस्थत्वात्। सत्त्वे कर्मणि तपिक्रिया, नाऽपरिणामिनि निष्क्रिये क्षेत्रज्ञे। दर्शितविषयत्वात्। सत्त्वे तु तप्यमाने तदाकाराऽनुरोधी पुरुषोऽनुतप्यत इति दृश्यते॥ १७॥

दृश्यस्वरूपमुच्यते।

सू० प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगाऽपवर्गार्थं दृश्यम्॥ १८॥

भा० प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः, स्थितिशीलं तम इति। एते

---

टी० कर्तृस्थो भावो येन तप्यमन्यन्नाऽपेक्षेत। [१] न चास्यास्तप्यतया पुरुषः कर्म। तस्याऽपरिणामितया क्रियाजनितफलशालित्वाऽयोगात्। तस्मात् तपेस्तप्यव्यापस्य तन्निवृत्तौ* निवृत्तिमवगच्छामः। ज्वलनविरहेणेव धूमाऽभावमित्यत आह। "अत्रापि तापकस्य" इति। गुणानामेव तप्यतापकभावः। तत्र मृदुत्वात्पादतलवत्सत्त्वं तप्यं, रजस्तु तीव्रतया तापकमिति भावः। पृच्छति "कस्माद्" इति। कस्मात्सत्त्वमेव तप्यं, न तु पुरुष इत्यर्थः। उत्तरं "तपिक्रियाया" इति। तत्किमिदानीं पुरुषो न तप्यते। तथाचाचेतनस्याऽस्तु सत्त्वस्य तापः, किन्नश्छिन्नमित्यत आह—"दर्शितविषयत्वात्सत्त्वे तु तप्यमाने तदाकाराऽनुरोधी पुरुषोऽप्यनुतप्यत" इति। दर्शितविषयत्वमनुतापहेतुः। तच्च प्राग् व्याख्यातम्॥ १७॥

दृश्यं व्याचष्टे "प्रकाशेत्यादि, दृश्यम्" इत्यन्तेन सूत्रेण॥ १८॥ सत्त्वस्य हि भागः प्रकाशस्तामसेन भागेन दैन्येन वा राजसेन वा दुःखेनाऽनुरज्यते। एवं राजसादिष्वपि द्रष्टव्यम्। तादिदमुक्तं "परस्परोपरक्तप्रविभाग" इति। पुरुषेण सह

---

(१) नहि अस्या दिवादिधातुवत्तपिधातुः कर्तृस्थभावत्वेनाऽकर्मको। येन तप्यं कर्म नाऽपेक्षेत किन्तु पचादिवत् कर्मस्थक्रियात्वेन सकर्मक इत्यर्थः। * व्यापकीभूततप्यानिवृत्तौ।

भा० गुणाः[१] परस्परोपरक्तप्रविभागाः संयोगविभागधर्माण इतरेतरोपाश्रयेणोपार्जितमूर्तयः परस्पराङ्गाङ्गित्वेऽप्यसंभिन्नशक्तिप्रविभागा[२]स्तुल्यजातीया तुल्यजातीयशक्तिभेदाऽनुपातिनः प्रधान-

टी० संयोगविभागधर्माणः=यथाऽऽम्नायते "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य[३]" इति। इतरेतरोपाश्रयेणोपार्जिता मूर्त्तिः=पृथिव्यादिरूपा यैस्ते तथोक्ताः। स्यादेतत्, सत्त्वेन शान्तप्रत्यये जनयितव्ये रजस्तमसोरपि सत्त्वाङ्गत्वेन तत्र हेतुभावादस्ति सामर्थ्यमिति[४] यदाऽपि च रजस्तमसोरङ्गित्वं तदाऽपि शान्त एव प्रत्यय उदीयेत, न घोरो, नाऽपि मूढो वा सत्त्वप्राधान्य इवेत्यत आह। "परस्पराङ्गाङ्गित्वेऽप्यसंभिन्नशक्तिप्रविभागा" इति। भवतु शान्ते प्रत्यये जनयितव्ये रजस्तमसोरङ्गभावस्तथाऽपि नैषां शक्तयः सङ्कीर्य्यन्ते। कार्य्यासङ्करोन्नेयो हि शक्तीनामसङ्करः। असङ्कीर्णेन च समुदाचरता रूपेण शान्तघोरमूढरूपाणि कार्य्याणि दृश्यन्त इति सिद्धं शक्तीनामसंभेद इति।

स्यादेतद्, असंभेदश्चेत् शक्तीनां न संभूयकारित्वं गुणानां, न जातु भिन्नशक्तीनां सम्भूय कार्य्यकारित्वं दृष्टम्, न हि तन्तुमृत्पिण्डवीरणा[५]दीनि घटादीन् सम्भूय कुर्वन्ति इत्यत आह "तुल्यजातीयाऽतुल्यजातीयशक्तिभेदाऽनुपातिन" इति। यद्यपि तुल्यजातीय उपादानशक्ति-

टी० (१) एते गुणाःप्रधानशब्दवाच्या भवन्तीत्येवमग्रिमेण संबन्धः। (२) अन्योऽन्याङ्गाङ्गिभावेऽप्यसङ्कीर्णप्रकाशादिशक्तिविभागा इत्यर्थः। (३) एकोऽजः=बुद्धिसत्त्वादात्मनो विवेकमबुद्ध्यमानः पुरुषः, लोहितशुक्लकृष्णां=गुणत्रयात्मिकां, सरूपाः=सुखदुःखमोहात्मिकाः, बह्वीः प्रजाः सृजमानामजामेकां प्रकृतिं जुषमाणः=बुद्धिवृत्त्यैवाऽविद्यया बुद्धिस्थान् सुखादीनात्मन्यभिमन्यमानोऽनुशेते=सुखीदुःखी मूढोऽहमित्यनुशयेन संसरति। एतेन पुरुषेण सह संयोगधर्माणो गुणा इत्युक्तम्। अधुना विभागधर्मत्वमाह "जहात्येनाम्" इति। अन्यः=सत्त्वपुरुषाऽन्यताख्यातिमान्, एनां भुक्तभोगां=कृतभोगाऽपवर्गां प्रकृतिं जहाति=अनात्मतया त्यजतीति श्रुत्यर्थः। (४) इति शब्दो हेत्वर्थे, एवं चेत्यर्थे वा। निपातानामनेकार्थत्वात्।

(५) वीरणं=तृणविशेषः कटोपादानभूतः।

वेलायामुपदर्शितसन्निधाना गुणत्वेऽपि च व्यापारमात्रेण प्रधानान्तर्णीताऽनुमितास्तिताः पुरुषार्थकर्त्तव्यतया प्रयुक्तसामर्थ्याः सन्निधिमात्रोपकारिणोऽयस्कान्तमणिकल्पाः प्रत्ययमन्तरेणैकतमस्य वृत्तिमनुवर्त्तमानाः प्रधानशब्दवाच्या भवन्ति। एतद्

---

टी० र्नान्यत्र, सहकारि[१] शक्तिस्त्वतुल्यजातीये। घटे तु जनयितव्ये न वीरणानामस्तिसहकारिशक्तिरपीतिनतैस्तन्तूनां सम्भूयकारितेतिभावः। तुल्यजातीयाऽतुल्यजातीयेषु शक्येषु ये शक्तिभेदास्तानुपतितुं शीलं येषां ते तथोक्ताः "प्रधानवेलायाम्" इति = दिव्यशरीरे जनयितव्ये सत्त्वं गुणः प्रधानम्, अङ्गे रजस्तमसी। एवं मनुष्यशरीरे जनयितव्ये रजः प्रधानम्, अङ्गे सत्त्वतमसी। एवन्तिर्य्यक्शरीरे जनयितव्ये तमः प्रधानम्, अङ्गे सत्त्वरजसी। तेनैते गुणाः प्रधानत्ववेलायामुपदर्शितसन्निधानाः = कार्य्योपजननं प्रत्युद्भूतवृत्तय इत्यर्थः। प्रधानशब्दश्च भावप्रधानः। यथा "द्व्येकयोर्द्विवचनैकवचने" इत्यत्र द्वित्वैकत्वयोरिति। अन्यथा[२] द्व्येकेष्विति स्यात्। ननु तदा प्रधानमुद्भूततया शक्यमस्तीति वक्तुम्, अनुद्भूतानां तु तदङ्गानां सद्भावे किम्प्रमाणामत्यत आह "गुणत्वेऽपि च" इति। यद्यपि नोद्भूतास्तथाऽपि गुणानामविवेकित्वात्संभूयकारित्वाच्च व्यापारमात्रेण सहकारितया प्रधानेऽन्तर्णीतं सद् अनुमितमस्तित्वं येषां ते तथोक्ताः। ननु सन्तु गुणाः संभूयकारिणः समर्थाः, कस्मात्तत्पुनः कुर्वन्ति। न हि समर्थमित्येव कार्य्यं जनयति, मा भूदस्य कार्य्योपजननं प्रति विराम इत्यत आह "पुरुषार्थकर्तव्यतया" इति। ततो[३] निर्वर्त्तितनिखिलपुरुषार्थानां गुणानामुपरमः कार्य्यानारम्भणमित्युक्तं भवति। ननु पुरुषस्यानुपकुर्वतः कथं पुरुषार्थेन प्रयुज्यत इत्यत आह "सन्निधिमात्रोपकारेण"। इति ननु धर्माऽधर्मलक्षणमेव निमित्तं प्रयोजकं गुणानां, किमुच्यते पुरुषार्थप्रयुक्ता इत्यत

---

ठि० (१) 'सहकारि' इत्यस्यादौ तथाऽपीति देयम्। यद्यप्युपादानकारणं समानजातीयमेव भवति नान्यस्तथाऽपि सहकारिकारणन्त्वतुल्यजातीयमपि भवतीत्यर्थः। (२) अन्यथा=सद्भूत्येयपरत्वे तु इत्यर्थः। (३) ततः = सत्त्वपुरुषाऽन्यताख्यातिरूपपुरुषार्थसम्पादनानन्तरमित्यर्थः।

दृश्यमित्युच्यते। तदेतद् दृश्यं भूतेन्द्रियात्मकं=भूतभावेन-पृथिव्यादिना सूक्ष्मस्थूलेन[१] परिणामते । तथेन्द्रियभावेन=श्रोत्रादिना[२] सूक्ष्मस्थूलेन परिणामत इति । तत्तु नाऽप्रयोजनम् ।

---

टी० आह "प्रत्ययमन्तेरण" इति। एकतमस्य=सत्त्वस्य रजसस्तमसो वा प्रधानस्य स्वकार्य्ये प्रवृत्तस्य, वृत्तिम्, इतरे[३] प्रत्ययं=निमित्तं धर्मादिकं विनैवाऽनुवर्त्तमानाः ।यथा च वक्ष्यति "निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवद्[४] इति । एते गुणाः प्रधानशब्दवाच्या भवन्तीति सम्बन्धः, प्रधीयते विधीयते विश्वं कार्य्यमेभिरिति व्युत्पत्त्या, एतद् दृश्यमुच्यते । तदेवं गुणानां शीलमभिधाय तस्य कार्य्यमाह "तदेतद्" इति । सत्कार्य्यवादसिद्धौ यद् यदात्मकं तत् तेन रूपेण परिणमत इति। भूतेन्द्रियात्मकत्वं दीपयति, "भूतभावेन" इत्यादिना। "भोगापवर्गार्थम्"इति सूत्राऽवयवमवतारयति "तत्तु नाप्रयोजनम्" इति । भोगंविवृणोति "तत्र" इति सुखदुःखे हि त्रिगुणाया बुद्धेः स्वरूपे, तस्यास्तथात्वेन परिणामात्। तथापि गुणगततयाऽवधारणेन भोग इत्यत आह "अविभागाऽऽपन्नम्" इति। एतच्चाऽसकृदावेदितम्। अपवर्गं विवृणोति "भोक्तुरिति।अपवृज्यतेऽनेनेत्य-

---

टि० (१) भूतभावेनेत्यस्य व्याख्यानं पृथिव्यादिनेति। तत्राऽवान्तरभेदमाह—"सूक्ष्मस्थूलेन" इति । तन्मात्राणि सूक्ष्मपृथिव्यादीनि, महाभूतानि स्थूलपृथिव्यादीनि इत्यर्थः ।

(२) इन्द्रियभावेनेत्यस्य विवरणं "श्रोत्रादिना" इति । अत्राऽप्यवान्तरभेदमादाय द्वैविध्यमाह "सूक्ष्मस्थूलेन" इति । महदहङ्कारौ सूक्ष्मेन्द्रियम्, एकादश च स्थूलेन्द्रियाणीत्यर्थ इति विज्ञानः । [३] इतरे = उपसर्जनीभूताः सत्त्वादयो गुणा इत्यर्थः ।

[४] निमित्तं = धर्मादि, प्रकृतीनां प्रवृत्तौ न प्रयोजकं, किन्तु ततः = धर्मादेः, वरणस्य = प्रतिबन्धकस्य भेदो भवति । धर्माऽधर्मौ स्वविरुद्धधर्मान्तररूपाऽऽवरणभङ्गेनोद्बोधकावेव, न प्रयोजकाविति यावत् । तत्र दृष्टान्तमाह । "क्षेत्रिकवद्" इति । यथा कृषीवलो जलपूर्णकेदारात्केदारान्तरं जलं निनीषुर्न पाणिनाऽपोऽपकर्षति, किन्तु जलप्रतिबन्धकमालवालं भिनत्ति, भिन्ने तु स्वयमेव जलं केदारमाप्लावयति। तद्वत् ।

भा० अपि तु प्रयोजनमुररीकृत्य प्रवर्त्तत इति[१] भोगाऽपवर्गार्थं हि तद् दृश्यं पुरुषस्येति । तत्रेष्टानिष्टगुणस्वरूपाऽवधारणम् अविभागाऽऽपन्नं भोगः, भोक्तुः स्वरूपाऽवधारणमपवर्ग इति, द्वयोरतिरिक्तमन्यद्[२] दर्शनं नास्ति। तथाचोक्तम्[३]"अयन्तु खलु त्रिषु गुणेषु कर्त्तृषु अकर्त्तरि च पुरुषे तुल्याऽतुल्यजातीये चतुर्थे तत्क्रियासाक्षिण्युपनीयमानान् सर्वभावानुपपन्नाननुपश्यन्न दर्शनमन्यच्छङ्कत" इति । तावेतौ भोगाऽपवर्गौ बुद्धिकृतौ बुद्धावेव वर्त्तमानौ कथं पुरुषे व्यपदिश्येते इति। यथा विजयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्येते, स हि तस्य फलस्य भोक्तेति।

---

टी० पवर्गः। प्रयोजनान्तरस्याऽभावमाह "द्वयोः" इति। "तथा चोक्तं पञ्चशिखेन "अयन्तु खलु" इति। ननु वस्तुतो भोगापवर्गौ बुद्धिकृतौ बुद्धिवर्त्तिनौ च कथं तदकारणे तदनधिकरणे च पुरुषे व्यपदिश्येते इत्यत आह "तावेतौ" इति । भोक्तृत्वं च पुरुषस्योपपादितम्,[४] अग्रे * च वक्ष्यते ।

---

ठि० (१) इतिशब्द इत्यत-इत्यर्थकः, तथा च यतस्तद् गुणत्रयं निष्प्रयोजनं न प्रवर्त्ततेऽपि तु प्रयोजनं स्वीकृत्यैव भूतेन्द्रियादिरूपेण परिणमन्तीत्यतस्तद् दृश्यं पुरुषस्य भोगापवर्गार्थम्=भोगाऽपवर्गप्रयोजनकमित्येवं सूत्राऽवयवभाष्ययोरेकवाक्यतयाऽर्थो बोध्यः ।

(२) भोगाऽपवर्गावपहायाऽन्यद्दर्शनं=दर्शनाख्यायाः बुद्धिवृत्तेः प्रयोजनं नास्तीत्यर्थः ।

(३) पुरुषेण सहाऽविभागापन्नं गुणस्वरूपाऽवधारणं भोग इत्युक्ते पञ्चशिखवाक्यं प्रमाणयति । "तथाचोक्तम्" इति । त्रिषु गुणेषु कर्तृषु सत्स्वपि परन्त्वयमविवेकी जनश्चतुर्थे=गुणत्रयापेक्षया तुरीयेऽकर्तरि तत्साक्षिणि अत्रैगुण्यादिना गुणविजातीये, अहेतुमत्त्वादिना गुणसजातीये, पुरुषे बुद्ध्योपनीयमानान् सर्वधर्मान् सुखादीन् उपपन्नान्=सांसिद्धिकान् अनुपश्यन् सन् गुणेभ्यो विविक्तं शुद्धमन्यद् दर्शनं चैतन्यं न शङ्कते=संभावयतीत्यर्थः । ननु सुखादयो यदि बुद्धिधर्मास्तत्कथं पुरुषस्य भोगाऽपवर्गार्थं दृश्यमित्युक्तमिति शङ्कते "तावेतौ" ईति । दृष्टान्तेन परिहरति "यथा" इति ।

(४) "वृत्तिसारूप्यमितरत्र" इति सूत्रे उपपादितमित्यर्थः ।* २ पादे ३४ सू० ।

भा० एवं बन्धमोक्षौ बुद्धावेव वर्त्तमानौ पुरुषे व्यपदिश्येते । स हि तत्फलस्य भोक्तेति । बुद्धेरेव पुरुषार्थाऽपरिसमाप्तिर्बन्धः, तदर्थाऽवसायो[१] मोक्ष इति । एतेन ग्रहणधारणोहापोहतत्त्वज्ञानाऽभिनिवेशा बुद्धौ वर्त्तमानाः पुरुषेऽध्यारोपितसद्भावाः[२] स हि तत्फलस्य भोक्तेति ॥ १८ ॥

दृश्यानां तु गुणानां स्वरूपभेदाऽवधारणार्थमिदमारभ्यते—

---

टी० परमार्थतस्तु "बुद्धेरेवपुरुषार्थाऽपरिसमाप्तिर्बन्ध" इति । एतेन=भोगापवर्गयोः पुरुषसंबन्धित्वकथनमार्गेण, ग्रहणादयोऽपि पुरुषसंबन्धिनो वदितव्याः। तत्र स्वरूपमात्रेणार्थज्ञानं ग्रहणं, तत्र स्मृतिः धारणं, तद्गतानां विशेषाणामूहनमूहः, समारोपितानां च युक्त्याऽपनयोऽपोहः, ताभ्यामेवोहाऽपोहाभ्यां तदवधारणं तत्त्वज्ञानं तत्त्वाऽवधारणपूर्वं हानोपादानमभिनिवेशः ॥१८॥

दृश्यानां गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—

---

टि० (१) तदर्थोऽवसायः=सत्त्वपुरुषाऽन्यताख्यातिजननेन पुरुषार्थसमाप्तिरित्यर्थः ।

(२) "विज्ञानं यज्ञं तनुते" "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" "ध्यायतीव लेलायतीव" इत्यादिश्रुतिभ्य औपाधिका एव पुरुषे भोगादयो धर्मा, न पारमार्थिका इत्यर्थः । यत्तु विज्ञानभिक्षुणा—पुरुषस्याऽपि स्वातन्त्र्येण भोगोऽस्त्येव । बुद्धेरिवेतिभाष्येण तु परिणामरूपो पुरुषस्य भोगो निराक्रियते । "पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इति भगवदुक्तेरित्यादि जल्पितम् । तदविवेकमूलकमेव । भगवद्वाक्यस्याऽपि मुख्ये भोगे तात्पर्य्याभावात् तथा हि "कार्य्यकारणकर्त्तृत्वे हेतुः प्रकृतिरुच्यते" इत्यनेन प्रकृतेः संसारकारणत्वमभिधाय सा किमर्थं करोतीत्याकाङ्क्षायाम् "पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" इत्यनेन पुरुषस्य भोक्तृत्वेन तद्भोगार्थमित्युक्त्वा, तत् किं पुरुषस्य भोक्तृत्वं स्वाभाविकमिति जिज्ञासायाम् "पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इत्यनेन प्रकृतितादात्म्याऽपन्नस्य गुणसङ्गेनौपाधिकमेव भोक्तृत्वं न पारमार्थिकमित्युक्त्वा "उपद्रष्टाऽनुमन्ता" इत्यादिवाक्येन स्वाभाविकं साक्षित्वमेव पुरुषस्येतिसिद्धान्तितं भगवतेत्यन्यत्र विस्तरः ।

सू० विशेषाऽविशेषलिङ्गमात्राऽलिङ्गानि गुणपर्वाणि ॥ १९ ॥

भा० तत्राकाशवाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्राणामविशेषाणां विशेषाः । तथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि बुद्धीन्द्रियाणि । वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि । एकादशं मनः सर्वार्थम्, इत्येतान्यस्मितालक्षणस्याऽविशेषस्य विशेषाः । गुणानामेष षोडशको विशेषपरिणामः। षड् अविशेषाः, = तद् यथा शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रञ्च, इत्येकद्वित्रिचतु-

टि० "विशेषेत्यादि, पर्वाणीत्यन्तं १९ सूत्रम् । येषाम् अविशेषाणां = शान्तघोरमूढलक्षणरहितानां ये विशेषा = विकारा एव न तु तत्त्वान्तरप्रकृतयस्तेषां तानाह—तत्राऽऽकाश" इति । उत्पादक्रमानुरूप एवोपन्यासक्रमः, आस्मितालक्षणस्याऽविशेषस्य सत्त्वप्रधानस्य बुद्धीन्द्रियाणि विशेषाः[१] रजःप्रधानस्य तु कर्मेन्द्रियाणि, मनस्तूभयात्मकमुभयप्रधानस्येति[२] मन्तव्यम् । अत्र च पञ्च तन्मात्राणि बुद्धिकारणकान्यविशेषत्वाद् आस्मितावद् इति[३] । विकारहेतुत्वं चाऽविशेषत्वं तन्मात्रेषु चास्मितायां चाविशिष्टम्*। संकलय्य विशेषान् परिगणयति-"गुणानामेष" इति । अविशेषानपि गणयति "षड्" इति । संकलय्योदाहरति—'तद् यथा' इति ।

टि० (१) सत्त्वप्रधानस्याऽस्मितालक्षणस्याऽविशेषस्य = श्रवणस्पर्शनदर्शनादिविशेषधर्मशून्यस्याऽभिमानमात्रधर्मकस्याऽहङ्कारस्य, बुद्धीन्द्रियाणि विशेषाः = श्रवणस्पर्शनादिधर्मकाण्यि पञ्च ज्ञानेन्द्रियाणि कार्य्याणीत्यर्थः। एवमग्रेऽपि ज्ञेयम् । (२) उभयात्मकम् "अन्यत्रमनाऽभूवं नाऽश्रौषम्" इत्यादिश्रुतेः । चक्षुरादीनां वागादीनां च मनोऽधिष्ठितानामेव स्वस्वविषयेषु प्रवृत्तेश्च ज्ञानकर्मेन्द्रियात्मकं मनः सत्त्वरजःप्रधानस्याऽहङ्कारस्य कार्य्यमित्यर्थः । (३) इतीत्यस्याऽग्रे "अनुमानं मानम्" इति शेषयित्वा, अत्र च = पञ्चतन्मात्राणां बुद्धिकार्य्यत्वे चेत्यनुमानं मानमित्यर्थो वर्णनीयः ॥ * अतो नाऽविशेषत्वमसद्धेतुरिति भावः ।

भा० पञ्चलक्षणाः शब्दादयः पञ्चाऽविशेषाः, षष्ठश्चाऽविशेषोऽस्मितामात्र इति। एते सत्तामात्रस्यात्मनो महतः षड्विशेषपरिणामाः। यत् तत्परमविशेषेभ्यो लिङ्गमात्रं महत्तत्त्वम्। तस्मिन्नेते सत्तामात्रे महत्यात्मन्यवस्थाय विवृद्धिकाष्ठामनुभवन्ति, प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्य-

टी० विशिष्टं ह्यपरं परेणेति गन्ध आत्मना पञ्चलक्षणः[१], रस आत्मना चतुर्लक्षणः, रूपमात्मना त्रिलक्षणं, स्पर्श आत्मना द्विलक्षणः, शब्दः शब्दलक्षण एवेति। कस्य पुनरमी षडविशेषाः कार्य्यमित्यत आह। एते सत्तामात्रस्यात्मन" इति। पुरुषार्थक्रियाक्षमं सत्, तस्य भावः सत्ता, तन्मात्रं महत्तत्वम्। यावती काचित्पुरुषार्थक्रिया शब्दादिभोगलक्षणा सत्त्वपुरुषाऽन्यताख्यातिलक्षणा वाऽस्ति सा सर्वा महति बुद्धौ समाप्यत इत्यर्थः। आत्मन इति स्वरूपोपदर्शनेन तुच्छत्वं निषेधति, प्रकृतेरयमाद्यः परिणामो वास्तवो, न तु तद्विवर्त्त इति यावत्। यत्तत्परं=विप्रकृष्टकालम् अविशेषेभ्यस्तदपेक्षया[२]सन्निकृष्टकालेभ्यो लिङ्गमात्रं महत्तत्वं, तस्मिन् एते= षडविशेषाःसत्तामात्रे महत्यात्मन्यवस्थाय सत्कार्य्यसिद्धेर्विवृद्धिकाष्ठामनुभवन्ति=प्राप्नुवन्ति। ये पुनरविशेषाणां विशेषपरिणामास्तेषां च धर्मलक्षणाऽवस्थाः परिणामा इति सेयमेषां विवृद्धिकाष्ठा परिणामकाष्ठेति। तदेवमुत्पत्तिक्रममभिधाय प्रलयक्रममाह "प्रतिसंसृज्यमाना" इति। प्रतिसंसृज्यमानाः=प्रलीयमानाः, स्वात्मनि लीनविशेषा अविशेषास्तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय=निलीय सहैव महता तेऽविशेषा अव्यक्तम् अन्यत्र लयमगच्छतीत्यलिङ्गं प्रतियन्ति। तस्यैव विशेषणं

टि० (१) यतोऽपरं=गन्धतन्मात्रादि, परेण=रसतन्मात्रादिना, विशिष्टमिति=अत आत्मना सह गन्धतन्मात्रं पञ्चलक्षणमित्यर्थः। (२) तदपेक्षया=महत्तत्त्वाऽपेक्षया, सन्निकृष्टकालेभ्यः=अनन्तरभाविभ्योऽहङ्कारपञ्चतन्मात्रेभ्यो यत्पूर्वभावि महत्तत्वं तल्लिङ्गमात्रमित्यर्थः।

भा० वस्थाय यत्तन्निःसत्ताऽसत्तं निःसदसद् निरसद् अव्यक्तमलिङ्गं प्रधानं तत्प्रतियन्तीति। एष तेषां लिङ्गमात्रः परिणामः,[१] निःसत्ताऽसत्तञ्चाऽलिङ्गपरिणाम[२] इति अलिङ्गाऽवस्थायां न पुरुषा-

---

टी० "निसत्ताऽसत्तम्" इति। सत्त्वं = पुरुषार्थक्रिया[३] क्षमत्वम्, असत्ता = तुच्छता, निष्क्रान्तं सत्ताया असत्तायाश्च यत्तथोक्तम्। एतदुक्तं भवति। सत्त्वरजस्तमसां साम्यावस्था न क्वचित्पुरुषार्थ उपयुज्यत इति न सती। नाऽपि गगनकमलिनीवत् तुच्छस्वभावा, तेन नासत्यपीति। स्यादेतद्, अव्यक्ताऽवस्थायामप्यस्ति महदादि तदाऽऽत्मना। न हि सतो विनाशो, विनाशे वा न पुनरुत्पादः। नह्यसत उत्पाद इति महदादिसद्भावात्पुरुषार्थक्रिया प्रवर्त्तेत। तत्कथं निःसत्त्वमव्यक्तमित्यत आह "निःसदसद्" इति। निष्क्रान्तं कारणं सतः कार्य्यात्। यद्यपि कारणाऽवस्थायां सदेव शक्त्यात्मना कार्य्यं तथाऽपि स्वोचितामर्थक्रियामकुर्वदसादित्युक्तम्। नचैतत्कारणं शशविषाणायमानकार्य्यमित्याह "निरसद्" इति। निष्क्रान्तम् असतस्तुच्छरूपात्कार्य्यात्। तथा हि सति व्योमारविदमिवास्मान्न कार्य्यमुत्पद्येतेति भावः।

प्रतिसर्गमुक्तमुपसंहरति "एष तेषाम्" इति। एष = इत्यनन्तरोक्तात् पूर्वस्य[४] परामर्शः। लिङ्गमात्राद्यवस्था पुरुषार्थकृतत्वा-

---

टि० (१) तेषां = गुणानाम्, एषः = महत्तत्त्वाऽऽख्य आद्यः परिणामः लिङ्गमात्र इत्युच्यत इत्यर्थः।

(२) निसत्ताऽसत्तमित्यादिना, यः पदार्थः पूर्वमुक्तः सोऽलिङ्गाख्यो गुणपरिणाम इत्यर्थः। यद्यपि गुणा एव प्रधानशब्दवाच्या भवन्तीति भाष्ये पूर्वमुक्तं, तथापि साम्याऽवस्थायाः प्रधानशब्दवाच्याया गुणेभ्योऽतिरिक्तत्वात्प्रधानस्य गुणपरिणामत्वमुक्तम्। नैतावता प्रधानस्य महत्तत्त्वादिवत्प्रकृतिविकृत्यात्मकत्वं बोध्यमिति। तथाच साङ्ख्यसूत्रं "मूले मूलाऽभावादमूलं मूलम्" इति।

(३) पुरुषार्थक्रिया = पौरुषेयभोगाऽपवर्गसम्पादनम्। यत्तु विज्ञानभिक्षुणोक्तं नैतादृशमसत्त्वं गृह्यते, ईश्वराऽन्यपुरुषस्याऽपि प्रलय एवमसत्तया तद्व्यावृत्त्यसम्भवादिति। तन्न। न हि पुरुषस्य भोगाऽपवर्गसंपादकत्वमेव सत्त्वं येन प्रलये तन्निवृत्त्या एवंविधमसत्त्वं स्यादपि तु चिन्मात्रत्वं, तच्चाऽस्ति प्रलयेऽपि इति न तस्याऽसत्त्वम्। यच्चात्र भिक्षुणा अप्रकृतं बहु प्रलपितं तद् भूमिकायां निराकृतम् अस्माभिरिति तत एवाऽऽलोचनीयम्।

(४) निःसत्ताऽसत्तमित्यनन्तरोक्तात्पूर्वस्य सत्तामात्रस्य महत्तत्त्वस्येत्यर्थः।

भा०ऽर्थो हेतुः । नालिङ्गावस्थायामादौ पुरुषार्थता कारणं भवतीति न तस्याः पुरुषार्थता कारणं भवतीति, नाऽसौ पुरुषार्थकृतेति नित्याऽऽख्यायते । त्रयाणान्त्ववस्थाविशेषाणामादौ पुरुषार्थता कारणं भवति । स चाऽर्थो हेतुर्निमित्तं कारणं भवतीत्यनित्याऽऽख्यायते। गुणास्तु सर्वधर्मानुपातिनो न प्रत्यस्तमयन्ते, नोपजायन्ते। व्यक्तिभिरेवातीताऽनागतव्ययागमवतीभिर्गुणान्वयनीभिरुपजनाऽपायधर्मका इव प्रत्यवभासन्ते । यथा देवदत्तो दरिद्राति, कस्माद्, यतोऽस्य म्रियन्ते गाव इति। गवामेव मरणात्तस्य-दरिद्राणं न स्वरूपहानादिति समः समाधिः । लिङ्गमात्र म्

टी०दनित्या, अलिङ्गावस्था तु पुरुषार्थेनाऽकृतत्वान्नित्येत्यत्र हेतुमाह "अलिङ्गावस्थायाम्" इति । कस्मात्पुनर्न पुरुषार्थो हेतुरित्यत आह "नाऽलिङ्गावस्थायाम्" इति । भवतिना=विषयेण विषयि ज्ञानमुपलक्षयति । एतदुक्तं भवति । एवं हि पुरुषार्थताकारणमलिङ्गावस्थायां ज्ञायेत। यद्यलिङ्गावस्था शब्दाद्युपभोगं वा सत्त्वपुरुषाऽन्यताख्यातिं वा पुरुषार्थं निर्वर्त्तयेत, तन्निर्वर्त्तने हि न साम्याऽवस्था स्यात्। तस्मात्पुरुषार्थकारणत्वमस्या न ज्ञायत इति नास्याः पुरुषार्थता हेतुः । उपसंहरति " नाऽसौ " इति । इतिः= तस्मादर्थे । अनित्यावस्थामाह "त्रयाणाम्" इति । त्रयाणां=लिङ्गमात्राऽविशेषविशेषाणामित्यर्थः । पर्वस्वरूपं दर्शयित्वा गुणस्वरूपमाह "गुणास्तु" इति । निदर्शनमाह "यथा देवदत्त" इति । यत्राऽत्यन्तभिन्नानां गवामुपचयाऽपचयौ देवदत्तोपचयाऽपचयहेतुस्तत्र कैव कथा गुणेभ्यो भिन्नाऽभिन्नानां व्यक्तीनामुपजनाऽपाययोरित्यर्थः । ननु सर्गक्रमः किमनियतो ? नेत्याह "लिङ्गमात्रम्" इति । न खलु न्यग्रोधधाना(१) अह्नायैव न्यग्रोधशाखिनं सान्द्रं शाद्वलदलजटिलं शाखाकाण्डनिपीतमार्त्तण्ड-

टि० (१) न्यग्रोधधाना=वटबीजानि, अह्नायैव=झटित्येव, न्यग्रोधशाखिनं=वटवृक्षं, नारभन्ते, किन्तु अङ्कुरपत्रादिक्रमेणैवेत्यन्वयः । सान्द्रमित्यादीनि वटवृक्षविशेषणानि ।

भा० अलिङ्गस्य प्रत्यासन्नं तत्र तत्संसृष्टं विविच्यते(१) क्रमाऽनतिवृत्तेः । तथा षड्विशेषा लिङ्गमात्रे संसृष्टा विविच्यन्ते । परिणामक्रमनियमात् । तथा तेष्वविशेषेषु भूतेन्द्रियाणि संसृष्टानि विविच्यन्ते । तथा चोक्तं पुरस्तात् । न विशेषेभ्यः परं तत्त्वान्तरमस्ति । इति विशेषाणां नास्ति तत्त्वान्तरपरिणामः । तेषान्तु धर्मलक्षणाऽवस्थापरिणामा व्याख्यायिष्यन्ते ॥ १९ ॥

व्याख्यातं दृश्यम् । अथ द्रष्टुः स्वरूपाऽवधारणार्थमिदमारभ्यते—

सू० द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययाऽनुपश्यः ॥२०॥

---

टी० चण्डातपमण्डलमारभन्ते, किन्तु क्षितिसलिलतेजःसम्पर्कात् परम्परेजायमानाङ्कुरपत्रकाण्डतालादिक्रमेण । एवमिहापि युक्त्यागमसिद्धः क्रमाश्चाऽऽस्थेय(२) इति । कथं भूतेन्द्रियाण्यविशेषसंसृष्टानीत्यत आह "तथा चोक्तं पुरस्ताद्" इति । इदमेव(३) सूत्रं प्रथमं व्याचक्षाणैः । अथ विशेषाणां कस्मान्न तत्त्वान्तरपरिणाम उक्त इत्यत आह "न विशेषेभ्य" इति । तत्किमिदानीमपरिणामिन एव विशेषास्तथा च नित्याः प्रसज्ज्येरन्नित्यत आह "तेषान्तु" इति ॥ १९ ॥

व्याख्यातं दृश्यम् । द्रष्टुः स्वरूपाऽवधारणार्थमिदमारभ्यते—"द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययाऽनुपश्यः" इति ॥ २० ॥

---

टी० (१) अलिङ्गस्य = प्रधानस्य, यत्प्रत्यासन्नं = प्रथमं कार्य्यं लिङ्गमात्रं महत्तत्त्वं, तत् तत्र = प्रधाने, सृष्टेः प्राक् संसृष्टं सदेवाऽनागताऽवस्थया प्रधानाऽविभक्तमेव सत्सृष्टिकाले विविच्यते = विभक्तं सद् वर्त्तमानाऽवस्थां प्राप्नोति, नाऽसदेवोत्पद्यत इत्यर्थः । एतेन सत्कार्य्यवाद उक्तः । ननु कथमहङ्कार एव प्रथमं कार्य्यमत आह "क्रमाऽऽनतिवृत्तेः" = "एकमेवाऽद्वितीयं ब्रह्मासीत् तस्मादव्यक्तमेवाऽक्षरं तस्मादक्षरान्महद् महतो वै अहङ्कारस्तस्मादेवाऽहङ्कारात्पञ्च तन्मात्राणि तेभ्यो भूतादीनि" इत्यादिगोपालतापनीयश्रुत्युक्तक्रमाऽनुल्लङ्घनादित्यर्थः । उत्पादक्रमो न यौक्तिकोऽपि त्वागमसिद्ध आश्रयणीय इति भावः । प्रत्यासन्नमित्यन्तं भिन्नं वाक्यमिति केचित् । (२) क्रमेणोत्पाद इत्यत्र युक्तिरास्थेया । केन क्रमेणेत्यत्र च "प्रकृतेर्महान् महतोऽहङ्कार" इत्यादिकापिलागम आस्थेय इति भावः । (३) कैरुक्तमित्याकाङ्क्षितं पूरयति "इदम्" इति । व्याचक्षाणैरित्यस्याऽग्रेऽस्माभिरिति शेषो बोध्यः ।

भा० दृशिमात्र इति – दृक्शक्तिरेव विशेषणाऽपरामृष्टेत्यर्थः । स पुरुषो बुद्धेः प्रतिसंवेदी, स बुद्धेर्न सरूपो नाऽत्यन्तं विरूप इति । न तावत्सरूपः । कस्माद् । ज्ञाताऽज्ञातविषयत्वात् । परिणामिनी हि बुद्धिः, तस्याश्च विषयो गवादिर्घटादिर्वा ज्ञातश्चाऽज्ञातश्चेति परिणामित्वं दर्शयति[१] । सदा ज्ञातविषयत्वन्तु पुरुषस्याऽपरिणामित्वं परिदीपयति[२] । कस्माद्, न हि बुद्धिश्च नाम पुरुषविषयश्च स्याद् गृहीताऽगृहीता चेति सिद्धं पुरुषस्य सदा ज्ञातविषयत्वम् । ततश्चा-

टी० व्याचष्टे "दृशिमात्र" इति । विशेषणानि=धर्मास्तैरपरामृष्टा, तदनेन मात्रग्रहणस्य तात्पर्य्यं दर्शितम् । स्यादेतद्, यदि सर्वविशेषणरहिता दृक्शक्तिर्न तर्हि शब्दादयो दृश्येरन् । न हि दृशिनाऽसंस्पृष्टं दृश्यं भवतीत्यत आह "स पुरुष" इति । बुद्धिदर्पणे पुरुषप्रतिबिम्बसङ्क्रान्तिरेव बुद्धिप्रतिसंवेदित्वं पुंसः । तथाच दृशिच्छायाऽऽपन्नया बुद्ध्या संसृष्टाःशब्दादयो भवन्ति दृश्या इत्यर्थः । स्यादेतत्, पारमार्थिकमेव बुद्धिचैतन्ययोरैक्यं कस्मान्नोपेयते किमनया तच्छायाऽऽपत्त्येत्यत आह "स बुद्धेर्न सरूप" इति । तथाऽसरूपस्यतच्छायाऽऽपत्तिरपि दुर्घटेत्यत आह "नाऽत्यन्तं विरूप" इति । तत्र सारूप्यं निषेधति "न तावद्" इति । हेतुं पृच्छति "कस्माद्" इति । सहेतुकंवैरूप्येहेतुमाह "ज्ञाताऽज्ञात" इति । परिणामिनी बुद्धिर्यस्मात्तस्माद् विरूपा । यदाखल्वियं शब्दाद्याकारा भवति तदा ज्ञातोऽस्याःशब्दादिलक्षणोभवतिविषयः, तदनाकारत्वे त्वज्ञातः । तथा च कदाचिदेव तदाकारतां दधतीपरिणामिनीति । प्रयोगश्चभवति-बुद्धिःपरिणामिनी, ज्ञाताऽज्ञातविषयत्वाच्छ्रोत्रादिवदिति । तद्वैधर्म्यं पुरुषस्य तद्विपरीतत्वाद् हेतोःसिध्यतीत्याह "सदाज्ञात" इति । स्यादेतत्, सदा ज्ञातविषयश्चेत्पुरुषो, न तर्हि केवली स्यादित्याशयवान् पृच्छति "कस्माद्" इति । उत्तरं "नहिबुद्धिश्चनामइति । बुद्ध्यग्रहणयोरास्तिसहसंभवो निरोधावस्थायामत उक्तं विरोधसूचनाय "पुरुषविषयश्च" इति । तेनाऽऽद्यश्चकारोबुद्धिविषयत्वेन समुच्चिनोति, परिशिष्टौ तु विरोधद्योतकौ[३] चकाराविति ।

टि० (१) च=यतः, तस्या बुद्धेर्विषयो घटादिः कदाचिदज्ञातो भवति कदाचिच्चाज्ञातो भवति अतो ज्ञाताऽज्ञातविषय एव बुद्धेः परिणामित्वं दर्शयति=अनुमापयतीत्यर्थः । (२) प्रदीपयति=प्रज्ञापयति, अनुमापयतीत्यर्थो वा बोध्यः । (३) बुद्धिश्चेत्पुरुषविषयस्तर्हि गृहीतैव स्यान्नाऽगृहीता । पुरुषविषयश्च, गृहीताऽगृहीता चेत्येतद्विप्रतिषिद्धमित्येवं विरोधद्योतकौ चकारावित्यर्थः ।

भा० ऽपरिणामित्वमिति। किञ्च परार्था बुद्धिः संहत्य कारित्वात्, स्वार्थः पुरुष इति, तथा सर्वार्थाऽध्यवसायकत्वात् त्रिगुणा बुद्धिः त्रिगुणत्वादचेतनेति, गुणानां तूपद्रष्टा पुरुष इति। अतो न सरूपः। अस्तु तर्हि विरूप इति। नात्यन्तं विरूपः। कस्मात् शुद्धोऽप्यसौ प्रत्ययाऽनुपश्यो यतः[१], प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्नतदात्माऽपि तदात्मक इव प्रत्यवभासते। तथा चोक्तम्-"अपरिणामिनी

टी० प्रयोगस्तु,—पुरुषोऽपरिणामी, सदा सम्प्रज्ञातव्युत्थानाऽवस्थयोर्ज्ञातविषयत्वाद् यः परिणामी नाऽसौ सदा ज्ञातविषयो भवति। यथा श्रोत्रादिरिति व्यतिरेकी हेतुः। अपरमपि वैधर्म्यमाह "किञ्च परार्था" इति। बुद्धिः खलु क्लेशकर्मवासनादिभिर्विषयेन्द्रियादिभिश्च संहत्य पुरुषार्थमभिनिर्वर्त्तयन्ती परार्था। प्रयोगश्च—परार्था बुद्धिः संहत्य कारित्वात् शयनाऽऽसनाऽभ्यङ्गवदिति। पुरुषस्तु न तथेत्याह—"स्वार्थः पुरुष" इति। सर्वं (२)पुरुषाय कल्पते, पुरुषस्तु न कस्मै चिदित्यर्थः। वैधर्म्यान्तरमाह—"तथा सर्वार्थ" इति। सर्वान् अर्थान् शान्तघोरमूढाँस्तदाकारपरिणता बुद्धिरध्यवस्यति। सत्त्वरजस्तमसां चैते परिणामा, इति सिद्धा त्रिगुणा बुद्धिरिति। न चैवं पुरुष इत्याह—"गुणानां तूपद्रष्टा पुरुष" इति। तत्प्रतिबिम्बितः पश्यति, न तु तदाकारपरिणत इत्यर्थः। उपसंहरति—"अत" इति। "अस्तु तर्हि विरूप इति, नात्यन्तं विरूपः। कस्माद्, यतः शुद्धोऽपि प्रत्ययानुपश्यः" =

टि० (१) यत इति पदं, शुद्धोऽपीत्यतः पूर्वमन्वयनीयम्। प्रत्ययाऽनुपश्य इत्यस्याऽर्थमाह "प्रत्ययमि"त्यादिना। बौद्धंप्रत्ययं=बुद्धिवृत्तिमनुसृत्य पश्यतीत्यर्थः। बुद्धिवृत्तिसमानाऽऽकार इति भावः। (२) स्वार्थ इत्यस्य स्वस्य भोगादिसाधनं पुरुष इति नार्थः, कर्मकर्तृविरोधात्। किन्तु न परार्थ इत्याह "सर्वंपुरुषाय कल्पते, पुरुषस्तु न कस्मैचिदिति"। स्वस्य भोगादिसाधनमिति विज्ञानीयं विवरणं त्वसाध्वेव। प्रकृतेः पुरुषभोगाऽपवर्गसाधनत्वेऽपि पुरुषस्य स्वीयभोगादिसाधनत्वाऽऽख्यानस्यैतत्तन्त्रविरुद्धत्वादसम्भवाच्च। "स्वार्थ इत्यस्य न परार्थ इति वाचस्पत्यार्थस्तु न युक्तः। भृत्यचेतनस्याऽपि स्वामिचेतनार्थत्वदर्शनाद्" इत्यपि विज्ञानभिक्षोः साहसमेव। न हि चेतनयोः स्वामिभृत्यभावोऽभ्युपेयते येनैवं पर्य्यनुयुज्येताऽपि तु सङ्घातयोः। तथा च न चेतनस्य परार्थत्वं वक्तुं शक्यमित्यलं विस्तरेण। यच्चोक्तं बुद्धेरिन्द्रियादिसाहित्येनाऽर्थक्रियाकारित्वेन संहत्यकारित्वं, पुरुषस्तु विषयप्रकाशरूपायामर्थक्रियायां नाऽन्यदपेक्षत इति तस्य नसंहत्यकारित्वमिति, तदप्यतीव फल्गु। पुरुषस्याऽपि विषयप्रकाशरूपाऽर्थक्रियायां बुद्धिवृत्तेरपेक्षणात् एतच्चाऽनुपदमेव प्रत्ययाऽनुपश्य इत्येतद्व्याख्यानभाष्ये स्पष्टं भविष्यतीतिनाऽतिरोहितम्।

भा० हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते॥२०॥

सू० तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

भा० दृशिरूपस्य पुरुषस्य कर्मरूपतामापन्नं दृश्यमिति तदर्थ एव

टी०यथा चैतत्तथोक्तं "वृत्तिसारूप्यमितरत्र" इत्यत्र । तथाचोक्तं पञ्चशिखेन"— अपरिणामिनी हि भोक्तृशक्तिः = आत्मा, अत एव बुद्धावप्रतिसङ्क्रमा च, परिणामिनि बुद्धिरूपेऽर्थे सङ्क्रान्तेव तद्वृत्तिं=बुद्धिवृत्तिम् अनुपतति। नन्वसङ्क्रान्ता कथं सङ्क्रान्तेव कथं वा वृत्तिं विनाऽनुपततीत्यत आह "तस्याश्च" इति । प्राप्तश्चैतन्योपग्रह = उपरागो येन रूपेण तत्तथाप्राप्तचैतन्योपग्रहं रूपं यस्याः सा तथोक्ता। एतदुक्तं भवति, यथा निर्मले जलेऽसंक्रान्तोऽपि चन्द्रमाः संक्रान्तप्रतिबिम्बतया संक्रान्त इव एवमत्राऽप्यसंक्रान्ताऽपि संक्रान्तप्रतिबिम्बा चितिशक्तिः संक्रान्तेव। तेन बुद्ध्यात्मत्वमापन्ना बुद्धिवृत्तिमनुपततीति। तदनेनाऽनुपश्य इति व्याख्यातम् । तामनुकारेण पश्यतीत्यनुपश्य इति॥२०॥द्रष्टृदृश्ययोः स्वरूपमुक्त्वा स्वस्वामिलक्षणसंबन्धाङ्गं दृश्यस्य द्रष्ट्रर्थत्वमाह "तदर्थ एव दृश्यस्यात्मा" इति ॥ २१ ॥ व्याचष्टे "दृशिरूपस्य" इति । दृशिरूपस्य पुरुषस्य = भोक्तुः कर्मरूपतां = भोग्यताम् आपन्नं दृश्यम्, इति = तस्मात् तदर्थ एव = द्रष्ट्रर्थ एव दृश्यस्यात्मा भवति, न तु दृश्यार्थः । ननु नाऽऽत्माऽऽत्मार्थ इत्यतआह "स्वरूपं भवति" इति । एतदुक्तं भवति । सुखदुःखात्मकं दृश्यं भोग्यं, सुखदुःखे चाऽनुकूलयितृप्रतिकूलयितृणी तत्त्वेन(१) तदर्थे एव व्यवतिष्ठेते । विषया अपि हि शब्दादयस्तादात्म्यादेव(२) चाऽनुकूलयितारः प्रतिकूलयितारश्च । नचैषामात्मैवानुकूलनीयः प्रतिकूलनीयश्च । स्वात्मनि वृत्तिविरोधाद् । अतः पारिशेष्याच्चितिशक्तिरेवाऽनुकूलनीया च प्रतिकूलनीया च । तस्मात्तदर्थमेव दृश्यं नतु दृश्यार्थम् । अतश्च तदर्थ एव दृश्यस्यात्मा, न दृश्यार्थो यत*

टि० (१) तत्त्वेन=अनुकूलयितृप्रतिकूलयितृत्वेन, तदर्थे=अनुकूलनीयप्रतिकूलनीयार्थे एव नाऽऽत्मार्थे इत्यर्थः । यद्वा भोग्यत्वेन सुखदुःखे भोक्त्रर्थे एव व्यवतिष्ठेते, नात्मार्थे इत्यर्थः ।
(२) तादात्म्यादेव=सुखदुःखमोहात्मकत्वादेवेत्यर्थः । * यदिति यत इत्यर्थे ।

भा० दृश्यस्यात्मा=स्वरूपं भवतीत्यर्थः।तत्स्वरूपं तु पररूपेण प्रतिलब्धात्मकं भोगाऽपवर्गार्थतायां कृतायां पुरुषेण न दृश्यत इति, स्वरूप हानादस्य नाशः प्राप्तो, (१) न तु विनश्यति ॥२१॥ कस्माद्,

सू० कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वाद् ॥२२

भा० कृतार्थमेकं पुरुषं प्रति दृश्यं नष्टमपि=नाशं प्राप्तमपि अनष्टं तद्, अन्यपुरुषसाधारणत्वात्। कुशलं पुरुषं प्रतिनाशं प्राप्तमप्यकु-

---

टी० स्वरूपमस्य यावत्पुरुषार्थमनुवर्त्तते, निर्वर्त्तिते च पुरुषार्थे निवर्त्तेत इत्याह "तत्स्वरूपं तु" इति । स्वरूपं तु दृश्यस्य जडं, पररूपेण=आत्मरूपेण चैतन्येन प्रतिलब्धात्मकम्=अनुभूतस्वरूपं, भोगाऽपवर्गार्थतायां कृतायां पुरुषेण न दृश्यते=भोगः=सुखाद्याकारशब्दाद्यनुभवः । अपवर्गः=सत्त्वपुरुषान्यताऽनुभवः। तच्चैतदुभयमप्यजानतो*जडाया बुद्धेः पुरुषच्छायाऽऽपत्त्येति पुरुषस्यैव। तथाच पुरुषभोगापवर्गयोः कृतयोर्दृश्यस्य भोगापवर्गार्थता समाप्यत इति भोगापवर्गार्थतायां कृतायामित्युक्तम् । अत्रान्तरे चोदयति-"स्वरूपहानाद्"इति। परिहरति "न तु विनश्यति" इति ॥२१॥ नन्वत्यन्ताऽनुपलभ्यं कथं न विनश्यतीत्याशयवान् पृच्छति "कस्माद्"इति। सूत्रेणोत्तरमाह "कृतार्थमित्यादिना, तदन्यसाधारणत्वादित्यन्तेन"॥२२॥ कृतोऽर्थो यस्य पुरुषस्य स तथा, तं प्रति नष्टमप्यनष्टं तद् दृश्यम्। कुतः? सर्वान् पुरुषान् कुशलान् अकुशलान् प्रति साधारणत्वाद्। व्याचष्टे-"कृतार्थमेकम्"इति। नाशः=अदर्शनं, अनष्टं तु दृश्यमन्यपुरुषसाधारणत्वात् तस्माद् दृश्यात्परस्यात्मनश्चैतन्यं रूपं तेन, तदिह श्रुतिस्मृतीतिहासपुराणप्रसिद्धमव्यक्तमनवयवमेकमानाश्रयं व्यापि नित्यं विश्वकार्यशक्तिमद् । यद्यपि कुशलेन तं प्रति कृतकार्य्यं न दृश्यते तथाप्यकुशलेन दृश्यमानं न नास्ति। न हि रूपमन्धेन न दृश्यत इति चक्षुष्मताऽपि दृश्यमानमभावप्राप्तं भवति। न च प्रधानवदे-

---

टि० (१) अत्रेदं शङ्क्याऽऽकूतं—न हि पातञ्जलैरुपनिषद्वत्प्रतिजीवं भिन्ना प्रकृतिरभ्युपेयते येन यस्य जीवस्य विद्योत्पन्ना तस्याऽपनीयते, न जीवान्तरस्य । भिन्नाधिकरणयोर्विद्याऽविद्ययोर्विरोधविरहाद् इत्येवं वक्तुं युज्येत । किन्तर्हि प्रधानैक्यम् । तथाच तस्यैकत्वेन तदुच्छेदे सर्वोच्छेदोऽनुच्छेदे वा न कस्यचिदित्यनिर्मोक्षप्रसङ्ग इति । * पुरुषविशेषणमिदम् ।

भा० शलान् पुरुषान् प्रत्यकृतार्थमिति तेषां दृशेः कर्मविषयतामापन्नं लभत एव पररूपेणाऽऽत्मरूपमिति। अतश्च दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यात इति। तथाचोक्तं—"धर्मिणामनादिसंयोगाद् धर्ममात्राणामप्यनादिः संयोग"इति ॥ २२ ॥

टी० एक एव पुरुषः[१], तन्नानात्वस्य जन्ममरणसुखदुःखोपभोगमुक्तिसंसारव्यवस्थया सिद्धेः। एकत्वश्रुतीनां च प्रमाणान्तरविरोधात्कथञ्चिद्देशकालविभागाऽभावेन भक्त्याऽप्युपपत्तेः। प्रकृत्येकत्वपुरुषनानात्वयोश्च श्रुत्यैव साक्षात्प्रतिपादनाद्। "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य"इति श्रुतिः। अस्या एवश्रुतेश्चानेन सूत्रेणार्थोऽनूदित इति। यतो दृश्यं नष्टमप्यनष्टं पुरुषान्तरं प्रत्यस्ति अतो दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यातः। अत्रैवाऽऽगमिनामनुमतिमाह-"तथा चोक्तम्"इति । धर्मिणां गुणानाम्, आत्मभिरनादिसंयोगाद् धर्ममात्राणां = महदादीनामप्यनादिः संयोग इति। एकैकस्य महदादेः संयोगोऽनादिरप्यनित्य एव यद्यपि तथापि सर्वेषां महदादीनां नित्यः। पुरुषान्तराणां साधारणत्वादत उक्तं—"धर्ममात्राणाम्" इति । मात्रग्रहणेन व्याप्तिं गमयति। अत एतद् भवति। यद्यप्येकस्य महतः संयोगोऽतीततामापन्नस्तथाऽपि महदन्तरस्य पुरुषाणां संयोगो नातीत इति नित्य उक्तः ॥२२॥

टि० (१) ननु "एको देवः सर्वभूतेषु गूढः" "एक एव हि भूतात्मा भूते भूते व्यवस्थित" इत्यादि श्रुतिस्मृतिभ्यः पुरुषैकत्वाऽवगमात्कथं कुशलाऽकुशलभेदेन प्रधानस्य नष्टाऽनष्टत्वव्यवहार इत्यत आह "न च प्रधानवदेकः पुरुष" इति । तत्रोपपत्तिमाह "तन्नानात्वस्येति" । जन्म चाऽत्राऽपूर्वदेहेन्द्रियाद्यभिसंबन्ध एव, न तु पुरुषस्य परिणामस्तस्याऽपरिणामित्वाद्। एवमुपात्तदेहादित्यागो मरणं, न तु विनाशः। आत्मनः कूटस्थनित्यत्वादेकस्मिन् जायमाने म्रियमाणे वा, सुखिनि दुःखिनि वा, बद्धे मुक्ते वा नेतरे जन्मादिभाजो भवन्तीति या व्यवस्था सा नोपपद्येत, यदि सर्वशरीरेष्वेक एव पुरुषोऽभ्युपेयेतेति भावः। तथा च साङ्ख्यसूत्रं "जन्मादिव्यवस्थातः पुरुषबहुत्वम्" अ० १. सू० १४९ इति । स्पष्टं चैतद् "जन्ममरणकरणानां प्रतिनियमाद्" इति साङ्ख्यकारिकायां तत्त्वकौमुद्याम् । इदं च बहुत्वं यदवच्छेदेन पुरुषस्य जन्मादिमत्त्वं तदवच्छिन्नस्यैव, न तु शुद्धस्य।यथा चैतत्तथा भूमिकायां भिक्षुमतनिराकरणप्रस्तावेऽभिहितमस्माभिः । "नाऽद्वैतश्रुतिविरोधो जातिपरत्वाद्" इति साङ्ख्यसूत्रमाश्रित्यैकत्वश्रुतीनां गतिमाह "एकत्व" इति ।

संयोगस्वरूपाऽभिधित्सयेदं सूत्रं प्रववृते ।

सू० स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुसंयोगः॥२३॥

भा०पुरुषः स्वामी दृश्येन स्वेन दर्शनार्थं संयुक्तः*तस्मात्संयोगाद् दृश्यस्योपलब्धिर्या स भोगः।या तु द्रष्टुः स्वरूपोलब्धिः सोऽपवर्गः। दर्शनकार्य्यावसानः संयोग इति दर्शनं वियोगस्य कारणमुक्तं, दर्शनमदर्शनस्य प्रतिद्वन्द्वीति अदर्शनं संयोगनिमित्तमुक्तं,नाऽत्र दर्शनं मोक्षकारणम्, अदर्शनाऽभावादेव बन्धाभावः स मोक्ष इति। दर्शनस्य भावे बन्धकारणस्याऽदर्शनस्य नाश इत्यतो दर्शनज्ञानं

टी० तदेवं तादर्थ्ये संयोगकारणे उक्ते प्रासङ्गिके प्रधाननित्यत्वे संयोगसामान्यनित्यत्वे हेतौ चोक्ते, संयोगस्य यत्स्वरूपम्=असाधारणो विशेष इति यावत् तदभिधित्सयेदं सूत्रं प्रववृते "स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोग" इति ॥ २३ ॥ यतो दृश्यं तदर्थमतस्तज्जानितोपकारं भजमानः पुरुषस्तस्य स्वामी भवति।भवति च दृश्यमस्य स्वम् । स चाऽनयोः संयोगः शक्तिमात्रेण व्यवस्थितस्तत्स्वरूपोपलब्धिहेतुः । तदेतद्भाष्यमवद्योतयति । "पुरुष" इति । पुरुषः स्वामी योग्यतामात्रेण[1] दृश्येन स्वेन योग्यतयैव दर्शनार्थं संयुक्तः । शेषं सुगमम् । स्यादेतद् । द्रष्टुः स्वरूपोपलब्धिरपवृज्यतेऽनेनेत्यपवर्ग उक्तः। न च मोक्षः साधनवान् । तथा सत्ययं मोक्षत्वादेव च्यवेतेत्यत आह"दर्शनकार्य्यावसान" इति । दर्शनकार्य्यावसानो बुद्धिविशेषेण सह पुरुषविशेषस्य संयोग इति दर्शनं वियोगकारणमुक्तम् । कथं पुनर्दर्शनकार्य्यावसानत्वं संयोगस्येत्यत आह— "दर्शनम्" इति । ततः किमित्यत आह—"अदर्शनम्" इति । अदर्शनम्= अविद्या, संयोगनिमित्तमुक्तम् । उक्तमर्थं स्पष्टयति—"नात्र इति, ननु दर्शनमदर्शनं विरोधिनं विनिवर्त्तयतु, बन्धस्य कुतो निवृत्तिरित्यत आह— "दर्शनस्य"इति । बुद्ध्यादिविविक्तस्यात्मनः स्वरूपाऽवस्थानं मोक्षउक्तो, न तस्य साधनं दर्शनमपि त्वऽदर्शननिवृत्तिरित्यर्थः । असाधारणं संयोगे

टि० (१) संयोग एव संबन्धो न योग्यतामात्रमिति विज्ञानोक्तिर्हेया । निरवयवयोर्विभुनोः प्रधानपुरुषयोः संयोगाऽसम्भवादित्यलम् । * संयुक्तः—अत्र भवतीति शेषः ।

भा० कैवल्यकारणमुक्तम्। किञ्चेदमदर्शनं नाम, किं गुणानामधिकारः । १ । अहो स्विद् दृशिरूपस्य स्वामिनो दर्शितविषयस्य प्रधानचित्तस्याऽनुत्पादः, स्वस्मिन् दृश्ये विद्यमाने दर्शनाभावः । २ । किमर्थवत्ता गुणानाम्[1] । ३ । अथाऽविद्या स्वचित्तेन सह निरुद्धा स्वचित्तस्योत्पत्तिबीजम्[2] । ४ । किं स्थितिसंस्कारक्षये गतिसंस्काराऽभिव्यक्तिः,

टी० हेतुमदर्शनविशेषं ग्रहीतुमदर्शनमात्रं विकल्पयति "किञ्चेदम्" इति । पर्य्युदासं गृहीत्वाह—"किं गुणानामधिकार" इति। अधिकारः=कार्य्यारम्भणसामर्थ्यं,ततो हि संयोगः संसारहेतुरुपजायते। प्रसज्ज्यप्रतिषेधं गृहीत्वा द्वितीयं विकल्पमाह "अहोस्विद्" इति । दर्शितो विषयः शब्दादिः सत्त्वपुरुषाऽन्यता च येन चित्तेन तस्य तद्विषयस्याऽनुत्पादः । एतदेव स्फोरयति "स्वस्मिन्" इति । दृश्ये=शब्दादौ सत्त्वपुरुषाऽन्यतायां चेति, तावदेव प्रधानं विचेष्टते न यावद् द्विविधदर्शनमभिनिर्वर्त्तयति, निष्पादितोभयदर्शनं तु विनिवर्त्तत इति । पर्य्युदास एव तृतीयं विकल्पमाह—"किमर्थवत्ता गुणानाम्" इति । सत्कार्य्यवादसिद्धौ हि भाविनावपि भोगापवर्गावव्यपदेश्यतयाऽस्त इत्यर्थः । पर्य्युदास एव चतुर्थं विकल्पमाह—"अथाऽविद्या" इति । प्रतिसर्गकाले स्वचित्तेन सह निरुद्धा=प्रधानसाम्यमागता वासनारूपेण स्वचित्तोत्पत्तिबीजम्। तेन दर्शनादन्याऽविद्यावासनैवादर्शनमुक्ता । पर्य्युदास एव पञ्चमं विकल्पमाह"—किंस्थिति" इति । स्थितिसंस्कारस्य=प्रधानवर्त्तिनः साम्यपरिणामपरम्परावाहिनः क्षये, गतिः=महदादि विकारारम्भः। तद्धेतुः संस्कारः प्रधानस्य गतिसंस्कारस्तस्याऽभिव्यक्तिः = कार्य्योन्मुखत्वम् । तदुभयसंस्कारसद्भावे मतान्तराऽनुमतिमाह—

टि० (१) प्रथमविकल्पे गुणानामारम्भणसामर्थ्यमदर्शनमित्युक्तमनेन च विकल्पेनाऽनागतावस्थाया गुणेषु भोगाऽपवर्गावस्थानस्यादर्शनत्वमित्युक्तमिति भेदः ।

(२) प्रलयकाले स्वाश्रयचित्तेन सह प्रधानसाम्यं गताऽपि सर्गकाले पुनः स्वाश्रयचित्तस्योत्पत्तिबीजं या विपर्ययज्ञानवासना किं साऽदर्शनमितिविकल्पार्थः । अयमेव पक्षः सिद्धान्तो भविष्यतीतरेषान्त्वेतत्समानियतभावितयोपन्यास इति बोध्यम् ।

भा० यत्रेदमुक्तं—"प्रधानं स्थित्यैव वर्त्तमानं विकाराऽकरणादप्रधानं स्यात्, तथा गत्यैव वर्त्तमानं विकारनित्यत्वादप्रधानं स्यात्। उभयथा चाऽस्या प्रवृत्तिः प्रधानव्यवहारं लभते नाऽन्यथा। कारणान्तरेष्वपि कल्पितेष्वेष समानश्चर्चः" ॥५॥ दर्शनशक्तिरेवाऽदर्शनमित्येके"प्रधानस्यात्मख्यापनार्था प्रवृत्तिः" इतिश्रुतेः।सर्व-

टी० "यत्रेदमुक्तम्" इति। ऐकान्तिकत्वं व्यासेधाद्भिः[१]। प्रधीयते=जन्यते विकारजातमनेनेति प्रधानं, तच्चेत्स्थित्यैव वर्त्तेत न कदाचिद् गत्या ततो विकाराऽकरणान्न प्रधीयते तेन किञ्चिदित्यप्रधानं स्याद्। अथ गत्यैव वर्त्तेत न कदाचिदपि स्थित्या तत्राऽऽह-"तथा गत्यैव" इति। क्वचित्पाठः स्थित्यै-गत्यै-इति। तादर्थ्ये चतुर्थी,एवकारश्च द्रष्टव्यः। स्थित्यै चेन्न वर्त्तेत न क्वचिद्विकारो विनश्येत। तथा च भावस्य सतोऽविनाशिनो नोत्पत्तिरपीति विकारत्वादेव च्यवेत। एवञ्च न प्रधीयते अत्र किञ्चिदित्यप्रधानं स्यात्। तदुभयथा स्थित्या गत्या चाऽस्य प्रवृत्तिः प्रधानव्यवहारं लभते, नान्यथा =एकान्ताऽभ्युपगमे। न केवलं प्रधाने, कारणान्तरेष्वपि=परब्रह्मतन्माया-परमाण्वादिषु कल्पितेषु समानः, चर्चा=विचारः। तान्यपि हि स्थित्यैव वर्त्तमानानि विकाराऽकरणादकारणानि स्युः, गत्यैव वर्त्तमानानि विकारनित्यत्वादकारणानि स्युरिति च। पर्य्युदास एव च षष्ठं कल्पमाह "दर्शनशक्तिरेव" इति। यथा प्रजापतिव्रते "नेक्षेतोद्यन्तमादित्यम्" इति[२] अनीक्षणप्रत्यासन्नः सङ्कल्पो गृह्यत एवमिहापि दर्शननिषेधे तत्प्रत्यासन्ना तन्मूला शक्तिरुच्यते। सा च दर्शनं भोगादिलक्षणं प्रसोतुं द्रष्टारं दृश्येन योजयतीति। अत्रैव श्रुतिमाह 'प्रधानस्य' इति। स्यादेतत् प्रधानमात्मख्या

टि० (१) स्थित्यैव प्रधानं वर्त्तते न गत्या। यद्वा गत्यैव प्रधानं वर्तते न स्थित्येत्यनयोः पक्षयोरेकतरपक्षाऽवधारणरूपं नियमं निराकुर्वद्भिः पञ्चशिखाचार्य्यैरेतदुक्तमित्यर्थः।

(२) यथा "नेक्षेतोद्यन्तमादित्यं नाऽस्तं यान्तं कदाचन। नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्" इतिवाक्ये प्रकरणोपक्रमे "अथातः प्रजापतिव्रतम्" इति व्रतशब्दश्रवणाद् व्रतस्यचाऽनुष्ठेयत्वाद् नञोमुख्याऽर्थस्यचाऽभावस्याऽननुष्ठेयत्वान्नञेक्षणविरुद्धा तत्प्रत्यासन्ना नेक्षिष्य इति मानसी क्रिया गृह्यते तद्वद् दर्शनविरुद्धा तत्प्रत्यासन्ना या पुरुषायाऽऽत्मानं दर्शयितुं प्रधानस्य समुत्साहशक्तिः साऽदर्शनमिति भावः।

भा०बोध्यबोधसमर्थः प्राक् प्रवृत्तेः पुरुषो न पश्यति, सर्वकार्य्यकरणासमर्थं दृश्यं तदा न दृश्यत इति[१] ।६। उभयस्याऽप्यदर्शनं धर्म इत्येके। तत्रेदं दृश्यस्य स्वात्मभूतमपि पुरुषप्रत्ययाऽपेक्षं दर्शनं दृश्यधर्मत्वेन भवति। तथापुरुषस्यानात्मभूतमपि दृश्यप्रत्ययापेक्षं पुरुषधर्मत्वेनेव दर्शनमवभासते । दर्शनज्ञानमेवाऽदर्शनमिति

---

टी० पनार्थं प्रवर्त्तत इति श्रुतिराह, न त्वात्मदर्शनशक्तिः प्रवर्त्तत इत्यत आह—"सर्वबोध्यबोधसमर्थ" इति । प्राक् प्रवृत्तेः प्रधानस्य नाऽऽत्मख्यापनमात्रं प्रवृत्तौ प्रयोजकमसामर्थ्ये तदयोगात् । तस्मात्सामर्थ्यं प्रवृत्तेः प्रयोजकमिति श्रुत्याऽर्थादुक्तमित्यर्थः । दर्शनशक्तिः प्रधानाश्रयेत्यङ्गीकृत्य षष्ठः कल्पः, इमामेवोभयाश्रयामास्थाय सप्तमं कल्पमाह—"उभयस्याप्यदर्शनम्" इति उभयस्य=पुरुषस्य च दृश्यस्य चादर्शनं=दर्शनशक्तिर्धर्म इत्येके । स्यादेतद्, मृष्यामहे दृश्यस्येति, तस्यसर्वशक्त्याऽऽश्रयत्वात्, न द्रष्टुरितिपुनर्मृष्यामः । न हि तदाधारा ज्ञानशक्तिः। तत्र ज्ञानस्याऽसमवायाद्, अन्यथा परिणामापत्तिरित्यत आह—"तत्रेदम्"इति, भवतु दृश्यात्मकं, तथाऽपि तस्य जडत्वेन तद्गतशक्तिकार्य्यं दर्शनमपि जडमिति न शक्यं तद्धर्मत्वेन विज्ञातुं, जडस्य स्वयमप्रकाशत्वाद् । अतो दृशेरात्मनः प्रत्ययं=चैतन्यच्छायापत्तिमपेक्ष्य दर्शनं दृश्यधर्मत्वेन भवति=विज्ञायते। विषयेण विषयिण उपलक्षणात्। नन्वेतावताऽपि दृश्यधर्मत्वमस्य ज्ञानस्य भवति, न तु पुरुषधर्मत्वमपीत्यत आह "तथा पुरुषस्य" इति । सत्यं पुरुषस्यानात्मभूतमेव, तथाऽपि दृश्यबुद्धिसत्त्वस्य यः प्रत्ययः=चैतन्यच्छायाऽऽपत्तिस्तमपेक्ष्य पुरुषधर्मत्वेनेव न तु पुरुषधर्मत्वेन। एतदुक्तं भवति—चैतन्यबिम्बोद्ग्राहितया बुद्धिचैतन्ययोरभेदाद् बुद्धिधर्माश्चैतन्यधर्मा इव चकासतीति । अष्टमं कल्पमाह "दर्शनज्ञानम्" इति। ज्ञानमेव शब्दादीनामदर्शनं, न तु सत्त्वपुरुषाऽन्यताया इति केचिद्। यथा चक्षू रूपे प्रमाणमपि रसादावप्रमाणमुच्यते ।

---

टि०(१) सर्वबोध्यबोधसमर्थ इत्यादिरवभासत इत्यन्त एको विकल्प इति मते त्विति शब्दो हेत्वर्थे बोध्यः। तथाच यतः प्रधानवृत्तेः प्राक् पुरुषो न पश्यति, नापि प्रधानं दृश्यतेऽत उभयस्याऽऽप्यदर्शनं धर्म इत्यर्थो बोध्यः ।

भा० केचिदभिदधति, इत्येते शास्त्रगता विकल्पाः, तत्र । विकल्पबहुत्वमेतत्सर्वपुरुषाणां गुणसंयोगे साधारणविषयम् [1] ॥ २३ ॥

यस्तु प्रत्येक्चेतनस्य स्वबुद्धिसंयोगः—

सू० तस्य हेतुरविद्या ॥ २४ ॥

भा० विपर्य्ययज्ञानवासनेत्यर्थः । विपर्य्ययज्ञानवासनावासिता न

---

टी० एतदतो भवति-सुखाद्याकारशब्दादिज्ञानानि स्वासिद्ध्यनुगुणतया द्रष्टृदृश्यसंयोगमाक्षिपन्तीति । तदेवं विकल्प्य चतुर्थविकल्पं स्वीकर्तुमितरेषां विकल्पानां सांख्यशास्त्रगतानां सर्वपुरुषसाधारण्येन भोगवैचित्र्याऽभावप्रसङ्गेन दूषयति—"इत्येते शास्त्रगता" इति ॥२३॥ चतुर्थं विकल्पं निर्धारयितुं सूत्रमवतारयति "यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोग" इति । प्रति=प्रतीपम्, अञ्चति=प्राप्नोतीति प्रत्यक् । असाधारणस्तु संयोग एकैकस्य पुरुषस्यैकैकया बुद्ध्या वैचित्र्यहेतुः । सूत्रं पठति—"तस्य हेतुरविद्या" इति ॥२४॥

नन्वविद्या [2] विपर्य्ययज्ञानं, तस्य भोगापवर्गयोरिव * स्वबुद्धिसंयोगो हेतुः, असंयुक्तायां बुद्धौ तदनुत्पत्तेः । तत्कथमविद्या संयोगभेदस्य हेतुरित्यत आह—" विपर्य्ययज्ञानवासना " इति । सर्गान्तरीयाया अविद्यायाः स्वचित्तेन सह निरुद्धाया अपि प्रधानेऽस्ति वासना । तद्वासनावासितं च प्रधानं तत्तत्पुरुषसंयोगिनीं तादृशीमेव बुद्धिं सृजति ।

---

टि० (१) तत्र = अदर्शनविषये, यद्विकल्पानां चतुर्थविकल्पाऽतिरिक्तानां बहुत्वमेतत्सर्वपुरुषाणां सामान्यगुणसंयोगे = पुरुषार्थहेतुसंयोगसामान्ये साधारणकारणविषयं, न सुखदुःखवैचित्र्यहेतुसंयोगविशेषाऽसाधारणकारणविषयमित्यर्थः । कस्तर्हि संयोगविशेषे कारणमित्याशङ्क्य उत्तरसूत्रं पूरयित्वोत्तरमाह " यस्तु इति । यस्तु सुखदुःखादिवैचित्र्यव्यवस्थापक एकैकस्य पुरुषस्यैकैकया बुद्ध्याऽसाधारणः संयोगविशेषस्तस्य हेतुरविद्या = चतुर्थविकल्पोक्तविपर्य्ययज्ञानवासनैवेत्येवं सूत्रेण सहान्वयः । तत्र—इत्यारभ्योत्तरसूत्राऽवतरणमित्येके । प्रत्यक्चेतनस्येति पाठान्तरं तु वाचस्पत्यननुगुणम् ।

(२) संयोगे सति विपर्य्ययज्ञानं विपर्य्यज्ञाने च सति संयोग इति परस्पराऽऽश्रयमाशङ्कते "नन्वविद्या" इति । * यथा भोगाऽपवर्गयोर्हेतुः स्वबुद्धिसंयोग एवं तस्य = विपर्य्ययज्ञानस्याऽपि हेतुः स एवेत्यर्थः । तत्र हेतुः—असंयुक्तायामिति ।

भा० कार्य्यनिष्ठां पुरुषख्यातिं बुद्धिः प्राप्नोति साऽधिकारा पुनरावर्त्तते,[१] सा तु पुरुषख्यातिपर्य्यवसाना कार्य्यनिष्ठां प्राप्नोति चरिताऽधिकारा निवृत्ताऽदर्शना बन्धकारणाऽभावान्न पुनरावर्त्तते। अत्र कश्चित् षण्डकोपाख्यानेनोद्घाटयति[२]—मुग्धया भार्य्ययाऽभिधीयते षण्डक, आर्य्यपुत्र! अपत्यवती मे भगिनी किमर्थं नाहमिति। स तामाह मृतस्तेऽहमपत्यमुत्पादयिष्यामीति। तथेदं विद्यमानं ज्ञानं चित्तनिवृत्तिं[३] न करोति विनष्टं करिष्यतीति का प्रत्याशा। तत्राऽऽचार्य्यदेशीयो वक्ति—ननु बुद्धिनिवृत्तिरेव मोक्षः। अदर्शन-

टी० एवं पूर्वपूर्वसर्गेष्वित्यनादित्वाददोषः। अत एव प्रतिसर्गावस्थायां न पुरुषा मुच्यत इत्याह "विपर्य्ययज्ञान" इति। यदा पुरुषख्यातिं कार्य्यनिष्ठां प्राप्ता † तदा विपर्य्ययज्ञानवासनाया बन्धकारणस्याभावान्न पुनरावर्त्तत इत्याह—"सा तु" इति। अत्र कश्चित्=नास्तिकः कैवल्यं षण्डकोपाख्यानेनोपहसति। षण्डकोपाख्यानमाह—"मुग्धया" इति। किमर्थमित्यर्थ—शब्दो निमित्तं लक्षयति। प्रयोजनस्याऽपि निमित्तत्वात्। षण्डकोपाख्यानसाम्यमापादयति—"तथेदम्" इति। इदं विद्यमानं गुणपुरुषान्यताख्यातिज्ञानं चित्तनिवृत्तिं न करोति, परवैराग्येण ज्ञानप्रसादमात्रेण ससंस्कारं निरुद्धं विनष्टं करिष्यतीति का प्रत्याशा, यस्मिन् सत्येव यद् भवति तत्तस्य कार्य्यं न तु यस्मिन्नसतीति भावः। अत्रैकदेशिमतेन परिहारमाह—"तत्राचार्य्यदेशीय" इति। ईषदपरिसमाप्त आचार्य्य आचार्य्यदेशीयः। आचार्य्यस्तु वायुप्रोक्ते* कृतलक्षणः "आचिनोति च

टि० (१) विपर्य्ययज्ञानवासनावासिता या बुद्धिः सा यदा सत्त्वपुरुषाऽन्यताख्यातिरूपां कार्य्यनिष्ठां = स्वकर्त्तव्यचरमसीमां न प्राप्नोति तदा साऽधिकारा सती पुनरावर्त्तते। यदा तु पुरुषख्यातिपर्य्यवसाना सती कार्य्यनिष्ठां प्राप्नोति तदा समाप्तकर्त्तव्या सती न पुनरावर्त्तते। एवञ्चान्वयव्यतिरेकाभ्यां विपर्य्ययज्ञानवासनैव संयोगहेतुरित्यर्थः।

(२) षण्डकः=नपुंसकः। तद्दृष्टान्तेन कैवल्यमाक्षिपतीत्यर्थः। † बुद्धिरिति शेषः।

(३) चित्तनिवृत्तिरूपं कैवल्यमित्यर्थः। * वायुपुराणे।

भा० कारणाऽभावाद् बुद्धिनिवृत्तिः । तच्चाऽदर्शनं बन्धकारणं दर्शनान्निवर्त्तते । तत्र चित्तनिवृत्तिरेव मोक्षः[१], किमर्थमस्थान एवाऽस्य मतिविभ्रमः ॥ २४ ॥

हेयं दुःखं हेयकारणं च संयोगाख्यं सनिमित्तमुक्तमतः परं हानं वक्तव्यम्—

टी० शास्त्रार्थमाचारे स्थापयत्यपि । स्वयमाचरते यस्मादाचार्य्यस्तेन चोच्यते" इति । भोगविवेकख्यातिरूपपरिणतबुद्धिनिवृत्तिरेव मोक्षः । नच बुद्धिस्वरूपनिवृत्तिः।सा च धर्ममेघान्तविवेकख्यातिप्रतिष्ठाया अनन्तरमेव भवति । सत्यपि बुद्धिस्वरूपमात्राऽवस्थान इत्यर्थः । एतदेव स्फोरयति-"अदर्शन" इति। अदर्शनस्य बन्धकारणस्याऽभावाद् बुद्धिनिवृत्तिः । तच्चाऽदर्शनं बन्धकारणं दर्शनान्निवर्त्तते। दर्शननिवृत्तिस्तु परवैराग्यसाध्या। सत्यपि बुद्धिस्वरूपाऽवस्थाने मोक्ष इति भावः । एकदेशिमतमुपन्यस्य स्वमतमाह-"तत्रचित्तनिवृत्तिरेवमोक्ष" इति । ननूक्तं दर्शने निवृत्तेऽचिराच्चित्तस्वरूपनिवृत्तिर्भवतीति कथं दर्शनकार्य्येत्यत आह "कथमस्थान एवाऽस्य मतिविभ्रम" इति। अयमभिसन्धिः—यदि दर्शनस्य साक्षाच्चित्तनिवृत्तौ कारणभावमङ्गीकुर्महि तत एवम् उपाऽऽलभ्येमहि, किन्तु विवेकदर्शनं प्रकर्षकाष्ठां प्राप्तं निरोधसमाधिभावनाप्रकर्षक्रमेण चित्तनिवृत्तिमत्पुरुषस्वरूपाऽवस्थानोपयोगीत्यातिष्ठामहे, तत्कथमुपालभ्येमहीति ॥ २४ ॥

तदेवं व्यूहद्वयमुक्त्वा तृतीयव्यूहाऽभिधानाय सूत्रमवतारयति "हेयं दुःखम्"

टि० (१) ननु चित्तनिवृत्तेरेव चेन्मोक्षस्तर्ह्याचार्य्यदेशीयमतात्कोऽस्य विशेषः । तेनाऽपि हि बुद्धिनिवृत्तेरेव मोक्षत्वप्रतिपादनाद् बुद्धिचित्तयोश्च पर्य्यायेणात्र व्यवहाराद् इति चेदत्र केचित् चित्तनिवृत्तिरेवमोक्ष इति न समाधानान्तरेण पक्षान्तरम्, अपि त्वाचार्य्यदेशीयसमाधानाऽनुमोदनमात्रम् । ज्ञानस्य साक्षाच्चित्तनिवृत्तिहेतुत्वानभ्युपगमेन शङ्काया एवाऽनुत्थितेरुपेक्षणीये प्रत्युत्तरदानमात्रेण चाचार्य्यदेशीयत्वमित्याहुः । उपेक्षणीयत्वमेवाऽऽह "किमर्थमस्थाने" इति । अस्य=नास्तिकस्याऽनवसरो व्यामोहोऽनर्थ एवेति भावः। स्वरूपतः सत्यामपि बुद्धौ शब्दाद्याकारपरिणामनिवृत्तिर्मोक्ष इत्येकदेशिमतं, स्वरूपत एव बुद्धेर्विलयो मोक्ष इति सिद्धान्तिमतमिति विशेष इत्यपि प्राहुः।

सू० तदभावात् संयोगाऽभावो हानं तद् दृशेः कैवल्यम् ॥ २५ ॥

भा०तस्याऽदर्शनस्याऽभावाद् बुद्धिपुरुषसंयोगाऽभावः=आत्यन्तिको बन्धनोपरम इत्यर्थः।एतद् हानं, तद् दृशेः कैवल्यं=पुरुषस्याऽमिश्रीभावः,पुनरसंयोगो गुणैरित्यर्थः। दुःखकारणनिवृत्तौ दुःखोपरमो हानं,तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम् ॥ २५ ॥

अथ हानस्य कः प्राप्त्युपाय(१) इति ।

सू० विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥

भा०सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः। सात्वनिवृत्तमिथ्याज्ञाना प्लवते। यदा मिथ्याज्ञानं दग्धबीजभावं वन्ध्यप्रसवं सम्पद्यते तदा विधूतक्लेशरजसः सत्त्वस्य परे वैशारद्ये परस्यां वशीकारसञ्ज्ञायां

---

टी०इति। सू०"तदभावात्संयोगाऽभावो हानं तद् दृशेः कैवल्यम्" ॥२५॥ इति। सूत्रं व्याचष्टे "तस्य" इति। अस्ति हि महाप्रलयेऽपि संयोगाऽभावोऽत उक्तमात्यन्तिक इति। दुःखोपरमो हानमिति पुरुषार्थता दर्शिता। शेषमतिरोहितम् ॥२५॥ हानोपायलक्षणं चतुर्थं व्यूहमाख्यातुं सूत्रमवतारयति—"अथ" इति। सू० "विवेकख्यातिरविप्लवा हानोपाय" इति ॥२६॥ आगमाऽनुमानाभ्यामपि विवेकख्यातिरस्ति। न चासौ व्युत्थानं तत्संस्कारं वा निवर्त्तयति। तद्वतोऽपि(२) तदनुवृत्तेः, इति * तन्निवृत्त्यर्थम् "अविप्लवा" इति। विप्लवो=मिथ्याज्ञानं तद्रहिता। एतदुक्तं भवति—श्रुतमयेन ज्ञानेन विवेकं गृहीत्वा युक्तिमयेन च व्यवस्थाप्य दीर्घकाल-

---

टि० (१) ननु पूर्वसूत्रे तदभावादिति पञ्चम्याऽविद्याऽभावस्य बुद्धिपुरुषसंयोगनिवृत्तिरूपहानं प्रति हेतुत्वमुक्तमेव,तत्कथं तत्प्राप्त्युपायचोदनाऽवकाश इति चेद्,नैषदोषः। हानहेतुभूताऽविद्याऽभावस्य को लाभोपाय इत्यर्थे तात्पर्य्यात्। एवञ्चाविद्याऽभावस्साक्षान्मोक्षहेतुर्विवेकख्यातिस्त्वविद्यानिवृत्तिद्वारेति बोध्यम्। एतच्च ( १९७ ) एतत्पृष्ठे भाष्ये स्पष्टम्। (२)तद्वतः=आगमाऽनुमाननिष्पन्नविवेकज्ञानस्य । तदनुवृत्तेः=व्युत्थानाऽनुवृत्तेः । * इति=अतः ।

वर्त्तमानस्य विवेकप्रत्ययप्रवाहो निर्मलो भवति। सा विवेकख्यातिरविप्लवा हानस्योपायः।ततो मिथ्याज्ञानस्य दग्धबीजभावोपगमः पुनश्चाऽप्रसव इत्येष मोक्षस्य मार्गो हानस्योपाय इति।।२६॥

सू० तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥

भा० तस्येति = प्रत्युदितख्यातेः प्रत्याम्नायः, सप्तधेति = अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तराऽनुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति। तद्यथा-परिज्ञातं हेयं,नास्य पुनः

---

टी० नैरन्तर्य्यसत्कारासेविताया: भावनाया: प्रकर्षपर्य्यन्तं समाधिगता *साक्षात्कारवती विवेकख्यातिर्निवर्त्तितसवासनमिथ्याज्ञाना निर्विप्लवा हानोपाय इति। शेषं भाष्यं सुगमम्॥ २६ ॥ विवेकख्यातिनिष्ठायाः स्वरूपमाह सूत्रेण—"तस्य सप्तधा प्रान्तभूमिः प्रज्ञा" इत्यनेन॥ २७ ॥ व्याचष्टे "तस्य" इति। प्रत्युदितख्यातेः = वर्त्तमानख्यातेर्योगिनः[1], प्रत्याम्नायः = परामर्शः, अशुद्धिरेवावरणं चित्तसत्त्वस्य तदेव मलं तस्याऽपगमात्, चित्तस्य प्रत्ययान्तराऽनुत्पादे = तामसराजसव्युत्थानप्रत्ययानुत्पादे, निर्विप्लवविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति। विषयभेदात्प्रज्ञाभेदः। प्रकृष्टोऽन्तो यासां भूमीनाम्=अवस्थानां तास्तथोक्ताः। यतः परं नास्ति सम्प्रकर्षः।प्रान्ता भूमयो यस्याः प्रज्ञाया = विवेकख्यातेः सा तथोक्ता।

* 'समधिगता' इत्यपि क्व०।

---

टि० (१) योगिन इत्युक्त्या प्रत्युदितख्यातिपदं बहुव्रीहिसमासेन विवेकिपरमितिबोधितम्। अत एव सप्तप्रकारैव प्रज्ञा विवेकिनो भवतीत्येवं विवेकिपरतया भाष्यकारैर्व्याख्यातं, यत्त्वत्र विज्ञानभिक्षुणोक्तं—नचाऽत्र प्रत्युत्पन्नख्यातेः पुरुषस्य परामर्श इत्यर्थः संभवति। पुरुषस्य पूर्वसूत्रेष्वप्रस्तुतत्वादपि तु कर्मधारयसमासेन तच्छब्दोक्तहानोपायस्य स्वरूपाख्यानं प्रत्युदितख्यातेरिति। तदेतद् भाष्यार्थाऽनवबोधपूर्वकत्वेन हेयम्। तथा हि पूर्वसूत्रस्थ-'तदभावाद्'—इत्यत्रत्यतच्छब्देनाव्यवहितपूर्वसूत्रस्थाऽविद्यापदपरामर्शवदत्राऽपि तस्येति तच्छब्देनाऽव्यवहितपूर्वसूत्रस्थहानोपाय इति मा परामर्शीत्याशंक्य भाष्यकृतोक्तं तस्येति प्रत्युदितख्यातेः प्रत्याम्नाय इति। यदि हि हानोपाय इत्येव परामृश्येत तदेयं विशेषोक्तिरकिञ्चित्करैव स्यात्पूर्वसूत्रवत्कथनमन्तरैव तल्लाभात्। किञ्च तच्छब्दपरामृष्टहानोपायस्य स्वरूपाख्यानपरत्वे प्रत्युदितख्यातेरित्यस्य विवेकिन इत्यर्थासम्भवाद् विवेकिनो भवतीति भाष्यं व्याकुप्येत। यत्तूक्तम् अप्रस्तुतत्वादिति, तदपि न। बौद्धपदार्थपरामर्शेऽपि तच्छब्द-

भा० परिज्ञेयमस्ति । १ । क्षीणा हेयहेतवो, न पुनरेतेषां क्षेतव्यमस्ति । २ । साक्षात्कृतं निरोधसमाधिना हानम् * । ३ । भावितो विवेकख्यातिरूपो हानोपायः । ४ । इत्येषा चतुष्टयी कार्य्या विमुक्तिः प्रज्ञायाः । चित्तविमुक्तिस्तु त्रयी—चरिताऽधिकारा बुद्धिः । १ । गुणा गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाऽभिमुखाः सह तेनाऽस्तं गच्छन्ति । न चैषां विप्रलीनानां पुनरस्त्युत्पादः प्रयोजनाऽभावादिति । २ । एतस्यामवस्थायां गुणसंबन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुषः । ३ । इति

टी० ता एव सप्तप्रकाराः प्रज्ञाभूमीरुदाहरति "तद्यथा" इति । तत्र पुरुषप्रयत्ननिष्पाद्यासु चतसृषु भूमिषु प्रथमामुदाहरति "परिज्ञातं हेयम्" इति । यावत्किलप्राधानिकं तत्सर्वं परिणामतापसंस्कारैर्गुणवृत्तिविरोधाद् दुःखमेवेति हेयं, तत्परिज्ञातम् । प्रान्ततां दर्शयति "नास्य पुनः किञ्चिदपरिज्ञेयमस्ति" इति । द्वितीयामाह "क्षीणा" इति । प्रान्ततामाह "न पुन:" इति । तृतीयामाह "साक्षात्कृतम्" इति । प्रत्यक्षेण निश्चितं मया संप्रज्ञाताऽवस्थायामेव निरोधसमाधिसाध्यं हानं, न पुनरस्मात्परं निश्चेतव्यमस्तीति शेषः । चतुर्थीमाह "भावित" इति । भावितो = निष्पादितो विवेकख्यातिरूपो हानोपायो, नास्याःपरं भावनीयमस्तीति शेषः । एषा चतुष्टयी कार्य्या विमुक्तिः = समाप्तिः, कार्य्यतया प्रयत्नव्याप्यता दर्शिता, क्वचित्पाठःकार्य्यविमुक्तिरिति, कार्य्यान्तरेण विमुक्तिः प्रज्ञाया इत्यर्थः । प्रयत्ननिष्पाद्याऽनुनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह "चित्तविमुक्तिस्तु त्रयी" इति । प्रथमामाह "चरिताऽधिकारा बुद्धिः" इति । कृतभोगाऽपवर्गकार्य्येत्यर्थः । द्वितीयामाह "गुणा" इति । प्रान्ततामाह "नचैषाम्" इति । तृतीयामाह "एतस्यामवस्थायाम्" इति । एतस्यामवस्थायां जीवन्नेव पुरुषः कुशलो मुक्त इत्युच्यते, चरमदेहत्वादित्याह—

टि० वृत्तेः सत्त्वेनात्र तदुपपत्तेरिति कृतं बहुना । *एतच्च व्युत्थानकालिकं वचनमसम्प्रज्ञातयोगदृष्टान्तेन कैवल्यमपि दृष्टप्रायमित्यभिप्रायेण । निरोधसमाधौ कस्याऽपि साक्षात्कारस्याऽभावाद् । यद्वा निरोधसमाधिना हानं भवतीति साक्षात्कृतं मया सम्प्रज्ञातकाल इत्यर्थः ।

भा०एतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते। प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति, गुणातीतत्वादिति ॥ २७ ॥

सिद्धा भवति विवेकख्यातिर्हानोपायः। न च सिद्धिरन्तरेण साधनमित्येतदारभ्यते[1] ।

सू० योगाङ्गाऽनुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ २८ ॥

भा०योगाङ्गानि=अष्टावभिधायिष्यमाणानि । तेषामनुष्ठानात्

---

टी०"एताम्" इति। अनौपचारिकं मुक्तमाह "प्रतिप्रसवे" इति । प्रधानलयेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणाऽतीतत्वादिति॥२७॥

तदेवं चतुरो व्यूहानुक्त्वा तन्मध्यपातितस्य हानोपायस्य विवेकख्यातेर्गोदोहनादिवत् प्रागसिद्धेः*असिद्धस्य चोपायत्वाऽभावात् सिद्ध्युपायान् वक्तुमारभत इत्याह "सिद्धा" इति। तत्राऽभिधास्यमानानां साधनानां येन प्रकारेण विवेकख्यात्युपायत्वं तद् दर्शयति सूत्रेण—"योगेत्यादिना, ख्यातेरित्यन्तेन"॥ २८॥ योगाङ्गानि हि यथायोगं दृष्टाऽदृष्टद्वारेणाऽशुद्धिं क्षिण्वन्ति[2] पञ्चपर्वणो विपर्य्ययस्येत्युपलक्षणं पुण्याऽपुण्ययोरपि जात्यायुर्भोगहेतुत्वेन

---

टि० (१) विवेकख्यातिः सिद्धा=निष्पन्ना सत्येव हानोपायो भवति नाऽनिष्पन्ना सती । विवेकख्यातिनिष्पत्तिश्चाशुद्धिविघटकयमाद्यनुष्ठानसाधनाऽधीनाऽतस्तन्निष्पत्त्युपायभूतं साधनजातमारभ्यते सूत्रकृतेति भावः । * साधनाऽनुष्ठानात् प्राक्।

(२) शौचादयो दृष्टद्वारेणाशुद्धिं नाशयन्ति, स्वाध्यायादयश्चाऽदृष्टद्वारेणाशुद्धिमपगमयन्तीति भावः। अत्रेदं बोध्यम्। अशुद्धिक्षये ज्ञानदीप्तिरित्युक्त्या यमादीनां न ज्ञानोत्पत्तिकारणत्वमपि तु प्रतिबन्धकाऽपनयनद्वारा ज्ञानप्राप्तिकारणत्वम्। एवञ्च येषां पूर्वजन्मानुष्ठितैरेव यमादिभिरशुद्धेरपगमो यथा जड़भरतादीनां तेषां न तदनुष्ठानापेक्षा द्वारस्य सिद्धत्वाद् इति । यत्त्वत्र भिक्षुणोक्तं—जिज्ञासाऽनन्तरं कर्म त्याज्यमनुत्पन्नज्ञानेनाऽपीति शाङ्करमतं दुर्मतं, विपर्य्ययतानवद्वारा यमनियमान्तर्गतकर्मणां ज्ञानहेतुत्वादिति । तच्छाङ्करमतापरिशीलनपूर्वकमेव । यतो गीताभाष्य एव अ० १३ यमा नियमाश्चाऽमानित्वादयो ज्ञानसाधनत्वाज्ज्ञानमित्युच्यन्त इत्यादिना यमादीनां ज्ञानसाधनत्वस्याऽभिहितत्वाद् इत्यलं भिक्षुविरोधेन ।

भा०पञ्चपर्वणो विपर्य्ययस्याऽशुद्धिरूपस्य क्षयः=नाशः।तत्क्षये सम्यग्ज्ञानस्याऽभिव्यक्तिः,यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्वमशुद्धिरापद्यते,यथा यथा च क्षीयते तथा तथा क्षयक्रमानुरोधिनी ज्ञानस्याऽपि दीप्तिर्विवर्द्धते। सा खल्वेषा विवृद्धिः प्रकर्षमनुभवति आ विवेकख्यातेः=आ गुणपुरुषस्वरूपविज्ञानादित्यर्थः। योगाङ्गाऽनुष्ठानमशुद्धेर्वियोगकारणं, यथा परशुश्छेद्यस्य। विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्मः सुखस्य, नान्यथा कारणम्। कति चैतानि कारणानि शास्त्रे भवन्ति। नवैवेत्याह। तद्यथा—"उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाऽऽप्तयः वियोगाऽन्यत्वधृतयः कारणं नवधा स्मृतम्" इति। तत्रोत्पत्तिकारणं मनो भवति विज्ञानस्य,स्थितिकारणं मनसः पुरुषार्थता,

टी०अशुद्धिरूपत्वादिति। शेषं सुगमम्। नानाविधस्य कारणभावस्य दर्शनाद् योगाङ्गानुष्ठानस्य कीदृशं कारणत्वमित्यत आह "योगाङ्गाऽनुष्ठानम्" इति। अशुद्ध्या वियोजयति बुद्धिसत्त्वमिति अशुद्धेर्वियोगकारणम्। दृष्टान्तमाह—"यथा परशुः" इति। परशुः छेद्यं वृक्षं मूलेन वियोजयति, अशुद्ध्या वियोजयद् बुद्धिसत्त्वं विवेकख्यातिं प्रापयति। यथा धर्मः सुखस्य तथा योगाङ्गानुष्ठानं विवेकख्यातेः प्राप्तिकारणं नान्येन प्रकारेणेत्याह—विवेकख्यातेस्तु" इति। नाऽन्यथेतिप्रतिषेधश्रवणात् पृच्छति "कति चैतानि" इति। उत्तरं "नवैव" इति। तानि दर्शयति कारिकया—"तद्यथोत्पत्ति" इति। अत्रोदाहरणान्याह "तत्रोत्पत्तिकारणम्" इति। मनो विज्ञानमव्यपदेश्यावस्थातोऽपनीय वर्त्तमानावस्थामापादयदुत्पत्तिकारणं विज्ञानस्य(१) स्थितिकारणं मनसः पुरुषार्थता=अस्मितायाः उत्पन्नं मनस्तावदव-

टि० (१) अव्यपदेश्याऽवस्थातः=अतीताऽवस्थातो, विज्ञानमपनीय वर्त्तमानाऽवस्थामापादयन्मनो विज्ञानस्योत्पत्तिकारणमित्यर्थः। सत्कार्य्यवादे वर्त्तमानाऽवस्थाऽऽपादनमेवोत्पत्तिरिति भावः।

भा० शरीरस्येवाहार इति। अभिव्यक्तिकारणं यथा रूपस्याऽऽलोकस्तथा रूपज्ञानं,[१] विकारकारणं मनसो विषयान्तरं, यथाऽग्निः पाक्यस्य। प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य। प्राप्तिकारणं यो-

टी० तिष्ठते न यावद् द्विविधं पुरुषार्थमभिनिर्वर्त्तयति, अथ निर्वर्त्तितपुरुषार्थद्वयं स्थितेरपैति तस्मात्स्वकारणादुत्पन्नस्य मनसोऽनागतपुरुषार्थता स्थितिकारणम्। दृष्टान्तमाह—"शरीरस्येवाहार" इति। प्रत्यक्षज्ञाननिमित्तम् इन्द्रियद्वारा स्वतो वा विषयस्य संस्क्रिया अभिव्यक्तिः, तस्याः कारणं यथा रूपस्याऽऽलोकः। विकारकारणं मनसो विषयान्तरम्, = यथा हि मृकण्डोः समाहितमनसो वल्लकीविपञ्च्यमानपञ्चमस्वरश्रवणसमनन्तरमुन्मीलिताक्षस्य[२] स्वरूपलावण्ययौवनसंपन्नामप्सरसमुम्लोचामीक्षमाणस्य समाधिमपहाय तस्यां सक्तो मनो बभूवेति। अत्रैव निदर्शनमाह-"यथाऽग्निः" इति यथाऽग्निः पाक्यस्य = तण्डुलादेः कठिनाऽवयवसन्निवेशस्य प्रशिथिलावयवसंयोगलक्षणस्य विकारस्य कारणम्। सत एव विषयस्य प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य इति। ज्ञायत इति[३] ज्ञानम् अग्निश्चासौ ज्ञानं चेति अग्निज्ञानं तस्येति। एतदुक्तं भवति,*वर्त्तमानस्यैवाग्नेर्ज्ञेयस्य प्रत्ययकारणतया कारणमिति। "प्राप्तिकारणम्"। औत्सर्गिकी निरपेक्षाणां कारणानां कार्य्यक्रिया प्राप्तिः। तस्याः कुतश्चिदपवादोऽप्राप्तिः। यथा निम्नोपसर्पणस्वभावानामपां प्रतिबन्धः सेतुना। तथेहाऽपि बुद्धिसत्त्वस्य सुखप्रकाशशीलस्य स्वाभाविकी सुखविवेकख्यातिजनकता प्राप्तिः। सा कुतश्चिदधर्मात्तमसो वा प्रतिबन्धान्न भवति। धर्माद् योगा-

टि० (१) अभिव्यक्ति—शब्देन, बुद्धिवृत्तिः पौरुषेयो बोधश्चेत्युभयं गृह्यते। तत्र बुद्धिवृत्तावालोकः कारणं, पौरुषेयबोधे च बुद्धिवृत्तिरूपं रूपज्ञानमिति विभागः। (२) वीणातानःसृतसप्तस्वराऽन्तर्गतकोकिलरवसदृशपञ्चमस्वरश्रवणसमनन्तरमुन्मीलिताऽक्षस्य=समाधेरुत्थितस्य, अत एवोम्लोचेतिनाम्नीमप्सरसमीक्षमाणस्य मृकण्डोर्मुनेः। (३) अग्निज्ञानस्येत्यत्र न भावल्युडन्तेन ज्ञान—शब्देन षष्ठीतत्पुरुषः। प्रत्ययकारणमित्यनेन पौनरुक्त्यापत्तेः। किन्तु "कृत्यल्युटो बहुलम्" इति स्मरणात्कर्मसाधनज्ञानशब्देन ज्ञेयार्थकेन कर्मधारय इत्याह "ज्ञायत" इति। एतेन, यथाश्रुतेऽग्निज्ञानस्येत्यत्र ज्ञानशब्दवैयर्थ्यात्, पर्वते वह्निरस्ति इति शब्दादिना यदग्निज्ञानं तस्य प्रत्ययकारणं निश्चयकारणं पर्वते धूमदर्शनमित्यर्थ इति भिक्षोर्व्याख्यानं हेयम्। आनुमानिकज्ञानस्याऽसङ्ग्रहाद्, वाचस्पत्युक्तरीत्यार्थसंभवेऽर्थान्तरपरत्वाऽऽनौचित्याच्च। अभिव्यक्तिमध्य एवानुमानिकज्ञानस्य प्रवेश इत्यपिभिक्षोः साहसमेव। न हि यथा रूपप्रत्यक्षज्ञाननिमित्तमालोक एवं धूमज्ञानमग्निप्रत्यक्षनिमित्तं, येनैवं वक्तुं युज्येतेति। * ज्ञेयार्थकज्ञानस्य कृत्यमाह।

भा० गाङ्गाऽनुष्ठानं विवेकख्यातेः। वियोगकारणं तदेवाऽशुद्धेः। अन्यत्वकारणं यथा सुवर्णस्य सुवर्णकारः।एवमेकस्य स्त्रीप्रत्ययस्य* अविद्या मूढत्वे,द्वेषो दुःखत्वे, रागः सुखत्वे, तत्त्वज्ञानं माध्यस्थ्ये। धृतिकारणं शरीरमिन्द्रियाणां तानि च तस्य, महाभूतानि शरी-

टी० ऽङ्गाऽनुष्ठानाद्वा तदपनये तदप्रतिबद्धवृत्तिस्वभावत एव तज्जनकतया तदाऽऽप्नोति। यथा वक्ष्यति="निमित्तमप्रयोजकं प्रकृतीनां,वरणभेदस्तु ततः क्षेत्रिकवद्" इति । तदेवं विवेकख्यातिलक्षणकार्य्याऽपेक्षया प्राप्तिकारणमुक्तम्। अवान्तरकार्य्यापेक्षया तदेव वियोगकारणमित्याह—" वियोगकारणम् " इति । अन्यत्वकारणमाह—" यथा सुवर्णस्य सुवर्णकार " इति । कटककुण्डलकेयूरादिभ्यो भिन्नाऽभिन्नस्य भेदविवक्षया [ कटकादिभिन्नस्याऽभेदविवेक्षया कटकादभिन्नस्य ] सुवर्णस्य कुण्डलादन्यत्वम्। तथाच कटककारी सुवर्णकारः कुण्डलादभिन्नात्सुवर्णादन्यत् कुर्वन्नन्यत्वकारणम्। अग्निरपि पाक्यस्याऽन्यत्वकारणं यद्यपि,तथाऽपि धर्मिणो धर्मयोः पुलाकत्वतण्डुलत्वयोर्भेदाऽविवक्षया धर्मयोरुपजनाऽपायेपि धर्म्म्यनुवर्त्तते इति न तस्याऽन्यत्वं शक्यं वक्तुम् इति विकारकारणत्वमुक्तम्, इति न सङ्करः। न च संस्थानभेदो धर्मिणोऽन्यत्वकारणमिति व्याख्येयम्। सुवर्णकार इत्यस्याऽसङ्गतेः। बाह्यमन्यत्वकारणमुपन्यस्याऽऽध्यात्मिकमुदाहरति "एवमेकस्य" इति। अविद्या=कमनीयेयं कन्येत्यादिज्ञानम्।सम्मोहयोगात्स एव स्त्रीप्रत्ययो मूढो=विषण्णो भवति चैत्रस्य, मैत्रस्य पुण्यवतो बत कलत्ररत्नमेतन्न तु मम भाग्यहीनस्य इति । एवं सपत्नीजनस्य तस्यां द्वेषः स्त्रीप्रत्यस्य दुःखत्वे। एवं मैत्रस्य तस्या भर्तुः रागस्तस्यैव स्त्रीप्रत्यस्य सुखत्वे। तत्त्वज्ञानं=त्वङ्मासमेदोऽस्थिमज्जासमृहः स्त्रीकायः स्थानबीजादिभिरशुचिरिति,विवेकिनां माध्यस्थ्ये=वैराग्ये कारणमिति। धृतिकारणं=शरीरमिन्द्रियाणां विधारकम्,इन्द्रियाणि च शरीरस्य।सामान्यकरणवृत्तिर्हि(१)प्राणाद्या वायवः पञ्च।तदभावेशरीरपाताद्।एवं

* एकस्य स्त्रीप्रत्ययस्य मूढत्वादिधर्माणामन्यत्वेऽविद्यादि चतुष्टयं कारणमित्यर्थः ।

टि० (१) ननु प्राणानां शरीरविधारकत्वेऽपि कथमिन्द्रियाणां विधारकत्वमित्यत आह "सामान्यकरणवृत्तिः" इति । न हि साङ्ख्यनये सामान्यकरणवृत्तिभ्योऽतिरिक्ताः प्राणा नाम सन्तीति भावः । [ ] एतच्चिह्नान्तर्गतं न स्वान्तमावर्जयति ।

भा०राणां,तानि च परस्परं सर्वेषां, तैर्य्यग्यौनमानुषदैवतानि च परस्परा ऽर्थत्वाद्,इत्येवं नव कारणानि । तानि च यथासम्भवं पदार्थान्तरेष्वपि योज्यानि। योगाङ्गानुष्ठानं तु द्विधैव कारणत्वं लभत इति ॥ २८ ॥ तत्र योगाङ्गान्यवधार्य्यन्ते—

सू० यमनियमासनप्राणायामप्रत्याहारधारणाध्यान-समाधयोऽष्टावङ्गानि ॥ २९ ॥

भा०यथाक्रममेतेषामनुष्ठानं* स्वरूपं च वक्ष्यामः ॥ २९ ॥

---

टी०मांसादिकायाङ्गानामपि परस्परविधार्य्यविधारकत्वम्। एवं महाभूतानि = पृथिव्यादीनि, मनुष्यवरुणसूर्यगन्धर्वहशशिलोकनिवासिनां शरीराणां तानि च परस्परम्—पृथिव्यां हि गन्धरसरूपस्पर्शशब्दगुणायां पञ्च महाभूतानि परस्परं विधार्य्यविधारकभावेनाऽवस्थितानि, अप्सु चत्वारि,तेजसि त्रीणि,द्वे च मातरिश्वनीति ।तैर्य्यग्यौनमानुषदैवादीनि च विधार्य्यविधारकभावेनाऽवस्थितानि । नन्वाधाराऽऽधेयभावरहितानां कुतस्तत्त्व[1] मित्यत आह "परस्परार्थत्वाद्"इति । मनुष्यशरीरं हि पशुपक्षिमृगसरीसृपस्थावरोपयोगेन ध्रियते। एवं व्याघ्रादिशरीरमपि मनुष्यपशुमृगादिशरीरोपयोगेन। एवं पशुपक्षिमृगादिशरीरमपि स्थावराद्युपयोगेन।एवं दैवशरीरमपि मनुष्योपहृतच्छागमृगकपिञ्जलमांसाज्यपुरोडाशसहकारशाखाप्रस्तरादिभिरिज्यमानं तदुपयोगेन। एवं देवताऽपि वरदानवृष्ट्यादिभिर्मनुष्यादीनि धारयतीत्यस्ति परस्परार्थत्वमित्यर्थः । शेषं सुगमम् ॥२८॥ सम्प्रति न्यूनाऽधिकसङ्ख्याव्यवच्छेदार्थं योगाङ्गान्यवधारयति "तत्र योगाङ्गान्यवधार्य्यन्त" इति । "यमेत्यादि अङ्गानीत्यन्तं"सूत्रम्॥२९॥ अभ्यासवैराग्यश्रद्धावीर्य्यादयोऽपि [2]यथायोगमेतेष्वेव स्वरूपतो नान्तरीयकतया चान्तर्भावयितव्याः ॥ २९ ॥

---

* अनुष्ठानमित्यत्र कर्त्तव्यमिति शेषः । स्वरूपं चेत्युत्तरसूत्राऽवतरणमिति भिक्षुः ।

टी० (१) तत्त्वम्=परस्परविधार्य्यविधारकत्वम् । ¶ वायौ ।

(२) ननु कथमष्टावित्यवधारणं, प्रथमपादोक्तानामभ्यासादीनामपङ्ग्रहादित्यत आह । "अभ्यासवैराग्य" इत्यादि । नन्वेतत्पादादावुक्तानान्तपआदिक्रियायोगानां नियमेषु स्वरूपतोऽन्तर्भावेऽप्यभ्यासादीनां कथं स्वरूपतोऽन्तर्भाव इत्यत आह "नान्तरीयकतया च" इति ।

तत्र—

**सू० अहिंसासत्यमस्तेयब्रह्मचर्य्याऽपरिग्रहा यमाः॥३०॥**

भा०तत्राऽहिंसा=सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः, उत्तरे च यमनियमास्तन्मूला (१)स्तत्सिद्धिपरतया तत्प्रतिपादनाय प्रतिपाद्यन्ते, *तदवदातरूपकरणायैवोपादीयन्ते । तथा चोक्तं "स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्त्तमानस्तामेवावदातरूपाम् अहिंसां करोति" सत्यं=यथार्थे वाङ्मनसे, यथा दृष्टं यथाऽनुमितं

---

टी०यमनियमाद्यङ्गान्युद्दिश्य यमनिर्देशकं सूत्रमवतारयति—"तत्र" इति । "अहिंसेत्यादि यमा" इत्यन्तं सूत्रम् ॥३०॥ योगाङ्गमहिंसामाह "सर्वथा" इति । ईदृशीमहिंसां स्तौति—"उत्तरे च" इति । तन्मूला–इति= अहिंसामपरिपाल्य कृता अप्यकृतकल्पाः, निष्फलत्वादित्यर्थः । तत्सिद्धिपरतयैवाऽनुष्ठानम् । अहिंसा चेन्मूलमुत्तरेषां कथं तेऽहिंसासिद्धिपरा इत्यत आह "तत्प्रतिपादनाय" इति । सिद्धिः=ज्ञानोत्पत्तिरित्यर्थः । स्यादेतद्, अहिंसाज्ञानार्था यद्युत्तरे, कृतं तैरन्यत एव तदवगमादित्यत आह "तदवदात" इति । यद्युत्तरे नाऽनुष्ठीयेरन् अहिंसा मलिना स्यादसत्यादिभिरित्यर्थः । अत्रैवाऽऽगमिकानां सम्मतिमाह "तथा चोक्तम्" इति । सुगमम् । सत्यलक्षणमाह "यथाऽर्थे वाङ्मनसे" इति । यथा-शब्दं साकाङ्क्षं

---

टि० अन्तरा=विना भवा अन्तरीयाः। गहादित्वाच्छः । ततः स्वार्थे के, नञ्समासे च, नान्तरीयकाः । तेषां भावस्तत्ता । तया अन्यनिष्पादकयत्नाऽनुनिष्पादनीयतयेत्यर्थः । यमाद्यनुष्ठाने सत्यभ्यासादीनामवश्यम्भावितयाऽभ्यासादीनां नान्तरीयकत्वमिति भावः । यद्वा वैराग्यस्य सन्तोषेऽन्तर्भावः । श्रद्धावीर्य्याभ्यां विना तपःस्वाध्यायाऽनुष्ठानाऽसम्भवात्तयोस्तयोरन्तर्भावोऽभ्यासस्य च समाधावन्तर्भाव, इत्येवमन्तर्भावयितव्याः । एवं मैत्र्यादीनामपि धारणास्वन्तर्भावो बोध्यः । अभ्यासवैराग्यादिभिर्विना धारणाध्यानसमाधीनामनिष्पत्तेरभ्यासादीनामाक्षेपादेव लाभ इत्यपि प्राहुः ।

(१) तन्मूलाः=मा अहिंसैव मूलं=प्रयोजनं येषां यमादीनां ते तन्मूला इत्यर्थः ।

* तदवदातरूपकरणाय=हिंसानिर्मलीकरणायेत्यर्थः ।

भा० यथा श्रुतं तथा वाङ्मनश्चेति। परत्र स्वबोधसङ्क्रान्तये वागुक्ता सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिवन्ध्या(१) वा भवेदिति । एषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय । यदि चैवमप्य-भिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत्, पापमेव भवेत्। तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टतमं प्राप्नुयात्।तस्मात्प-

---

टी०पूरयति-"यथा दृष्टम्"इति। प्रतिसंबन्धिनं तथा-शब्दं प्रतिक्षिपति—"तथा वाङ्मनश्च"इति। विवक्षायां कर्त्तव्यायाम्(२)इति । अन्यथा तु न सत्यम्। एतत्सोपपत्तिकमाह"परत्र"इति। परत्र पुरुषे स्वबोधसङ्क्रान्तये=स्वबोधसदृशबोधजननाय वाग् उक्ता=उच्चारिता। अतः सा यदि न वञ्चिता=वञ्चिका। यथा द्रोणाचार्य्येण स्वतनयाऽश्वत्थाममरणम्, आयुष्मन् सत्यधनाऽश्वत्थामा हत इति पृष्टस्य युधिष्ठिरस्य प्रतिवचनं हस्तिनमभिसन्धाय, सत्यं हतोऽश्वत्थामेति। तदिदमुक्तस्योत्तरं न युधिष्ठरस्य स्वबोधं सङ्क्रामयति(३), स्वबोधो ह्यस्य हस्तिहननविषय इन्द्रजन्मा,न चासौ सङ्क्रातः(४),किन्त्वन्य एव तस्य तनयवधबोधो जात इति । भ्रान्ता वा=भ्रान्तिजा। भ्रान्तिश्च विवक्षासमये वा,ज्ञेयार्थाऽवधारणसमये वा,प्रतिपत्त्या वन्ध्या प्रतिपत्तिवन्ध्या, यथाऽऽर्य्यान् प्रति म्लेच्छभाषा प्रतिपत्तिवन्ध्या,निष्प्रयोजना वा स्यादिति-यथाऽनपेक्षिताऽभिधाना वाक्। तत्र हि परत्र स्वबोधस्य सङ्क्रान्तिरप्यऽसङ्क्रान्तिरेव, निष्प्रयोजनत्वादिति । एवंलक्षणमपि सत्यं पराऽपकारफलं

---

टि० (१) प्रतिपत्तिवन्ध्या=परत्र ज्ञानजननाक्षमेत्यर्थः। अत्र भवेदित्यस्याग्रे, तदा सत्यमितिपूरयित्वा या इति चाध्याहृत्य परत्र स्वसदृशज्ञानजननाय या वागुच्चारिता सा यदि वञ्चितादिविशेषणाविशिष्टा न भवेत्तदा सत्यमित्येवं व्याख्येयम् । 'प्राणत्राणेऽनृतं वाच्यम्' इत्यादिस्मृतिमनुसृत्याऽऽह "एषा" इति । सा एषा वाक् प्रवृत्ता=उच्चारिता सती यदि भूतोपघाताय न भवेदपि तु भूतोपकारमेव कुर्य्यात्तदा मिथ्याऽपि सत्या ज्ञेयेत्यर्थः। भूताऽपकारकरन्तु सत्यमपि फलेन मिथ्यातुल्यमित्याह । " यदि च " इति ।

(२) कस्मिन् समये तथा वाङ्मनश्चाऽपेक्षितमित्याकाङ्क्षां पूरयति " विवक्षायाम्" । अन्यथा=दृष्टादिविपरीतार्थबोधने तु ।

(३) तदिदमुत्तरं युधिष्ठिरज्ञानसदृशं ज्ञानं द्रोणाचार्य्ये नोत्पादयतीत्यर्थः । तदेव स्पष्टयति " स्वबोध " इत्यादिना ।

(४) असौ=हस्तिहननविषयो बोधो, द्रोणाचार्य्यस्य न जात इत्यर्थः ।

भा॰ रीक्ष्य सर्वभूतहितं सत्यंब्रूयात्।स्तेयम्=अशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं, तत्प्रतिषेधः पुनरस्पृहारूपमस्तेयमिति । ब्रह्मचर्यम्=गुप्तेन्द्रियस्योपस्थस्य संयमः । विषयाणामर्जनरक्षणात्त्वसङ्गहिंसादोषदर्शनादस्वीकरणमपरिग्रह, इत्येते यमाः ॥३०॥

टी॰ सत्त्याऽऽभासं न तु सत्यमित्याह "एषा" इति । तद्यथा, सत्यतपसस्तस्करैः सार्थगमनं पृष्टस्य सार्थगमनाऽभिधानमिति । अभिधीयमाना=उच्चार्य्यमाणा। शेषं सुगमम्। अभावस्य भावाऽधीननिरूपणतया स्तेयलक्षणमाह "स्तेयमशास्त्रपूर्वकम्" इति । विशेषेण सामान्यं लक्ष्यत इत्यर्थः । मानसव्यापारपूर्वकत्वाद्वाचनिककायिकव्यापारयोः प्राधान्यान्मनोव्यापार उक्तः।'अस्पृहारूपम्' इति । ब्रह्मचर्य्यस्वरूपमाह "गुप्त" इति।संयतोपस्थोऽपि हि स्त्रीप्रेक्षणतदालापकन्दर्पायतनतदङ्गस्पर्शनसक्तो न ब्रह्मचर्य्यवानिति तन्निरासायोक्तं-"गुप्तेन्द्रियस्य" इति।इन्द्रियान्तराण्यपि तत्र लोलुपानि रक्षणीयानीति[१] अपरिग्रहस्वरूपमाह-"विषयाणाम्" इति।तत्र सङ्गदोष उक्तः 'भोगाऽभ्यासमनुविवर्द्धन्ते रागाः कौशलानि चेन्द्रियाणाम्' इति। हिंसालक्षणश्च दोषः "नाऽनुपहत्य भूतान्युपभोगः सम्भवति" इति । अशास्त्रीयाणामयत्नोपनतानामपि विषयाणां निन्दितप्रतिग्रहादिरूपार्जनदोषदर्शनात्। शास्त्रीयाणामप्युपार्जितानां च रक्षणादिदोषदर्शनादस्वीकरणमपरिग्रहः ॥ ३० ॥

सामान्यत उक्ता यादृशाःपुनर्योगिनामुपदेयास्तादृशान् वक्तुं सूत्रमवतारयति

टि॰ (१) एतेन गुप्तेन्द्रियस्य=निगृहीताऽन्येन्द्रियस्य पुरुषस्य य उपस्थेन्द्रियस्य संयमः स ब्रह्मचर्य्यमितिभाष्यार्थ इति ध्वनितम् । यत्तु—गुप्तेन्द्रियस्येत्यस्य विवरणमुपस्थस्येति विज्ञानभिक्षुणोक्तम् । तन्मन्दम् । अष्टविधब्रह्मचर्य्यलाभाय वाचस्पतिमिश्रोक्तस्यैव न्याय्यत्वात् । तथाचाऽऽह दक्षः "स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् । सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च । एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्य्यमेतदेवाऽष्टलक्षणम्" इति । यत्तु तेनोक्तं यम इत्येव वक्तव्ये समित्युपसर्गेणतरेन्द्रिय साहित्योपस्थनिरोधो लभ्यत इति । तत्तु पिण्डमुत्सृज्य करं लेढीति न्यायविषयतां नाऽतिक्रामति । किञ्चोपसर्गं विना निरोधार्थालाभादश्रद्धेयमेतत् ।

ते तु—

सू० जातिदेशकालसमयाऽनवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥

भा० तत्राऽहिंसा जात्यवच्छिन्ना-मत्स्यबन्धकस्य मत्स्येष्वेव नाऽन्यत्र हिंसा, सैव देशाऽवच्छिन्ना=न तीर्थे हनिष्यामीति। सैव कालाऽवच्छिन्ना = न चतुर्दश्यां न पुण्येऽहनि हनिष्यामीति। सैव त्रिभिरुपरतस्य*समयाऽवच्छिन्ना=देवब्राह्मणार्थे,नाऽन्यथा हनिष्यामीति। यथा च क्षत्रियाणां युद्ध एव हिंसा, नाऽन्यत्रेति । एभिर्जातिदेशकालसमयैरनवच्छिन्ना अहिंसादयः सर्वथैव परिपालनीयाः। सर्वभूमिषु[१] = सर्वविषयेषु,सर्वथैवाऽविदितव्यभिचाराः सार्वभौमा महाव्रतमित्युच्यते ॥ ३१ ॥

सू० शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥

---

टी० "ते तु"।"जातीत्यादि,महाव्रतान्तं" सूत्रम् ॥३१॥ सर्वासु जात्यादिलक्षणासु भूमिषु विदिताः सार्वभौमाः। अहिंसादय इति । अन्यत्राऽप्यवच्छेद ऊहनीयः[२) । सुगमं भाष्यम् ॥ ३१ ॥

---

टि० (१) सर्वभूमिष्वित्यस्य व्याख्यानं सर्वविषयेषु इति । विषया अत्र पूर्वोक्ता जात्यादयो बोध्याः । तदेव स्पष्टयति "सर्वथैव" इति ।

(२) अहिंसाया इतराऽन्येषां सत्यादीनां यमानामप्यवच्छेद ऊहनीय इत्यर्थः। तद् यथा "प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य च । गुर्वर्थे स्त्रीषु चैव स्याद्विवाहकरणेषु च" इत्यादिस्मृतेः प्राणत्राणाद्यर्थेऽनृतं वदिष्यामि नान्यथेति सत्यस्य समयाऽवच्छिन्नत्वं बोध्यम् । एवं दुर्भिक्षादृते स्तेयं न करिष्ये, एवं "भिक्षिते पारदार्य्यं च न तद् धर्मस्य दूषकम्" इत्युक्तेर्भिक्षितादृते परदारोपभोगं न करिष्ये, एवं वृद्धमात्रादिप्राणत्राणादृते न प्रतिग्रहीष्य इत्येवं सर्वत्राऽवच्छेदो बोध्यः । * जात्याद्यवच्छिन्नाहिंसाशून्यस्य ।

भा० तत्र शौचं मृज्जलादिजनितं मेध्याऽभ्यवहरणादि च बाह्यम्। आभ्यन्तरं चित्तमलानामाक्षालनम्। सन्तोषः = सन्निहितसाधनादधिकस्याऽनुपादित्सा। तपः = द्वन्द्वसहनं, द्वन्द्वश्च = जिघत्सापिपासे, शीतोष्णे, स्थानाऽऽसने काष्ठमौनाऽऽकारमौने च, व्रतानि चैव यथायोगं कृच्छ्रचान्द्रायणसान्तपनादीनि। स्वाध्यायः = मोक्षशास्त्राणामध्ययनं, प्रणवजपो वा। ईश्वरप्रणिधानं = तस्मिन् परमगुरौ सर्वकर्मार्पणं, "शय्यासनस्थोऽथ पथिव्रजन् वा स्वस्थः परिक्षीणवितर्कजालः। संसारबीजक्षयमीक्षमाणः [1] स्यान्नित्यमुक्तोऽमृतभोगभागी"†। यत्रेदमुक्तं "ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाऽभावश्च" इति ॥ ३२ ॥

---

टी० शौचादिनियममाचष्टे। शौचेत्यादि नियमा इत्यन्तं सूत्रम् ॥ व्याचष्टे "शौचम्" इति। आदि-शब्देन गोमयादयो गृह्यन्ते। गोमूत्रयावकादि मेध्यं, तस्याऽभ्यवहरणादि। आदि-शब्दाद् ग्रासपरिमाणसङ्ख्यानियमादयो *ग्राह्याः। मेध्याऽभ्यवहरणादिजनितामिति वक्तव्ये, मेध्याऽभ्यवहरणादि चेत्युक्तम्। कार्य्ये कारणोपचारात्। चित्तमलाः = मदमानाऽसूयादयः, तदपनयो मनःशौचम्। प्राणयात्रामात्रहेतोरभ्याधिकस्याऽनुपादित्सा सन्तोषः, प्रागेव स्वीकरणपरित्यागादिति विशेषः। काष्ठमौनम् = इङ्गितेनाऽपि स्वाऽभिप्रायाऽप्रकाशनम्, अवचनमात्रम् आकारमौनम्। "परिक्षीणवितर्कजाल" इति। वितर्को वक्ष्यमाणः, संशयविपर्य्ययौ चेति। एतावता शुद्धाऽभिसन्धिरुक्तः। एते च यमनियमा विष्णुपुराण उक्ता "ब्रह्मचर्य्यमहिंसा च सत्याऽस्तेयाऽपरिग्रहान्। सेवेत योगी निष्कामो योग्यतां मनसो नयन्। स्वाध्यायशौचसन्तोषतपांसि नियताऽऽत्मवान्। कुर्वीत ब्रह्मणि तथा परस्मिन् प्रवणं मनः। एते यमास्सनियमाः पञ्च पञ्च प्रकीर्त्तिताः। विशिष्टफलदाः काम्या निष्कामानां विमुक्तिदा" इति ॥ ३२ ॥ 'श्रेयांसि बहुविघ्नानि' इत्येषामपवादसम्भवे

---

टि० (१) समाधिविवेकेन संसारबीजानां रागादिसंस्काराणां क्षयमनुदिनमुपलभमानः।

† जीवन्मुक्तिसुखाऽनुभविता। * कुक्कुटाण्डप्रमाणाऽष्टग्रासादिनियमः।

भा० एतेषां यमनियमानाम्[१]

सू० वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥

भा० यदाऽस्य ब्राह्मणस्य हिंसादयो वितर्का जायेरन्—हनिष्याम्यहमपकारिणम्, अनृतमपि वक्ष्यामि, द्रव्यमप्यस्य स्वीकरिष्यामि, दारेषु चाऽस्य व्यवायी[२] भविष्यामि, परिग्रहेषु चाऽस्य स्वामी भविष्यामीति। एवमुन्मार्गप्रवणवितर्कज्वरेणातिदीप्तेन बाध्यमानस्तत्प्रतिपक्षान् भावयेत्—घोरेषु संसाराङ्गारेषु पच्यमानेन मया शरणमुपागतः सर्वभूताऽभयप्रदानेन योगधर्मः, स खल्वहं त्यक्त्वा वितर्कान् पुनस्तानाऽऽददानस्तुल्यः श्ववृत्तेन[३] इति भावयेत्। यथा श्वा वान्ताऽवलेही तथा त्यक्तस्य*पुनराददान इति। एवमादि सूत्रान्तरेष्वपि योज्यम्[४] ॥ ३३ ॥

---

टी० तत्प्रतीकारोपदेशपरं सूत्रमवतारयति—"एतेषां यमनियमानाम्" इति। सूत्रं—"वितर्कबाधने प्रतिपक्षभावनम्" ॥ ३३॥ वितर्काणां भाष्ये नास्ति तिरोहितमिव किञ्चन ॥ ३३ ॥

तत्र वितर्काणां स्वरूपप्रकारकारणधर्मफलभेदान्[५] प्रतिपक्षभावनाविषयान्

---

टि० (१) इदं सूत्रेणाऽन्वेति। तथा च—अहिंसादिभ्यो विपरीतास्तर्का = विचारा, वितर्काः—हनिष्याम्यहमवश्यमेनमपकारिणमित्याकारका हननादिव्यवसाया इति यावत्। तैर्वितर्कैरेतेषामहिंसादीनां यमादीनां बाधने प्राप्ते सति दुःखादिफलकत्वेन हेया वितर्का इत्येवं प्रतिपक्षभावनं कुर्यादित्यर्थो बोध्यः। सापेक्षत्वेऽप्यार्षत्वादत्र समासः।

(२) व्यवायी = ग्राम्यधर्माऽऽचरणशील इत्यर्थः।

(३) कुक्कुराचरणेन तुल्य इत्यर्थः। तदेवाह "यथा" इति। वान्ताऽवलेही = वान्तभोजी।

(४) सूत्रान्तरेष्वपि = नियमासनादिप्रतिपादकाऽग्रिमसूत्रेष्वपि। एवमादि = त्यक्ष्याम्यहं शौचमित्येवं वितर्कबाधनम्। अज्ञानादिफलकत्वेन हेया अशौचादय इत्येवं तत्प्रतिपक्षभावनं च योजनीयमित्यर्थः। * त्यक्तस्य = त्यक्तम्, आददानः = गृह्णानः।

(५) हिंसादय इत्यनेन वितर्काणां स्वरूपमुक्तं, कृतेत्यादिना प्रकार उक्तः, लोभेत्यादिना कारणमुक्तम्, मृदु इत्यादिना धर्म उक्तः, दुःखेत्यादिना फलमुक्तमिति भावः।

सू० वितर्का हिंसादयः कृतकारिताऽनुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याऽधिमात्रा दुःखाऽज्ञानाऽनन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥

भा० तत्र हिंसा तावत् कृता कारिताऽनुमोदितेति[१] त्रिधा एकैका पुनस्त्रिधा—लोभेन=मांसचर्मार्थेन, क्रोधेन=अपकृतमनेनेनेति, मोहेन=धर्मो मे भविष्यतीति। लोभक्रोधमोहाः पुनस्त्रिविधाः[२] मृदुमध्याऽधिमात्रा इति। एवं सप्तविंशतिभेदा भवन्ति हिंसायाः। मृदुमध्याधिमात्राः पुनस्त्रेधा-मृदुमृदुः, मध्यमृदुः, तीव्रमृदुरिति। तथा मृदुमध्यः, मध्यमध्यः, तीव्रमध्य इति। तथा मृदुतीव्रः मध्यतीव्रः, अधिमात्रतीव्र इति। * एवमेकाशीतिभेदा हिंसा भवति। सा पुनर्नियमविकल्पसमुच्चयभेदादसङ्ख्येया, प्राणभृद्भेदस्या-

---

टी० प्रतिपक्षभावनास्वरूपाऽभिधित्सया सूत्रेणाह—"वितर्का इत्यादिना, प्रतिपक्षभावनम्" इत्यन्तेन ॥ ३४ ॥ ॥ व्याचष्टे—"तत्र हिंसा" इति । प्राणभृद्भेदस्याऽपरिसङ्ख्येयत्वान्नियमविकल्पसमुच्चयाः सम्भविनो हिंसादिषु । तत्राऽधर्मतः[३] तमःसमुद्रेके सति चतुर्विधविपर्य्ययलक्षणस्याऽज्ञानस्याऽप्युदय इत्यऽज्ञानफलत्वमप्येतेषामिति । दुःखाऽज्ञानाऽनन्तफलत्वमेव हि प्रतिपक्षभावनं, तद्वशादेभ्यो निवृत्तिरिति । तदेव

---

टि० (१) कृता=स्वयं निष्पादिता, कारिता=कुर्वित्युक्त्वा, अनुमोदिता=इतरैरनुष्ठीयमानायां हिंसायां साधु साध्विवत्येवमङ्गीकृता ।

(२) यद्यपि सूत्रे मृदुमध्याऽधिमात्रा इति हिंसादिविशेषणं प्रतीयते, तथाऽपि लोभादेर्मृदुत्वादिनैव हिंसादेर्मृदुत्वमत्र विवक्षितमित्याशयेन लोभादिविशेषणतया मृदुत्वादीन् व्याचष्टे "लोभक्रोधमोहाः पुनस्त्रिविधा" इति । *'एवमेवम्' इति पाठान्तरमपि न मन उद्वेजयति ।

(३) ननु हिंसादीनामज्ञानप्रभवत्वेऽपि कथमज्ञानफलकत्वं तत्राऽऽह "तत्राऽधर्मत" इति॥

भा० ऽपरिसङ्ख्येयत्वादिति[१]।एवमनृतादिष्वपियोज्यम्। तेखल्वमीवितर्का दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनं=दुःखमज्ञानञ्चाऽनन्तफलं येषामिति प्रतिपक्षभावनम्।तथाच-हिंसकःप्रथमं तावद् वध्यस्य वीर्य्यमाक्षिपति, ततःशस्त्रादिनिपातेन दुःखयति,ततो जीवितादपि मोचयति। ततो[२]वीर्य्याक्षेपादस्य चेतनाऽचेतनमुपकरणं क्षीणवीर्य्यं भवति,दुःखोत्पादान्नरकतिर्य्यक्प्रेतादिषु दुःखमनुभवति,जीवितव्यपरोपणात् प्रतिक्षणं च जीविताऽत्यये वर्त्तमानो[३]मरणमिच्छन्नपि दुःखविपाकस्य नियतविपाकवेदनीयत्वात्कथञ्चिदेवोच्छ्वसिति। यदि च कथञ्चित्पुण्यादपगता[४]हिंसा भवेत्तत्र सुखप्राप्तौ भवेदल्पायुरिति। एवमनृतादिष्वपि योज्यं यथासम्भवम्। एवं वितर्काणां चामुमेवाऽनुगतं विपाकमनिष्टं भावयन्न वितर्केषु मनः प्रणिदधीत[५]। प्रतिपक्षभावनाद् हेतोर्हेया[६] वितर्काः ॥ ३४ ॥

---

टी०प्रतिपक्षभावनं स्फोरयति। 'वध्यस्य' इति। वध्यस्य=पश्वादेः, वीर्य्यं=प्रयत्नं कायव्यारहेतुं, प्रथममाक्षिपति यूपनियोजनेन। तेन हि पशोरप्रागल्भ्यं भवति। शेषमतिस्फुटम् ॥ ३४ ॥

---

टि० (१) मत्स्येष्वेव हिंसेत्यादिनियमः। एकस्मिन् दिवसे स्थावरस्य जङ्गमस्य वा अन्यतरस्यैव हिंसा, नोभयोरित्यादिर्विकल्पः। स्थावरजङ्गमयोरुभयोरेवाऽव्यवस्थया हिंसेत्यादिः समुच्चय इत्यर्थः। हिंसकानां हिंस्यानां चाऽसङ्ख्येयतयाऽनन्तप्रकारा हिंसेति भावः।

(२) वीर्य्याक्षेपशस्त्रनिपातमारणानां यथाक्रमं दुःखफलकत्वमाह—ततो वीर्य्याक्षेपादिति। पशोर्वीर्य्याक्षेपाद्, अस्य=हन्तुरपि चेतनाऽचेतनं=स्त्रीपुत्रधनादिकमुपकरणं क्षीणवीर्य्यं=भोगाऽक्षमं भवतीत्यर्थः।

(३) जीविताऽत्यये=दुःसाध्यरोगपीडितत्वेन प्राणान्तसन्निहिताऽवस्थायां वर्त्तमान इत्यर्थः। जीविताऽत्ययमापन्न इति विज्ञानभिक्षुसंमतपाठेऽप्ययमेवार्थः। परस्य = पश्वादेर्जीवितव्यपरोपणात् = प्राणवियोजनात्तत्कर्त्ताऽपि प्रतिक्षणं जीविताऽत्यये = रोगादिना मरणाऽवस्थामापन्नो मरणमिच्छन्नपि कथञ्चिदेव जीवतीति समुदायार्थः। सद्योमरणाऽभावे हेतुमाह "दुःखविपाक" इति। दुःखरूपस्य फलस्य नियतजन्मवेदनीयत्वादिति भावः।

(४) पुण्यादपगतेति पाठे तु यागाङ्गभूतत्वेन स्वतन्त्रफलदानाऽसमर्था। तत्र = स्वर्गे।

(५) एवं = पूर्वोपदर्शितरीत्या वितर्काणाममुं = दुःखाद्यनिष्टं फलमनुगतं = निश्चितं चिन्तयन् सन् न हिंसादिषु मनः कुर्य्यादित्यर्थः।

(६) हातुमर्हा वितर्का यदा प्रतिपक्षभावनातोऽप्रसवधर्माणः स्युरित्येवम् प्रिमभाष्यान्वयीत्येके।

भा०यदाऽस्य[१] स्युरप्रसवधर्माणस्तदा तत्कृतमैश्वर्य्यं योगिनः सिद्धिसूचकं भवति। तद्यथा—

सू० अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥३५॥

भा०सर्वप्राणिनां भवति ॥ ३५ ॥

सू० सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥

भा०धार्मिको भूया इति[२] भवति धार्मिकः, स्वर्गं प्राप्नुहीति स्वर्गं प्राप्नोति। अमोघाऽस्य वाग् भवति ॥ ३६ ॥

सू० अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥

भा०सर्वदिक्स्थान्यस्योपतिष्ठन्ते रत्नानि ॥ ३७ ॥

सू० ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः ॥ ३८ ॥

---

टी०उक्ता यमनियमास्तदपवादकानां च वितर्काणां प्रतिपक्षभावनातो हानिरुक्ता, सम्प्रत्यप्रत्यूहं यमनियमाऽभ्यासात्तत्तत्सिद्धिपरिज्ञानसूचकानि चिन्हान्युपन्यस्यति। यत्परिज्ञानाद् योगी तत्र तत्र कृतकृत्यः कर्त्तव्येषु प्रवर्त्तते इत्याह "यदाऽस्य" इति।

सू०"अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥ ३५ ॥ शाश्वतिकविरोधा अपि अश्वमहिषमूषकमार्जाराहिनकुलादयोऽपि भगवतः प्रतिष्ठिताऽहिंसस्य सान्निधानात्तच्चित्ताऽनुकारिणो वैरं परित्यजन्तीति ॥ ३५ ॥

सू०"सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्" ॥३६॥ क्रियासाध्यौ धर्माऽधर्मौ क्रिया, तत्फलं च स्वर्गनरकादि, ते एवाऽऽश्रयतीत्याश्रयस्तस्य भावस्तत्त्वम्। तदस्य भगवतो वाचो भवतीति। क्रियाऽऽश्रयत्वमाह"धार्मिक" इति। फलाश्रयत्वमाह "स्वर्गम्" इति। अमोघा=अप्रतिहता ॥ ३६ ॥

सू०"अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम्"। सुबोधम् ॥ ३७ ॥

सू०"ब्रह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः" ॥ ३८ ॥

---

टि० (१) वितर्का इति शेषः। पूर्वोक्तप्रकारेण यदा वितर्का दग्धबीजकल्पाः स्युरित्यर्थः।

(२) इति=इत्येवं यं पुरुषमाह सत्यप्रतिष्ठः स पापोऽपि धार्मिको भवतीत्यर्थः।

भा० यस्य लाभादप्रतिघान् गुणानुत्कर्षयति । सिद्धश्च*विनेयेषु ज्ञानमाधातुं समर्थो भवतीति ॥ ३८ ॥

सू० अपरिग्रहस्थैर्ये जन्मकथन्तासंबोधः ॥ ३९ ॥

भा० अस्य भवति[१]। कोऽहमासं, कथमहमासं किं स्विदिदं, कथं स्विदिदं, के वा भविष्यामः, कथं वा भविष्याम इति । एवमस्य पूर्वान्तपरान्तमध्येष्वात्मभावजिज्ञासा स्वरूपेणोपावर्त्तते । एता यमस्थैर्ये सिद्धयः ॥ ३९ ॥

टी० वीर्य्यं = सामर्थ्यं, यस्य लाभाद् अप्रतिघान् = अप्रतीघातान्,† गुणान् = अणिमादीन्, उत्कर्षयति = उपचिनोति। सिद्धश्च = तारादिभिरष्टाभिः सिद्धिभिरूहाद्यपरनामभिरुपेतो[२], विनेयेषु = शिष्येषु, ज्ञानं = योगतदङ्गविषयमाधातुं समर्थो भवतीति ॥ ३८ ॥ "अपरिग्रहस्थैर्य्ये जन्मकथन्तासम्बोधः" ॥ ३९ ॥ निकायविशिष्टैर्देहेन्द्रियादिभिरभिसम्बन्धोजन्म, तस्य कथन्ता = किम्प्रकारता, तस्याः सम्बोधः = साक्षात्कारः, सप्रकारातीन्द्रियशान्तोदिताव्यपदेश्यजन्मपरिज्ञानमितियावत्। अतीतं जिज्ञासते "कोऽहमासम्" इति। तस्यैव प्रकारभेदमुत्पत्तौ स्थितौ च जिज्ञासते "कथमहमासम्" इति। वर्त्तमानस्य जन्मनः स्वरूपं जिज्ञासते 'किंस्विद्' इति। शरीरं भौतिकं किं भूतानां समूहमात्रम्, आहो स्वित्तेभ्योऽन्यदिति । अत्राऽपि कथं स्विदित्यनुषञ्जनीयम्। क्वचित्तु पठ्यत एव। 'अनागतं जिज्ञासते—"के वा भविष्याम" इति। अत्राऽपि कथं स्विदित्यनुषङ्गः[३] । "एवमस्य" इति। पूर्वान्तः = अतीतः कालः, परान्तः = भविष्यन्, मध्यः = वर्त्तमानः, तेष्वात्मनो भावः = शरीरादिसंबन्धः, तस्मिञ्जिज्ञासा ततश्च ज्ञानम्। यो हि यदिच्छति स तत्करोतीति न्यायात् ॥ ३९ ॥

टि० [१] अस्य भवति-इत्यस्य सूत्रेण सहान्वयो बोध्यः। *सिद्धो भूत्वा ।

[२] "ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः । दानं च सिद्धयोऽष्टौ" इति साङ्ख्य [५१] कारिकोक्तोहाद्यपरनामभिः, तार-सुतार-तारतार-रम्यक-सदामुदित-प्रमोद-प्रमुदित-प्रमोदमानाख्याभिरष्टाभिस्सिद्धिभिरुपेत इत्यर्थः। एतासां लक्षणान्वाख्यानन्तु "ऊहः शब्दोऽध्ययनम्" ५१। इति कारिकातत्त्वकौमुद्यां स्पष्टमित्यलं विस्तरेण। †प्रतिघातरहितान् ।

[३] कथं वा 'भविष्याम' इति मौलिकपाठाऽभावे कथं स्विदित्यनुषञ्जनीयम् इत्यर्थः। तत्सत्त्वेतु सिद्धमेव प्रयोजनमिति भावः ।

भा० नियमेषु वक्ष्यामः—

सू० शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ॥ ४० ॥

भा० स्वाङ्गे जुगुप्सायां शौचमारभमाणः कायाऽवद्यदर्शी[1] कायाऽनाभिष्वङ्गी यतिर्भवति। किञ्च परैरसंसर्गः=कायस्वभावावलोकी स्वमपि कायं जिहासुर्मृज्जलादिभिराक्षालयन्नपि कायशुद्धिमपश्यन् कथं परकायैरत्यन्तमेवाप्रयतैः[2] संसृज्येत ॥ ४० ॥

किञ्च—

सू० सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ ४१ ॥

भा० भवन्तीति वाक्यशेषः । शुचेः सत्त्वशुद्धिः, ततः सौमनस्यं, तत ऐकाग्र्यं, तत इन्द्रियजयः, ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवति, इत्येतच्छौचस्थैर्यादधिगम्यत इति ॥ ४१ ॥

---

टी० "शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः"॥ अनेन बाह्यशौचसिद्धिसूचकं कथितम् ॥ ४० ॥

आन्तरासिद्धिसचकमाह—"किञ्च" इति । "सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च"॥ चित्तमलानामाक्षालने चित्तसत्त्वममलं प्रादुर्भवति, वैमल्याच्च तत्सौमनस्यं = स्वच्छता, स्वच्छे तदेकाग्रं, ततो मनस्तन्त्राणामिन्द्रियाणां तज्जयाज्जयः। तत आत्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीति ॥ ४१॥

---

टि० (१) कायावद्यदर्शी = "स्थानाद् बीजाद्" इत्युक्तप्रकारेण शरीरदोषदर्शनशील इत्यर्थः । कायाऽनभिष्वङ्गी = शरीराऽध्यासरहितः ।

(२) अप्रयतैः = मलिनैः, शत्रुतुल्यैरिति वा ।

सू० सन्तोषादनुत्तमसुखलाभः ॥ ४२ ॥

भा० तथाचोक्तं "यच्च कामसुखं * लोके यच्च दिव्यं महत् सुखम्। तृष्णाक्षयसुखस्यैते नाऽर्हतः षोडशीं कलाम्" इति ॥ ४२॥

सू० कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः ॥ ४३ ॥

भा० निर्वर्त्यमानमेव तपो हिनस्त्यशुद्ध्यावरणमलम्। तदावरणमलाऽपगमात् कायसिद्धिः = अणिमाद्या, तथेन्द्रियसिद्धिः = दूराच्छ्रवणदर्शनाद्येति ॥ ४३ ॥

सू० स्वाध्यायादिष्टदेवतासंप्रयोगः ॥† ४४ ॥

भा० देवा, ऋषयः, सिद्धाश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति, कार्ये चाऽस्य वर्त्तन्त इति ॥ ४४ ॥

सू० समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

---

टी० "सन्तोषादनुत्तमसुखलाभः" ॥४२॥ न विद्यते ऽस्मादुत्तम इत्यनुत्तमः यथाचोक्तं ययातिना पूरौ यौवनमर्पयता—"या दुस्त्यजा दुर्मतिभिर्या न जीर्य्यति जीर्य्यताम्[1]। तां तृष्णां संत्यजन् प्राज्ञः सुखेनैवाऽभिपूर्य्यते"। तदेतद् दर्शयति "यच्च कामसुखम्" इत्यादिना ॥ ४२ ॥

तपःसिद्धिसूचकमाह—"कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः" ।४३। अशुद्धिलक्षणमावरणं-तामसमधर्मादि । अणिमाद्या = महिमा, लघिमा, प्राप्तिश्च । सुगमम् ॥ ४३ ॥

स्वाध्यायसिद्धिसूचकमाह—"स्वाध्यायादिष्टदेवतासंप्रयोगः"। सुगमम् ॥४४॥ "समाधिसिद्धिरीश्वरप्राणिधानात्" ॥४५॥ न च ग्राह्यमीश्वरप्रणिधानादेव चेतसम्प्रज्ञातस्य समाधेरङ्गिनः सिद्धिः कृतं सप्तभिरङ्गैरिति।

---

टि० (१) जीर्य्यतां वार्द्धक्याऽऽवस्थामापन्नानामित्यर्थः। जीर्य्यतीति पाठे तु, पुरुषे जीर्य्यत्यपि या न जीर्य्यतीत्येवं व्याख्येयम् ।

* कामसुखम्=ऐहिकविषयजनितसुखं, दिव्यं = स्वर्गभवम्। †संप्रयोगः = दर्शनम्।

**भा॰ ईश्वरार्पितसर्वभावस्य समाधिसिद्धिः। यया *सर्वमीप्सितमवितथं जानाति, देशान्तरे, देहान्तरे, कालान्तरे च। ततोऽस्य प्रज्ञा यथाभूतं प्रजानातीति॥ ४५॥**

---

टी॰ ईश्वरप्रणिधान[१]सिद्धौ दृष्टाऽदृष्टाऽवान्तरव्यापारेण तेषामुपयोगात्, संप्रज्ञातसिद्धौ च, संयोगपृथक्त्वेन दध्न इव क्रत्वर्थता पुरुषार्थता च। नचैवमनन्तरङ्गता धारणाध्यानसमाधीनाम्। सम्प्रज्ञातसिद्धौ सम्प्रज्ञातसमानगोचरतयाऽङ्गान्तरेभ्योऽतद्गोचरेभ्यो ऽस्याऽन्तरङ्गत्वप्रतीतेः। ईश्वरप्रणिधानमपि हीश्वरगोचरं, न सम्प्रज्ञेयगोचरमिति बहिरङ्गमिति सर्वमवदातम्। प्रजानातीति प्रज्ञापदव्युत्पत्तिदर्शिता॥ ४५॥

---

टि॰ (१) न च वाच्यमित्यत्र हेतुमाह "ईश्वरप्रणिधान" इति। ईश्वरप्रणिधानसिद्धौ संप्रज्ञातसिद्धौ चेतरेषामङ्गानामुपयोगान्न वैय्यर्थ्यं सप्तानामङ्गानामिति भावः। उपयोगे द्वारमाह "दृष्टाऽदृष्ट" इति। आसनादीनां पणां दृष्टद्वारोभयत्रोपयोगः। यमादीनान्त्वशुद्ध्यादिक्षयरूपाऽदृष्टद्वारेत्यर्थः। एकस्योभयार्थत्वे जैमिनीयं निदर्शनमाह "संयोगपृथक्त्वेन" इति। यथा 'संयोगस्य'—विनियोजकवाक्यस्य 'पृथक्त्वेन'—भिन्नत्वेन दध्नः क्रत्वर्थत्वं पुरुषार्थत्वं च तद्वदत्राऽपि सूत्रकारोक्तिबलात् सप्तानामङ्गानामीश्वरप्रणिधानसिद्ध्यर्थत्वं संप्रज्ञातसिद्ध्यर्थत्वं चाऽभ्युपेयमित्यर्थः। संयोगपृथक्त्वन्यायश्च पूर्वतन्त्रे स्पष्टः। तद् यथा अग्निहोत्रे श्रूयते "दध्ना जुहोति" इति। पुनश्चाऽऽम्नायते "दध्नेन्द्रियकामस्य जुहुयाद्" इति। तत्र संशयः, किं काम्यार्थमेव दधि नित्येऽपि स्याद्, उत नेति। तत्र फलार्थत्वेनाऽनित्यसंयोगस्य दध्नो नित्यप्रयोगाङ्गत्वं न युक्तम्। यत्तु नित्येऽपि दधिश्रवणं तत्काम्यार्थमेव। यद् दध्ना जुहोति तदिन्द्रियार्थमिति। तस्मान्नित्ये दध्यविधानात्काम्यार्थमेवेति प्राप्ते, राद्धान्तः "एकस्य तूभयत्वे संयोगपृथक्त्वम्" अ॰ ४—पा॰ ३—सू॰ ५—अधि॰ २—। एकस्य—दध्यादेः 'उभयत्वे'—क्रत्वर्थत्वपुरुषार्थत्वे 'संयोगस्य'—क्रत्वर्थत्वपुरुषार्थत्वबोधकविनियोजकवाक्यस्य, 'पृथक्त्वम्'—भिन्नत्वं, नियामकमिति शेष इत्यन्यत्र विस्तरः। ननु सम्प्रज्ञातस्येश्वरप्रणिधानाऽनन्तरभावित्वे यदनन्तरं यद् भवति तत्तस्याऽन्तरङ्गमिति नियमादीश्वरप्रणिधानं सम्प्रज्ञातस्याऽन्तरङ्गसाधनं स्याद्। एवञ्च वक्ष्यमाणं धारणादीनां त्रयाणामेवाऽन्तरङ्गत्वं व्याहन्येतेत्याशङ्कां निषेधति "नचैवम्" इति। समाधीनामित्यस्याऽग्रे इति शङ्क्यमिति शेषो बोध्यः। न च शङ्क्यमित्यत्र हेतुमाह "सम्प्रज्ञात" इति। सम्प्रज्ञातसिद्धौ अस्य=धारणादित्रयस्याऽङ्गान्तरेभ्योऽन्तरङ्गत्वप्रतीतेरित्यन्वयः। अत्यन्तरङ्गत्वप्रतीतेरिति पाठे तु धारणादीनामित्यध्याहार्य्यम्। तत्र हेतुमाह "सम्प्रज्ञातसमान" इति। एवञ्च न पूर्वोक्तमन्तरङ्गत्वमत्राऽऽश्रीयतेऽपि तु साध्यसमानगोचरत्वं यस्य तस्याऽन्तरङ्गत्वमिति। ईश्वरप्रणिधानं तु नैवंविधमिति नाऽन्तरङ्गमित्याह "ईश्वरप्रणिधानम् इति।

* यया = समाधिसिद्ध्या।

भा० उक्ताः सहसिद्धिभिर्यमनियमा,आसनादीनि वक्ष्यामः। तत्र-

सू० स्थिरसुखमासनम् ॥ ४६ ॥

भा० तद्यथा-पद्मासनं, वीरासनं, भद्रासनं, स्वस्तिकं, दण्डासनं, सोपाश्रयं, पर्य्यङ्कं, क्रौञ्चनिषदनं, हस्तिनिषदनम्, उष्ट्रनिषदनं, समसंस्थानं, स्थिरसुखं, यथासुखं चेत्येवमादीनि ॥४६॥

---

टी० उत्तरसूत्रमवतारयति—"उक्ताः सह सिद्धिभिर्यमनियमा, आसनादीनि वक्ष्याम" इति। तत्र "स्थिरसुखमासनम्" ॥ ४६ ॥ स्थिरं = निश्चलं, यत् सुखं = सुखावहं, तदासनमिति सूत्रार्थः। आस्यतेऽत्र, आस्ते वाऽनेनेत्यासनम्। तस्य प्रभेदानाह "तद्यथा" इति। पद्मासनं प्रसिद्धम्[1]। स्थितस्यैकतरः पादो भून्यस्त एकतरश्चाकुञ्चितजानोरुपरिन्यस्त इत्येतद्वीरासनम्। पादतले वृषणसमीपे सम्पुटीकृत्य तस्योपरि पाणिकच्छपिकां* कुर्य्यात्तद् भद्रासनम्। सव्यमाकुञ्चितं चरणं दक्षिणजङ्घोर्वन्तरे दक्षिणं चाऽकुञ्चितं वामजङ्घोर्वन्तरे निक्षिपेदेतत्स्वस्तिकम्। उपविश्य श्लिष्टाङ्गुलिकौ श्लिष्टगुल्फौ भूमिश्लिष्टजङ्घोरुपादौ प्रसार्य्य दण्डासनमभ्यसेत्। योगपट्टक[2] योगात्सोपाश्रयम्। जानुप्रसारितबाह्वोःशयनंपर्य्यङ्कः। क्रौञ्चनिषदनादीनि क्रौञ्चादीनां निषण्णानां संस्थानदर्शनात्प्रत्येतव्यानि। पार्ष्णिपादाग्राभ्यां द्वयोराकुञ्चितयोरन्योन्यसंपीडनं समसंस्थानम्[3], येन संस्थानेनावस्थितस्य स्थैर्य्यसुखं सिद्ध्यति तदासनं स्थिरसुखम्। तत् तत्र[4] भगवतः सूत्रकारस्य संमतम्, तस्य विवरणं—"यथासुखं च" इति ॥ ४६ ॥

---

टि० (१) प्रसिद्धं = बहुभिरनुष्ठयतया प्रसिद्धमित्यर्थः। तल्लक्षणं तु—वामोरूपरि दक्षिणं चरणं संस्थाप्य, वामं च चरणं दक्षिणोरूपरि संस्थाप्य, दक्षिणं हस्तं पृष्ठतः कृत्वा वामोरुस्थितदक्षिणचरणाऽङ्गुष्ठं गृहीत्वा, वामकरं पृष्ठतः कृत्वा दक्षिणोरुस्थितवामपादाङ्गुष्ठं च गृहीत्वा, उरसश्चतुरङ्गुलान्तरे चिबुकं निधाय, नासाग्रं चाऽऽलोकयता योगिना यत्राऽऽस्यते तद् पद्मासनमिति। * सम्पुटितं पाणिद्वयम्।

(२) योगपट्टकं = समाधिस्सतो योगिनो बाह्वाराधारविशेषः। काष्ठनिर्मितमुदासीनेषु "चौगान" इति नाम्ना प्रसिद्धम्।

(३) केचित्तु जान्वोरुपरि हस्तौ कृत्वा कायशिरोग्रीवाणामवक्रभावेनावस्थानं समसंस्थानमित्याहुः।

(४) तत्र=सर्वेष्वासनेषु, तत्=स्थिरसुखाख्यमासनं, सूत्रकारस्य सम्मतमित्यर्थः।

सू० प्रयत्नशैथिल्याऽनन्तसमापत्तिभ्याम् ॥४७॥

भा० भवतीति वाक्यशेषः। प्रयत्नोपरमात् सिद्ध्यत्यासनं, येन नाङ्गमेजयो भवति[१]। अनन्ते वा समापन्नं चित्तमासनं निर्वर्त्तयतीति ॥ ४७ ॥

सू० ततो द्वन्द्वाऽनभिघातः ॥ ४८ ॥

भा० शीतोष्णादिभिर्द्वन्द्वैरासनजयान्नाऽभिभूयते ॥ ४८ ॥

सू० तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥

---

टी० आसनस्वरूपमुक्त्वा तत्साधनमाह—"प्रयत्नशैथिल्याऽनन्तसमापत्तिभ्याम्" ॥ ४७ ॥ सांसिद्धिको हि प्रयत्नः शरीरधारको न योगाङ्गस्योपदेष्टव्यासनस्य कारणम्, तस्य तत्कारणत्व उपदेशवैयर्थ्यात्, स्वरसत एव तत्सिद्धेः। तस्मादुपदेष्टव्यस्याऽऽसनस्याऽयमसाधको विरोधी च स्वाभाविकः प्रयत्नः। तस्य च यादृच्छिकासनहेतुतयासननियमोपहन्तृत्वात् । तस्मादुपदिष्टनियमाऽऽसनमभ्यस्यता स्वाभाविकप्रयत्नशैथिल्यात्मा प्रयत्न आस्थेयो, नान्यथोपदिष्टमासनं सिद्ध्यतीति स्वाभाविकप्रयत्नशैथिल्यमासनसिद्धिहेतुः। अनन्ते वा = नागनायके स्थिरतरफणासहस्रविधृतविश्वम्भरामण्डले समापन्नं चित्तमासनं निर्वर्त्तयतीति ॥ ४७ ॥

आसनविजयसूचकमाह—"ततो द्वन्द्वाऽनभिघातः"। निगदव्याख्यातं भाष्यम्। आसनमप्युक्तं विष्णुपुराणे—"एवं भद्रासनादीनां समास्थाय गुणैर्युतम्" इति ॥ ४८ ॥

आसनाऽनन्तरं तत्पूर्वकतां प्राणायामस्य दर्शयँस्तल्लक्षणमाह—"तस्मिन्नित्यादि, प्राणायाम" इत्यन्तं सूत्रम् ॥४९॥ रेचकपूरककुम्भकेष्वस्ति श्वासप्रश्वासयोर्गतिविच्छेद इति प्राणायामसामान्यलक्षणमेतदिति। तथा हि—यत्र बाह्यो वायुराचम्याऽन्तर्धार्य्यते पूरके तत्रास्ति श्वासप्रश्वासयोर्गतिविच्छेदः, यत्राऽपि कोष्ठ्यो वायुर्विरिच्य बहिर्धार्य्यते रेचके तत्राऽस्ति श्वास-

---

टि० (१) लौकिकबहुव्यापाराऽनन्तरं चेदासनं क्रियेत तदाऽङ्गकम्पनादासनस्थैर्य्यं न भवेदतः प्रयत्नोपरमादासनं साधयेद् येनाऽङ्गकम्पनं न भवेदिति भावः ॥ आसनस्थैर्य्ये सति

भा० सत्यासनजये बाह्यस्य वायोराचमनं[1] श्वासः, कोष्ठयस्य वायोर्निःसारणं प्रश्वासः । तयोर्गतिविच्छेदः = उभयाऽभावः प्राणायामः ॥ ४९ ॥ स तु,

सू० बाह्याऽभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥५०॥

भा० यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः। तृतीयः स्तम्भवृत्तिर्यत्रोभयाऽभावः सकृत्प्रयत्नाद् भवति। यथा तप्ते न्यस्तमुपले जलं सर्वतः सङ्कोचमापद्यते, तथाद्वयोर्युगपद् भवत्यभाव इति। त्रयोऽप्येते देशेन परिदृष्टाः = इयानस्य विषयो देश इति। कालेन परिदृष्टाः = क्षणाना-

---

टी० प्रश्वासयोर्गतिविच्छेदः । एवं कुम्भकेऽपीति।[2] तदेतद् भाष्येणोच्यते—"सत्यासनजय" इति॥ ४ ९॥ प्राणायामविशेषत्रयलक्षणसूत्रमवतारयति "स तु" इति । "बाह्येत्यादि, सूक्ष्म इत्यन्तं सूत्रम् ॥ ५ ०॥ वृत्ति—शब्दः प्रत्येकं संबध्यते । रेचकमाह—"यत्र प्रश्वास" इति। पूरकमाह—"यत्र श्वास" इति। कुम्भकमाह "तृतीय" इति। तदेव स्फुटयति—"यत्रोभयोः" इति । यत्रोभयोःश्वासप्रश्वासयोःसकृदेव विधारकात्प्रयत्नादभावो भवति, न पुनः पूर्ववदापूरणप्रयत्नौघप्रविधारकप्रयत्नो, नाऽपि रेचकप्रयत्नौघविधारणप्रयत्नोऽपेक्ष्यते। किन्तु यथा तप्त उपले निहितं जलं परिशुष्यत्सर्वतः सङ्कोचमापद्यते एवमयमपि मारुतो वहनशीलो बलवद्विधारकप्रयत्ननिरुद्धक्रियः शरीर एव सूक्ष्मीभूतोऽवतिष्ठते। न तु पूरयति येन पूरकः, न तु रेचयति येन रेचक इति । 'इयानस्य देशो विषयः'=प्रादेशवितस्तिहस्तादिपरिमितो, निवाते प्रदेशे इषीकातूलादिक्रियाऽनुमितो बाह्यः। एवमान्तरोऽप्यापादतलमामस्तकं पिपीलिकास्पर्शसदृशेनाऽनुमितः स्पर्शेन। निमेषक्रियाऽवच्छिन्नस्य कालस्य चतुर्थो भागः क्षणः ।

---

टि० [1] आचमनम् = अन्तः प्रवेशनम् । [2] यद्यपि कुम्भक एव श्वासप्रश्वासयोर्गतिविच्छेदोऽस्ति न पूरके श्वाससद्भावाद्, नाऽपि रेचके प्रश्वाससत्त्वात् , तथाऽपि स्वाभाविकश्वासप्रश्वासरूपविशिष्टाऽभावस्य सर्वत्र सत्त्वेन सामान्यलक्षणोपपत्तिरिति भावः ।

भा० मियत्ताऽवधारणेनाऽवच्छिन्ना इत्यर्थः।सङ्ख्याभिः परिदृष्टाः= एतावद्भिःश्वासप्रश्वासैःप्रथम उद्घातः। तद्वन्निगृहीतस्यैतावद्भिर्द्वितीय उद्घातः। एवं तृतीयः, एवं मृदुः, एवं मध्यः, एवं तीव्रः, इति सङ्ख्यापरिदृष्टः।स खल्वयमेवमभ्यस्तो दीर्घसूक्ष्म[1]:॥५०॥

टी० तेषामियत्ताऽवधारणेनाऽवच्छिन्नः=स्वजानुमण्डलं पाणिना त्रिःपरामृश्य छोटिकाऽवच्छिन्नः कालो मात्रा[2]। ताभिःषट्त्रिंशन्मात्राभिः परिमितः प्रथम उद्घातोद्ध मन्दः[3]। स एव द्विगुणीकृतो मध्यः। स एव त्रिगुणीकृतस्तृतयिस्तीव्रः।तमिमं संख्यापरिदृष्टं प्राणायाममाह—"संख्याभिः" इति।स्वस्थस्य हि पुंसः श्वासप्रश्वासक्रियाऽवच्छिन्नेनकालेनयथोक्तच्छोटिकाकालः समानः। प्रथमोद्घातकर्मतां नीत उद्घातो विजितो वशीकृतो निगृहीतः,क्षणानामियत्ताकालो विवक्षितःश्वासप्रश्वासेयत्तासङ्ख्येति,कथञ्चिद्भेदः[4]। सखल्वयंप्रत्यहमभ्यस्तोदिवसपक्षमासादिक्रमेणदेशकालप्रचयव्यापितया दीर्घः,परमनैपुण्यसमधिगमनीयतयाच सूक्ष्मो न तु मन्दतया॥५०॥

---

टि० (१) दीर्घसूक्ष्मः=यथा घनीभूतस्तूलपिण्डः प्रसार्य्यमाणो विरलतया दीर्घः सूक्ष्मश्च भवति, तथा प्राणोऽपि देशकालसङ्ख्याधिक्येनाऽभ्यस्यमानो दीर्घः, दुर्लक्षतया च सूक्ष्मो भवतीत्यर्थः।

(२) अङ्गुष्ठमध्यमाऽङ्गुलिसंघर्षजनितः शब्दश्छोटिकेत्युच्यते। तदवच्छिन्नः कालो मात्रेत्यर्थः। तथाचोक्तं स्कन्दपुराणे "जानुं प्रदक्षिणीकुर्य्यान्न द्रुतं न विलम्बितम्। प्रदद्याच्छोटिकां यावत्तावन्मात्रेति गीयते" इति।

(३) उद्घातः="प्राणेनोत्सर्प्यमाणेन अपानः पीड्यते यदा। गत्वाचोर्द्ध्वं निवर्त्तेत एतदुद्घातलक्षणम्" इति लक्षित इत्यर्थः। न च "नीचो द्वादशमात्रस्तु सकृदुद्घात ईरितः। मध्यमस्तु द्विरुद्घातश्चतुर्विंशतिमात्रकः। मुख्यस्तु यस्त्रिरुद्घातः षट्त्रिंशन्मात्र उच्यते" इति लिङ्गपुराणाद् "मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रकः। मध्यमः प्राणसंरोधः षट्त्रिंशन्मात्रकोऽन्तिम" इति कूर्मपुराणाच्च, प्रथम उद्घातो द्वादशमात्रक एव प्रतीयते, न तु षट्त्रिंशन्मात्रकस्तथाच कथं षट्त्रिंशन्मात्रस्य मन्दत्वमुक्तमिति शङ्कनीयम्। एतद्वाक्यैः "अङ्गुष्ठाङ्गुलिमोक्षं त्रिस्त्रिर्जानुपरिमार्जनम्। तालत्रयमपि प्राज्ञा मात्रासंज्ञां प्रचक्षते" इति याज्ञवल्क्योक्तेः, छोटिकात्रयाऽवच्छिन्नस्य कालस्य मात्रात्वमिति मतेन द्वादशमात्रस्य मन्दत्वाऽभिधानाद्। "अङ्गुष्ठाङ्गुलिमोक्षं च जानोश्च परिमार्जनम्। प्रदद्याच्छोटिकां यावत्तावन्मात्रेति गीयते" इत्यादिस्कान्दादिवाक्याद् एकच्छोटिकाऽवच्छिन्नस्य कालस्य मात्रात्वमित्याशयेन तु वाचस्पत्ये षट्त्रिंशन्मात्रस्य मन्दत्वाऽभिधानमित्यवधेयम् इत्यलं बहुना। (४) यद्यपि सङ्ख्याभिरपि कालनियम एव क्रियते तथाऽपि मात्राश्वासेयत्तादिरूपप्रकारभेदात् कथंचिद्भेद इति भावः।

सू० बाह्याभ्यन्तरविषयाऽऽक्षेपी चतुर्थः[१] ॥५१॥

भा० देशकालसङ्ख्याभिर्बाह्यविषयः परिदृष्ट आक्षिप्तः*तथाऽऽभ्यन्तरविषयः परिदृष्ट आक्षिप्तः।उभयथा दीर्घसूक्ष्मः।तत्पूर्वको भूमिजयात् क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायामः। तृतीयस्तु विषयाऽनालोचितो गत्यभावः सकृदारब्ध एव देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः। चतुर्थस्तु श्वासप्रश्वासयोर्विषयाऽवधारणात् क्रमेण भूमिजयादुभयाक्षेपपूर्वको गत्यभावश्चतुर्थः प्राणायाम इत्ययं विशेषः ॥ ५१ ॥

---

टी० एवं त्रयो विशेषा लक्षितारचतुर्थं लक्षयति "बाह्याऽऽभ्यन्तरविषयाक्षेपी चतुर्थः" ॥५१॥व्याचष्टे "देशकालसङ्ख्याभिः" इति। आक्षिप्तः = अभ्यासवशीकृताद् रूपादवरोपितः।सोऽपि दीर्घसूक्ष्मः।एवं तत्पूर्वको = बाह्याऽऽभ्यन्तरविषयप्राणायामो देशकालसङ्ख्यादर्शनपूर्वकः। न चाऽसौ चतुर्थस्तृतीय इव सकृत्प्रयत्नादह्नाय जायते। किन्त्वभ्यस्यमानस्तां तामवस्थां समापन्नः तत्तदवस्थाविजयाऽनुक्रमेण भवतीत्याह "भूमिजयाद्" इति। ननूभयोर्गत्यभावः स्तम्भवृत्तावप्यस्ति इति कोऽस्माद् विशेष इत्यत आह "तृतीय" इति। अनालोचनपूर्वः सकृत्प्रयत्ननिर्वर्त्तितस्तृतीयः, चतुर्थस्त्वालोचनपूर्वो बहुप्रयत्ननिर्वर्त्तनीय इति विशेषः। तयोः पूरकरेचकयोर्विषयो नालोचितोऽयन्तु देशकालसङ्ख्याभिरालोचित इत्यर्थः ॥ ५१ ॥

---

टि० (१) बाह्यविषयः श्वासो रेचकः, आभ्यन्तरविषयः प्रश्वासः पूरकः, तावाक्षिपति=अतिक्रम्य वर्त्तत इति बाह्याऽऽभ्यन्तराक्षेपी=पूरकरेचकाऽनपेक्षो यः केवलकुम्भकः स चतुर्थः प्राणायाम इत्यर्थः। अत्रेदं बोध्यम्। कुम्भको द्विविधः—सहितः केवलश्च। पूरकोत्तरं रेचकोत्तरं वा क्रियमाणः सहितकुम्भकः। "आरेच्याऽऽपूर्य्य वा कुर्य्यात् स हि सहितकुम्भकः" इत्युक्तेः। केवलकुम्भकस्तु "रेचकं पूरकं त्यक्त्वा सुखं यद्वायुधारणम्। प्राणायामोऽयमित्युक्तः स वै केवलकुम्भक" इति वाशिष्ठोक्तः। अयमेव च सूत्रकृता चतुर्थ इत्यनेनाऽभिहित इति। केचित्तु-आक्षेपीत्यस्यालोच्य वर्त्तत इत्यर्थ इत्याहुः। तथा च बाह्यविषयः=नासाग्राद् द्वादशाङ्गुलपर्य्यन्तः आभ्यन्तरविषयो हृदयनाभिचक्रादिस्तावालोच्य वर्त्तत इत्यर्थो बोध्यः ॥ * बाह्यविषयो=रेचको य आदौ देशादिभिः परिदृष्टः स यदाऽऽक्षिप्तः=अतिक्रामितो भवति। एवं पूरकोऽपि यदाऽतिक्रामितो भवति तदोभयत्यागपूर्वको यः कुम्भको भवति स चतुर्थः प्राणायामो भवतीत्यर्थः।

सू० ततः क्षीयते प्रकाशाऽऽवरणम् ॥ ५२ ॥

भा० प्राणायामानभ्यस्यतोऽस्य योगिनः क्षीयते विवेकज्ञानावरणीयं कर्म, यत्तदाचक्षते—"महामोहमयेनेन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाऽकार्य्ये नियुङ्क्ते[१]" इति । तदस्य प्रकाशावरणं कर्म संसारनिबन्धनं प्राणायामाऽभ्यासाद् दुर्बलं भवति, प्रतिक्षणं च क्षीयते । तथा चोक्तं—"तपो न परं प्राणायामात्ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्य" इति ॥ ५२ ॥

टी० प्राणायामस्यावान्तरप्रयोजनमाह "ततः क्षीयते प्रकाशावरणम्" ॥५२॥ आ व्रियतेऽनेन बुद्धिसत्त्वप्रकाश इत्यावरणं क्लेशः, पाप्मा च । व्याचष्टे—"प्राणायामान्" इति । ज्ञायतेऽनेनेति ज्ञानं=बुद्धिसत्त्वप्रकाशः। विवेकस्य ज्ञानं विवेकज्ञानम्। स*हि विवेकज्ञानमावृणोतीति विवेकज्ञानाऽऽवरणीयम्। भव्यगेयप्रवचनीयादीनां कर्त्तरि निपातस्य प्रदर्शनार्थत्वात्† कोपनीयरञ्जनीयवदत्राऽपि कर्तरि कृत्यप्रत्ययः । कर्मशब्देन तज्जन्यमपुण्यं तत्कारणं क्लेशं च लक्षयति । अत्रैवाऽऽगमिनामनुमतिमाह "यत्तदाचक्षते" इति । महामोहः=रागः, तदविनिर्भागवर्त्तिन्यविद्याऽपि तद्ग्रहणेन गृह्यते । अकार्य्यम्=अधर्मः । ननु प्राणायाम एव चेत् पाप्मानं क्षिणोति कृतं तर्हि तपसेत्यत आह "दुर्बलं भवति" इति । न तु सर्वथा क्षीयतेऽतस्तत्प्रक्षयाय तपोऽपेक्ष्यत इति । अत्राप्यागमिनामनुमतिमाह-"तथा चोक्तम्" इति । मनुरप्याह-"प्राणायामैर्दहेद् दोषान्" इति । प्राणायामस्य योगाङ्गता विष्णुपुराण उक्ता "प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते तु यः । प्राणायामः स विज्ञेयः सबीजोऽबीज एव च । परस्परेणाऽभिभवं प्राणाऽपानौ यदाऽनिलौ । कुरुतस्तद्विधानेन तृतीयं संयमाच्चयोः" इति ॥ ५२ ॥

टि० (१) महामोहमयेन=रागप्रधानेनेन्द्रजालसदृशेन शब्दादिविषयेण द्वारभूतेन प्रकाशस्वभावं बुद्धिसत्त्वमावृत्य तदेव=पापरूपं कर्मैव, अकार्य्ये=हिंसादौ प्रवर्त्तयतीत्यर्थः ।

* क्लेशः, पाप्मा च ।   †उपलक्षणार्थत्वाद् ।

किञ्च,

**सू० धारणासु च योग्यता मनसः ॥ ५३ ॥**

भा० प्राणायामाभ्यासादेव *"प्रच्छर्दनविधारणाभ्यां वा प्राणस्य" इति वचनात् ॥ ५३ ॥ अथ कः प्रत्याहारः—

**सू० स्वविषयाऽसम्प्रयोगे चित्तस्य स्वरूपाऽनुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥**

भा० स्वविषयसम्प्रयोगाऽभावे चित्तस्वरूपाऽनुकार इवेति = चित्तनिरोधे चित्तवन्निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते, यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति, निविश-

---

टी० किञ्च "धारणासु च योग्यता मनसः" ॥ ५३ ॥ प्राणायामो हि मनः स्थिरीकुर्वन् धारणासु योग्यं करोति ॥ ५३ ॥ तदेवं यमादिभिः संस्कृतः संयमाय प्रत्याहारमारभते। तस्य लक्षणसूत्रमवतारयितुं पृच्छति-"अथ" इति। "स्वे-त्यादि, प्रत्याहार इत्यन्तं सूत्रम् ॥ ५४ ॥ चित्तमपि मोहनीयरञ्जनीयकोपनीयैः शब्दादिभिर्विषयैर्न संप्रयुज्यते। तदसंयोगाच्चक्षुरादीन्यपि न संप्रयुज्यन्त इति सोऽयमिन्द्रियाणां चित्तस्वरूपाऽनुकारः। यत् पुनस्तत्त्वं चित्तमभिनिविशते न तदिन्द्रियाणां बाह्यविषयविषयाणामनुकारोऽपि। अतउक्तमनुकार इवेति । स्वविषयाऽसम्प्रयोगस्य साधारणस्य धर्मस्य चित्तानुकारनिमित्तत्वं सप्तम्या[१] दर्शयति । "स्व" इति । अनुकारं विवृणोति—"चित्तनिरोधे" इति । द्वयोर्निरोधहेतुश्च प्रयत्नस्तुल्य इति सादृश्यम् । अत्रैव दृष्टान्तमाह—"यथा मधुकरराजम्" इति। दार्ष्टान्तिके योजयति—"तथा" इति। अत्राऽपि विष्णुपुराणवाक्यं—"शब्दादिष्वनुरक्तानि निगृह्याऽक्षाणि योगवित् । कुर्य्याच्चित्तानुकारीणि प्रत्याहारपरायणः" ॥ १ ॥ तस्य प्रयो-

---

टि० (१) एतेन स्वविषयाऽसम्प्रयोग इति निमित्तसप्तमीति ध्वनितम्। तथा च प्राणायामेन चित्ते जिते सति य इन्द्रियाणां स्वस्वविषयाऽऽभिमुख्याभावनिमित्तश्चित्तस्वरूपाऽनुकारः= चित्तस्वभावाऽनुसरणं, स प्रत्याहार इत्यर्थः फलितः। सति सप्तमीति केचिद्। अत्रेदं बोध्यम्। प्राणायाम एवाऽभ्यस्यमानः प्रत्याहार इत्युच्यते "प्राणायामद्विषट्केन प्रत्याहार उदाहृत" इति स्कन्दपुराणाद् ।*प्राणायामाऽभ्यासादेव मनसो धारणासु योग्यतेत्यन्वयः ।

भा० मानमनु निविशन्ते, तथेन्द्रियाणि चित्तनिरोधे निरुद्धानि, इत्येष प्रत्याहारः ॥ ५४ ॥

सू० ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥

भा०शब्दादिष्वव्यसनमिन्द्रियजय इति केचित्।सक्तिर्व्यसनं=व्यस्यत्येनं श्रेयस इति। अविरुद्धा प्रतिपत्तिर्न्याय्या। शब्दादिसम्प्रयोगः स्वेच्छयेत्यन्ये। रागद्वेषाऽभावे सुखदुःखशून्यं शब्दादिज्ञानमिन्द्रियजय इति केचित्। चित्तैकाग्र्यादप्रतिपत्तिरेवेति जैगीषव्यः।

---

टी० जनं तत्रैव दर्शितं—"वश्यता परमा तेन जायते निश्चलाऽऽत्मनाम्। इन्द्रियाणामवश्यैस्तैर्न योगी योगसाधकः" इति ॥ ५४ ॥

अस्या[१] ऽनुवादकं सूत्रम्, "ततः*परमा वश्येतेन्द्रियाणाणाम्"॥५५॥ ननु सान्ति किमन्या अपरमा इन्द्रियाणां वश्यता या अपेक्ष्य परमेयमुच्यते? अद्धा[२]। ता दर्शयति "शब्दादिषु" इति। एतदेव विवृणोति "सक्तिः" इति। सक्तिः=रागः=व्यसनम्। कया व्युत्पत्त्या?[३]व्यस्यति=क्षिपति निरस्यत्येनं श्रेयस इति। तदभावोऽव्यसनं=वश्यता। अपरामपि वश्यतामाह "अविरुद्धा" इति। श्रुत्याद्यविरुद्धशब्दादिसेवनं तद्विरुद्धेष्वप्रवृत्तिः।सैव न्याय्या=न्यायादनपेता यतः। अपरामपि वश्यतामाह "शब्दादिसम्प्रयोग" इति। शब्दादिष्विन्द्रियाणां सम्प्रयोगः स्वेच्छया। भोग्येषु खल्वयं स्वतन्त्रो न भोग्यतन्त्र इत्यर्थः। अपरामपि वश्यतामाह "रागद्वेषाभाव" इति। सुखदुःखशून्यं=माध्यस्थेन शब्दादिज्ञानमित्येके। सूत्रकाराभिमतां वश्यतां परमर्षिसंमतामाह—"चित्तैकाग्र्यात्"इति। चित्तस्यैकाग्र्यात्सहेन्द्रियैरप्रवृत्तिरेव शब्दादिष्विति जैगीषव्यः। अस्याः परमतामाह "परमा तु" इति।

---

टि० (१) अस्य="वश्यता परमा तेन" इत्यादिविष्णुपुराणवाक्यस्य ॥ * प्रत्याहाराद्।

(२) सन्त्यन्या अप्यपरमा वश्यता इत्याह "अद्धा" इति। अवधारणार्थकमद्धेत्यव्ययम्।

(३) कया व्युत्पत्त्या रागो व्यसनपदवाच्य इति शङ्कायां उत्तरमाह "व्यस्यति" इति।

भा० ततश्च परमा त्वियं वश्यता यच्चित्तनिरोधे* निरुद्धानीन्द्रियाणि, नेतरेन्द्रियजयवत्प्रयत्नकृतमुपायान्तरमपेक्षन्ते योगिन इति ॥५५॥

इति पातञ्जले साधननिर्देशो नाम द्वितीयः पादः ॥ २ ॥

---

टी० तु—शब्दो वश्यताऽन्तरेभ्यो विशिनष्टि । वश्यतान्तराणि हि विषयाऽऽशीविष[१] संप्रयोगशालितया क्लेशविषसम्पर्कशङ्कां नाऽपक्रामन्ति । न हि विषविद्यावित्प्रकृष्टोऽपि वशीकृतभुजङ्गमो भुजङ्गममङ्के निधाय स्वपिति विस्रब्धः[२] । इयन्तु वश्यता विदूरीकृतनिखिलविषयव्यतिषङ्गा निराशङ्कतया परमेत्युच्यते । "नेतरेन्द्रियजयवदिति" । यथा यतमानसञ्ज्ञायामेकेन्द्रियजयेऽपीन्द्रियान्तरजयाय प्रयत्नान्तरमपेक्षन्ते न चैवं चित्तनिरोधे बाह्येन्द्रियनिरोधाय प्रयत्नान्तराऽपेक्षेत्यर्थः । "क्रियायोगं[३] जगौ क्लेशान् विपाकान् कर्मणामिह । तद्दुःखत्वं तथा व्यूहान् पादे योगस्य पञ्चकम्" इति ॥ ५५ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां 'तत्त्ववैशारद्यां' साधननिर्देशो नाम द्वितीयः पादः ॥ २ ॥

---

* यत् = यतो हेतोश्चित्तनिरोधे सति योगिन इतरेन्द्रियाणि स्वयमेव निरुद्धानि भवन्ति न तदर्थं प्रयत्नान्तरमपेक्षन्ते योगिनस्ततो हेतोरियं चित्तैकाग्र्यरूपा वश्यता परमेत्यन्वयः

टि० (१) आशिषि=दंष्ट्रायां विषं यस्य स आशीविषः सर्पः । पृषोदरादित्वात् साधुः ।

(२) विस्रब्धः=विश्वस्तः, निर्भय इति यावत् । व्यतिरेकैकेन्द्रियसञ्ज्ञादिवैराग्यरूपम् ।

(३) पादार्थसङ्ग्राहकं श्लोकमाह "क्रियायोगम्" इति । अस्मिन् योगस्य पादे पञ्चकं जगावित्यन्वयः । किं तत्पञ्चकमित्याह "क्रियायोगम्" इत्यादिना । स्पष्टार्थोऽयं श्लोकः ।

इति श्रीमदुदासीनबालरामस्वामिकृतं टिप्पणम् ॥ २ ॥

# पातञ्जलदर्शने विभूतिपादः ॥ ३ ॥

उक्तानि पञ्च बहिरङ्गाणि साधनानि, धारणा वक्तव्या,

**सू॰ देशबन्धश्चित्तस्य धारणा ॥ १ ॥**

भा॰ नाभिचक्रे, हृदयपुण्डरीके, मूर्द्ध्नि* ज्योतिषि, नासिकाऽग्रे,

---

टी॰ प्रथमद्वितीयपादाभ्यां समाधिस्तत्साधनं चोक्तं, तृतीयपादे तत्प्रवृत्त्यनुगुणाः†श्रद्धोत्पादहेतवो विभूतयो वक्तव्याः।ताश्च संयमसाध्याः।संयमश्च धारणाध्यानसमाधिसमुदाय इति विभूतिसाधनतया[१], पञ्चभ्यश्च योगाङ्गेभ्यो बहिरङ्गेभ्योऽस्याऽङ्गत्रयस्याऽन्तरङ्गतया विशेषज्ञापनार्थमत्र त्रयस्योपन्यासः। तत्राऽपि च धारणाध्यानसमाधीनां कार्य्यकारणभावेन नियतपौर्वाऽपर्य्यत्वात् तदनुरोधेनोपन्यासक्रम इति प्रथमं धारणा लक्षणीयेत्याह, "उक्तानि" इति। "देशबन्धश्चित्तस्य धारणा" ॥ १ ॥ आध्यात्मिकदेशमाह "नाभिचक्रे" इति। आदि—शब्देन[२] तात्वादयो ग्राह्याः। बन्धः=संबन्धः। बाह्यदेशमाह "बाह्ये वा" इति।बाह्ये च न स्वरूपेण चित्तस्य संबन्धः सम्भवतीत्युक्तं— वृत्तिमात्रेण = ज्ञानमात्रेणेत्यर्थः।

अत्राऽपि पुराणम्"प्राणायामेन पवनं प्रत्याहारेण चेन्द्रियम्। वशीकृत्य ततः कुर्य्याच्चित्तस्थानं शुभाश्रये"।शुभाश्रयाः=बाह्या हिरण्यगर्भवासवप्रजापतिप्रभृतयः, इदं च तत्रोक्तम्—मूर्त्तं भगवतो रूपं सर्वोपाश्रयनिःस्पृहम्।

---

टि॰ (१) यतः संयमसाध्या विभूतय इति हेतोः, विभूतिसाधनतयाऽत्र त्रयस्योपन्यास इति सम्बन्धः। अन्यमप्युपन्यासहेतुमाह "पञ्चभ्यश्च" इति ॥ * मूर्द्धस्थे ज्योतिषि।

(२) आदिपदेन कण्ठमुखोरोनेत्राणि ग्राह्याणि। यद्यपि "प्राङ्नाभ्यां हृदये चाऽथ तृतीये च तथोरसि। कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्द्धसु। किञ्चित्तस्मात्परस्मिंश्च धारणा दश कीर्तिताः" इति गारुडे तालुस्थानं नोक्तं तथापि "अतः पराऽस्य धारणा तालुरसनाग्रनिपीडनाद्" इति मैत्र्युपनिषदो ग्राह्यम्। † समाध्याद्यनुष्ठानप्रवृत्तिहेतुकाः।

भा० जिह्वाग्र, इत्येवमादिषु देशेषु, बाह्ये वा विषये, चित्तस्य वृत्तिमात्रेण बन्ध इति धारणा ॥ १ ॥

सू० तत्र प्रत्ययैकतानता ध्यानम्[1] ॥ २ ॥

भा० तस्मिन् देशे ध्येयाऽऽलम्बनस्य प्रत्ययस्यैकतानता=सदृशः प्रवाहः प्रत्ययान्तरेणाऽपरामृष्टो ध्यानम् ॥ २ ॥

सू०तदेवाऽर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः॥३॥

टी० एषा वै धारणा ज्ञेया याच्चित्तं तत्र धार्य्यते। यच्च मूर्त्तं हरे रूपं याद्विचिन्त्यं नराऽधिप। तच्छ्रूयतामनाधारा धारणा नोपपद्यते। प्रसन्नवदनं चारुपद्मपत्रनिभेक्षणम्। सुकपोलं सुविस्तीर्णललाटफलकोज्ज्वलम्। समकर्णान्तविन्यस्तचारुकुण्डलभूषणम्। कुम्बुग्रीवं सुविस्तीर्णश्रीवत्साङ्कितवक्षसम्। वलीविभङ्गिना मग्ननाभिना चोदरेण च। प्रलम्बाऽष्टभुजं विष्णुमथवाऽपि चतुर्भुजम्। समस्थितोरुजङ्घं च स्वस्तिकांघ्रिकराम्बुजम्। चिन्तयेद् ब्रह्मभूतं तं पीतनिर्मलवाससम्। किरीटचारुकेयूरकटकादिविभूषितम्। शार्ङ्गचक्रगदाखड्गशंखाक्षवलयाऽन्वितम्। चिन्तयेत्तन्मयो योगी समाधायाऽऽत्ममानसम्। तावत् यावद् दृढीभूता तत्रैव नृप धारणा। एतदातिष्ठतोऽन्यद्वा स्वेच्छया कर्मकुर्वतः। नाऽपयाति *यदा चित्तं सिद्धां मन्येत तां तदा इति॥ १ ॥ धारणासाध्यं ध्यानं लक्षयति-"तत्र प्रत्ययैकतानता ध्यानम्" ॥२॥ एकतानता=एकाग्रता। सुगमं भाष्यम्। अत्रापि पुराणम्। तद्रूपप्रत्ययैकाग्र्यसन्ततिश्चान्यनिःस्पृहा। तद्ध्यानं षड्भिरङ्गैः प्रथमैर्निष्पाद्यते नृप" ॥ २ ॥

ध्यानसाध्यं समाधिं लक्षयति—"तदेव—समाधिः" ॥ ३ ॥

---

टि० (१) एकतानता इत्यस्याग्रे षष्टिघटिकाऽवच्छिन्नेति शेषणीयम्। अन्यथा क्षणमात्रेणाप्येकतानताया ध्यानत्वाऽऽपत्तेः। अत्रेदं बोध्यम्। यद्यपि सूत्रकृता कालविशेषमनुपादायैव धारणादयो लक्षितास्तथाऽपि "धारणा पञ्चनाडीका ध्यानं स्यात् षष्टिनाडिकम्। दिनद्वादशकेनैव समाधिरिह भण्यते" इत्यादिस्कन्दपुराणाद् "प्राणायामैर्द्वादशभिर्यावत्कालः कृतो भवेत्। स तावत्कालपर्य्यन्तं मनो ब्रह्मणि धारयेत्। तस्यैव ब्रह्मणि प्रोक्तं ध्यानं द्वादश धारणा। ध्यानद्वादशपर्य्यन्तं मनो ब्रह्मणि योजयेत्। तिष्ठेत्तल्लयतो युक्तः समाधिः सोऽभिधीयते" इत्यादिगारुडाच्च, तत्तत्कालाऽवच्छिन्नत्वेन विशेषणीया इत्यलं बहुना। * विषयोन्मुखी न भवति।

भा० ध्यानमेव ध्येयाऽऽकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्तदा समाधिरित्युच्यते ॥ ३ ॥

तदेतद् धारणाध्यानसमाधित्रयमेकत्र संयमः[1]

सू० त्रयमेकत्र संयमः ॥ ४ ॥

भा० एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते । तदस्य त्रयस्य तान्त्रिकी परिभाषा संयम इति ॥ ४ ॥

सू० तज्जयात् प्रज्ञाऽऽलोकः ॥ ५ ॥

भा० तस्य संयमस्य जयात्समाधिप्रज्ञाया भवत्यालोकः । यथा यथा संयमः स्थिरपदो भवति तथा तथा समाधिप्रज्ञा विशारदी भवति ॥ ५ ॥

---

टी० व्याचष्टे "ध्यानमेव" इति । 'ध्येयाकारनिर्भासम्'-इति = ध्येयाऽऽकारस्य निर्भासो न ध्यानाऽऽकारस्य इति । अत एवाऽऽह-"शून्यम्" इति । ननु शून्यं चेत्कथं ध्येयं प्रकाशेतेत्यत आह-इवेति । अत्रैव हेतुमाह-ध्येयस्वभावावेशाद् इति । अत्रापि पुराणं "तस्यैव कल्पनाहीनंस्वरूपग्रहणं हि यत् । मनसा ध्याननिष्पाद्यं समाधिः सोऽभिधीयते" इति । ध्येयाद्ध्यानस्य भेदः कल्पना, तद्धीनमित्यर्थः । अष्टाङ्गयोगमुक्त्वा, खाण्डिक्याय केशिध्वज उपसंजहार, क्षेत्रज्ञः* करणी ज्ञानं करणं तदचेतनं, निष्पाद्य मुक्तिकार्य्यं वै कृतकृत्यं निवर्त्तते इति ३

धारणाध्यानसमाधिरित्येतत्त्रयस्य तत्र तत्र नियुज्यमानस्य प्रातिस्विकसञ्ज्ञोच्चारणे गौरवं स्यादिति लाघवार्थं परिभाषासूत्रमवतारयति-"तदेतद्" इति । "त्रयमेकत्र संयमः" ॥ ४ ॥ व्याचष्टे-"एकविषयाणि" इति । वाचकत्वशङ्कामपनयति-"तदस्य" इति । तन्त्र्यते = व्युत्पाद्यते योगो येन शास्त्रेण तत् तन्त्रं, तत्र भवा तान्त्रिकी, संयमप्रदेशाः 'परिणामत्रयसंयमाद्' इत्येवमादयः ४

संयमविजयस्याऽभ्याससाधनस्य फलमाह-"तज्जयात्प्रज्ञालोकः" ॥ ५ ॥ प्रत्ययान्तराऽनभिभूतस्य निर्मले प्रवाहेऽवस्थानमालोकः प्रज्ञायाः । सुगमं भाष्यम् ५

---

टि० (१) इत्याह सूत्रकार इति शेषः । * एतत्पद्यं भूमिकायां व्याख्यातम् ।

सू० तस्य भूमिषु विनियोगः ॥ ६ ॥

भा०तस्य=संयमस्य जितभूमेर्या ऽनन्तरा भूमिस्तत्र विनियोगः। न ह्यजिता ऽधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु [1]संयमं लभते। तदभावाच्च*कुतस्तस्य प्रज्ञालोकः। ईश्वरप्रसादाज्जितोत्तरभूमिकस्य च ना ऽधरभूमिषु परचित्तज्ञानादिषु संयमो युक्तः। कस्मात्? तदर्थस्या ऽन्यत एवा ऽवगतत्वाद्। भूमेरस्या इयमनन्तरा भूमिरित्यत्र

टी० क पुनर्विनियुक्तस्य संयमस्य फलमेतदित्यत आह-"तस्य भूमिषु विनियोगः"॥६॥ भूमिं विशेषयति भाष्यकारः "तस्य" इति। जिताया भूमेर्या ऽनन्तरा भूमिः=अवस्था ऽजिता तत्र विनियोगः। स्थूलविषये सवितर्के समाधौ वशीकृते संयमेन संयमस्या ऽविजिते निर्वितर्के विनियोगः। तस्मिन्नपि वशीकृते सविचारे विनियोग इत्यर्थः। एवं निर्विचारे विनियोग इत्यर्थः। अत एव स्थूलविषयसमापत्तिसिद्धौ सत्यां पुराणे तत्तदायुधभूषणा ऽपनयेन सूक्ष्मविषयः समाधिरवतारितः-"ततः शङ्खगदाचक्रशार्ङ्गादिरहितं बुधः। चिन्तयेद् भगवद्रूपं प्रशान्तं साक्षसूत्रकम्। यदा च धारणा तस्मिन्नवस्थानवती ततः। किरीटकेयूरमुखैर्भूषणै रहितं स्मरेत्। तदेका ऽवयवं देवं सो ऽहं चेति पुनर्बुधः। कुर्यात् ततो ह्यहमिति प्रणिधानपरो भवेद्" इति ॥ कस्मात्पुनरधरां भूमिं विजित्योत्तरां विजयते, विपर्य्ययः कस्मान्न भवतीत्यत आह-"न ह्यजिता ऽधरभूमिः" इति। न हि शिलाह्रदाद् गङ्गां प्रति प्रस्थितो ऽप्राप्य मेघवनं गङ्गां प्राप्नोति। ईश्वरप्रसादाज्जितोत्तरभूमिकस्य च" इति। कस्मात्, तदर्थस्य=उत्तरभूमिविजयप्रत्यासन्नस्य, अन्यत एव=ईश्वरप्रणिधानादेवा ऽवगतत्वाद्, निष्पादितक्रिये कर्मणि विशेषा ऽनाधायिनः साधनस्य साधनन्याया ऽतिपाताद्[2] इति।

टि० (१) ग्राह्यसमापत्तिरधरभूमिः, ग्रहणसमापत्तिश्चा ऽनन्तरभूमिः, ग्रहीतृसमापत्तिश्च प्रान्तभूमिः ॥ * उत्तरभूमिसंयमा ऽलाभे दोषमाह "तदभावाद्" इति।

(२) साधनन्याया ऽतिपाताद्=साधनलक्षणातिक्रमणादित्यर्थः। अनिष्पन्नं हि निष्पादयत् साधनमित्युच्यते, न निष्पन्नमिति भावः।

भा०योग एवोपाध्यायः[१] कथम् । एवमुक्तं—"योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्त्तते। योऽप्रमत्तस्तु योगेन स योगे रमते चिरम्" इति ॥ ६ ॥

सू० त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥

भा०तदेतद् धारणाध्यानसमाधित्रयम्, अन्तरङ्गं सम्प्रज्ञातस्य समाधेः पूर्वेभ्यो यमादिसाधनेभ्य इति ॥ ७ ॥

सू० तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

---

टी०स्यादेतद्,आगमतः सामान्यतोऽवगतानामप्यवान्तरभूमिभेदानां कुतःपौर्वापर्य्याऽवगतिरित्यत आह-"भूमेरस्या"इति।जितः पूर्वो योग उत्तरस्य योगस्य ज्ञानप्रवृत्त्यधिगमहेतुः।अत्रस्थैवाऽवस्थावानित्यभिप्रेत्यैतद् *द्रष्टव्यम्६।

कस्मात्पुनर्योगाऽङ्गत्वाऽविशेषेऽपि संयमस्य तत्र तत्र विनियोगो,नेतरेषां पञ्चानामित्यत आह,—"त्रयमन्तरङ्गं पूर्वेभ्यः" ॥ ७ ॥ तदिदं साधनत्रयं साध्यसमानविषयत्वेनाऽन्तरङ्गं, न त्वेवं यमादयः। तस्मात्ते बहिरङ्गा इत्यर्थः । साधनत्रयस्य सम्प्रज्ञात एवाऽन्तरङ्गत्वं, न त्वसम्प्रज्ञाते । तस्य निर्बीजतया तैः सह समानविषयत्वाऽभावात्, तेषु चिरनिरुद्धेषु सम्प्रज्ञातपरमकाष्ठाऽपरनामज्ञानप्रसादरूपपरवैराग्याऽनन्तरमुत्पादाच्चेत्याह — "तदेतद्" इति॥७॥"तदपि—तस्य"॥८॥समानविषयत्वमन्तरङ्गत्वप्रयोजकमिह, न तु तदनन्तरभाव[२]स्तस्य बहिरङ्गेश्वरप्रणिधानवार्त्तितया स-

---

टि० (१)उपाध्यायः=गुरुः ।योगबलेन स्वयमेव जानातीत्यर्थः।योगेनाप्रमत्तः=सिद्धिलिप्साशून्यः। * एतद्=भूमीनां योगत्वाऽऽख्यानम् । (२) यदनन्तरं यद् भवति तत् तस्याऽन्तरङ्गं साधनमिति न नियमः । "ईश्वरप्रणिधानात्समाधिसिद्धिः" इत्युक्तेः समाधेरीश्वरप्रणिधानाऽनन्तरभावित्वेऽपि तं प्रति तस्याऽन्तरङ्गत्वानभ्युपगमात्। किन्तु यस्य साधनस्य साध्यसमानविषयत्वं तस्याऽन्तरङ्गत्वमिति भावः।उभयविधाऽन्तरङ्गत्वस्य संयमेऽभावान्नाऽसम्प्रज्ञातम्प्रत्यन्तरङ्गता, परवैराग्यन्त्वस्याऽन्तरङ्गं साधनमिति तत्त्वम् ।

भा० तदपि=अन्तरङ्गं[1] साधनत्रयं, निर्बीजस्य योगस्य बहिरङ्गम्। कस्मात्, तदभावे भावादिति ॥८॥ अथ निरोधचित्तक्षणेषु चलं गुणवृत्तमिति कीदृशस्तदा चित्तपरिणामः—

सू० व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥

---

टी० व्यभिचारत्वादितिस्थिते सव्यभिचारमप्यन्तरङ्गलक्षणं तदनन्तरभावित्वमस्य नास्ति। तस्माद् दूरापेता ऽन्तरङ्गता संयमस्या ऽसम्प्रज्ञाते इति दर्शयितुं तदभावे ऽभावादित्युक्तम्॥८॥ परिणामत्रयसंयमादित्यत्रोपयोक्ष्यमाणपरिणामत्रयं प्रतिपिपादयिषुर्निर्बीजप्रसङ्गेन पृच्छति—" अथ" इति। व्युत्थानसम्प्रज्ञातयोश्चित्तस्य स्फुटतरपरिणामभेदप्रचया ऽनुभवान्न प्रश्ना ऽवतारो, निरोधे तु ना ऽनुभूयते परिणामो, न चाननुभूयमानो नास्ति, चित्तस्य त्रिगुणतया चलत्वेन गुणानां क्षणमपि अपरिणामस्या ऽसम्भवादित्यर्थः। प्रश्नोत्तरं सूत्रं-"व्युत्थान-निरोधपरिणामः"॥ असम्प्रज्ञातं समाधिमपेक्ष्य सम्प्रज्ञातो व्युत्थानं, निरुध्यते ऽनेनेति निरोधः=ज्ञानप्रसादः[2] परं वैराग्यं, तयोर्व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ—व्युत्थानसंस्कारस्या ऽभिभवो, निरोधसंस्कारस्या ऽऽविर्भावः। चित्तस्य धर्मिणो निरोधलक्षणस्य=निरोधा ऽवसरस्य द्वयोरवस्थयोरन्वयः। न हि चित्तं धर्मि सम्प्रज्ञाता ऽवस्थायामसम्प्रज्ञातावस्थायां च संस्कारा ऽभिभवप्रादुर्भावयोः स्वरूपेण भिद्यत इति। ननु यथोत्तरे क्लेशा अविद्यामूला अविद्यानिवृत्तौ निवर्त्तन्त इति तन्निवृत्तौ न पृथक् प्रयत्नान्तरमास्थीयते एवं व्युत्थानप्रत्ययमूलाः संस्कारा व्युत्थाननिवृत्तावेव निवर्त्तन्त इति

---

टि० (१) अन्तरङ्गं=सम्प्रज्ञातसमानविषयत्वेना ऽन्तरङ्गमित्यर्थः। तदभावे=ज्ञानप्रसादरूपपरवैराग्येण संयमविलये कृते सति, भावात्=असम्प्रज्ञातोत्पादाद्।

(२) अत्र सूत्रे निरोधपदेना ऽसम्प्रज्ञात एव गृह्यते, न सम्प्रज्ञातो ऽपि। निर्बीजसमाध्युपक्रम एव प्रश्नकरणाद् "ऋतम्भरा तत्र प्रज्ञा" इति सूत्रात् सम्प्रज्ञाते स्फुटतरपरिणामा ऽनुभवात्तत्र प्रश्ना ऽनुपपत्तेश्चेत्याशयेनाह "निरोधः=ज्ञानप्रसाद" इति। एतेन निरोधश्च योगद्वयसाधारणो ग्राह्य इति भिक्षूक्तिः प्रत्युक्ता वेदितव्या।

भा० व्युत्थानसंस्काराश्चित्तधर्मा* न ते प्रत्ययाऽऽत्मका इति[१] प्रत्ययनिरोधे न निरुद्धा, निरोधसंस्कारा अपि चित्तधर्माः। तयोरभिभवप्रादुर्भावौ = व्युत्थानसंस्कारा हीयन्ते, निरोधसंस्कारा आधीयन्ते, निरोधक्षणं चित्तमन्वेति। तदेकस्य चित्तस्य प्रतिक्षणमिदं संस्काराऽन्यथात्वं निरोधपरिणामः । तदा संस्कारशेषं चित्तमिति निरोधसमाधौ व्याख्यातम् ॥ ९ ॥

सू० तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥

भा० निरोधसंस्कारात् निरोधसंस्काराभ्यासपाटवापेक्षा प्रशान्तवाहिता चित्तस्य भवति । तत्संस्कारमान्द्ये व्युत्थानधर्मिणा संस्कारेण निरोधधर्मसंस्कारोऽभिभूयत इति ॥ १० ॥

---

टी० तन्निवृत्तौ न निरोधसंस्कारोऽपेक्षितव्य इत्यत आह "व्युत्थानसंस्कारा" इति। न कारणमात्रनिवृत्तिः कार्य्यनिवृत्तिहेतुः।मा भूत्कुविन्दनिवृत्ता[२]वपि पटस्य निवृत्तिः। अपि तु यत्कारणात्मकं यत्कार्य्यं तत्कारणनिवृत्तौ तत्कार्य्यनिवृत्तिः। उत्तरे च क्लेशा अविद्यात्मान इत्युक्तम्।अतस्तन्निवृत्तौ तेषां निवृत्तिरुपपन्ना। न त्वेवं प्रत्ययाऽऽत्मानः संस्काराः। चिरनिरुद्धे प्रत्यये सम्प्रतिस्मरणदर्शनात्। तस्मात्-प्रत्ययनिवृत्तावपि तन्निवृत्तौ निरोधसंस्कारप्रचय एवोपासनीय इत्यर्थः। सुगममन्यद् ॥ ९ ॥ सर्वथा व्युत्थानसंस्काराऽभिभवे तु बलवता निरोधसंस्कारेण कीदृशः परिणाम इत्यत आह,—" तस्य प्रशान्तवाहिता संस्काराद्" ॥ १० ॥ व्युत्थानसंस्कारमलरहितनिरोधपरम्परामात्रवाहिता प्रशान्तवाहिता । कस्मात् पुनः संस्कारपाटवमपेक्षते, न तु संस्कारमात्रमित्यत आह " तत्संस्कारमान्द्ये" इति। तद् इति निरोधं परामृशति । ये तु "नाऽभिभूयते" इति पठन्ति ते तदा† व्युत्थानं परामृशन्ति ॥ १० ॥

---

टि० (१) इति शब्दो हेत्वर्थे। तथा च यतो व्युत्थानसंस्कारा नप्रत्ययात्मका = न वृत्त्युपादानकारणकाः, किन्तु प्रत्ययनिमित्तका, अतो वृत्तिनिरोधेऽपि न निरुद्धा इत्यर्थोऽवसेयः ।

* चित्तोपादानकाः । † तच्छब्देन ।

(२) कुविन्दः = तन्तुवायस्तान्निवृत्तावपि पटानिवृत्तिर्न हि भवतीत्यर्थः ।

सू० सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥

भा०सर्वार्थता चित्तधर्मः,एकाग्रता चित्तधर्मः, सर्वार्थतायाःक्षयः=तिरोभाव इत्यर्थः, एकाग्रताया उदय=आविर्भाव इत्यर्थः । तयोर्धर्मित्वेनाऽनुगतं चित्तं,तदिदं चित्तमपायोपजननयोः स्वात्मभूतयोर्धर्मयोरनुगतं समाधीयते स चित्तस्य समाधिपरिणामः॥ ११॥

सू० ततः[१] पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥

भा० समाहितचित्तस्य पूर्वप्रत्ययः शान्त, उत्तरस्तत्सदृश उदितः, समाधिचित्तमुभयोरनुगतं पुनस्तथैव, आ समाधिभ्रेषादिति। स खल्वयं धर्मिणश्चित्तस्यैकाग्रतापरिणामः ॥ १२ ॥

सू० एतेन भूतेन्द्रियेषु धर्मलक्षणाऽवस्थापरिणामा व्याख्याताः ॥ १३ ॥

---

टी० सम्प्रज्ञातसमाधिपरिणामाऽवस्थां चित्तस्य दर्शयति—सू०"सर्वार्थ—समाधिपरिणामः" ॥११॥ विक्षिप्तता सर्वार्थता, सन्न विनश्यतीति,क्षयस्तिरोभावः, नाऽसदुत्पद्यत इत्युदय आविर्भावः। आत्मभूतयोः सर्वार्थतैकाग्रताधर्मयोर्यावपायोपजनौ=सर्वार्थताया अपाय,एकाग्रताया उपजनस्तयोरनुगतं चित्तं समाधीयते=पूर्वाऽपरीभूतसाध्यमानसमाधिविशेषणंभवतीति ॥११॥ ॥ ततः-परिणामः ॥१२॥ ततः पुनः समाधेः पूर्वापरीभूताया अवस्थाया निष्पत्तौ सत्यां शान्तोदितौ=अतीतवर्त्तमानौ, तुल्यौ च तौ प्रत्ययौ चेति तुल्यप्रत्ययौ,एकाग्रतायान्तु द्वयोः सादृश्यं,'समाहिताचित्तस्य' इति समाधिनिष्पत्तिर्दर्शिता । तथैव=एकाग्रमेव । अवधिमाह—"आसमाधिभ्रेषाद्"=भ्रंशाद् इति ॥ १२ ॥

---

टि० (१) ततः=विक्षिप्तताया निःशेषक्षयादनन्तरम् ।

भा० एतेन = पूर्वोक्तेन चित्तपरिणामेन धर्मलक्षणाऽवस्थारूपेण, भूतेन्द्रियेषु धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चोक्तो वेदितव्यः । तत्र व्युत्थाननिरोधयोर्धर्मयोरभिभवप्रादुर्भावौ धर्मिणि धर्मपरिणामो[1], लक्षणपरिणामश्च = निरोधस्त्रिलक्षणस्त्रिभिरध्वभिर्युक्तः। स खल्वनागतलक्षणमध्वानं प्रथमं हित्वा धर्मत्वमनतिक्रान्तो वर्त्तमानं लक्षणं प्रतिपन्नो यत्राऽस्य स्वरूपेणाऽभिव्यक्तिः, एषोऽस्य द्वितीयोऽध्वा । न चातीताऽनागताभ्यां लक्षणाभ्यां वियुक्तः ।

टी० प्रासङ्गिकं च वक्ष्यमाणौपयिकं च भूतेन्द्रियपरिणामं विभजते—सू० "एतेन=व्याख्याताः" ॥१३॥ व्याचष्टे—"एतेन" इति। ननु चित्तपरिणतिमात्रमुक्तं, न तु तत्प्रकारा धर्मलक्षणाऽवस्थापरिणामाः, तत्कथं तेषामतिदेश इत्यत आह—"व्युत्थाननिरोधयोः" इति । धर्मलक्षणाऽवस्थाशब्दाः परं नोच्चारिता, न तु धर्मलक्षणावस्थापरिणामा नोक्ता इति संक्षेपार्थः । तथाहि । व्युत्थाननिरोधसंस्कारयोरित्यत्रैव सूत्रे धर्मपरिणाम उक्तः । इमं च धर्मपरिणामं दर्शयता तेनैव धर्माऽधिकरणो लक्षणपरिणामोऽपि सूचित एवेत्याह—"लक्षणपरिणाम" इति । लक्ष्यतेऽनेन लक्षणं कालभेदः । तेन हि लक्षितं वस्तु वस्त्वन्तरेभ्यः कालान्तरयुक्तेभ्यो व्यवच्छिद्यते इति। 'निरोधास्त्रिलक्षणः'=अस्यैव व्याख्यानं "त्रिभिरध्वभिर्युक्तः"। अध्व-शब्दःकालवचनः । " स खल्वनागतलक्षणमध्वानं प्रथमं हित्वा "=तत्किमध्ववद् धर्मत्वमप्यतिपतति, नेत्याह—"धर्मत्वमनतिक्रान्तो वर्त्तमानं लक्षणं प्रतिपन्न" इति। य एव निरोधोऽनागत आसीत् स एव सम्प्रति वर्त्तमानो, न तु निरोधोऽनिरोध[2] इत्यर्थः । वर्त्तमानतास्वरूपव्याख्यानं—'यत्राऽस्य स्वरूपेण'=स्वोचितार्थक्रियाकरणस्वरूपेण, अभिव्यक्तिः =

टि० (१) अवस्थितस्यैव धर्मिणः पूर्वधर्मतिरोभावे धर्मान्तरप्रादुर्भावो धर्मपरिणामः । स च निरोधपरिणामलक्षणसूत्र उक्तः । अवस्थितस्य धर्मस्याऽनागतादिलक्षणत्यागे सति वर्त्तमानादिलक्षणलाभो लक्षणपरिणामः। सोऽप्यभिभवप्रादुर्भावशब्देन तत्रोक्त इति भावः ।

(२) न तु प्रागसत्त्वेन निरोधोऽसन्नेवेत्यर्थः ।

भा०तथा व्युत्थानं त्रिलक्षणं=त्रिभिरध्वभिर्युक्तं वर्त्तमानं लक्षणं हित्वा धर्मत्वमनतिक्रान्तमतीतलक्षणं प्रतिपन्नम् । एषोऽस्य तृतीयोऽध्वा । न चाऽनागतवर्त्तमानाभ्यां लक्षणाभ्यां वियुक्तम् । एवं पुनर्व्युत्थानमुपसंपद्यमानमनागतं लक्षणं हित्वा धर्मत्वमनतिक्रान्तं वर्त्तमानं लक्षणं प्रतिपन्नम् । यत्राऽस्य स्वरूपाऽभिव्यक्तौ सत्यां व्यापार, एषोऽस्य द्वितीयोऽध्वा।न चाऽतीताऽनागताभ्यां लक्षणाभ्यां विमुक्तमिति । एवं पुनर्निरोध, एवं पुनर्व्युत्थानमिति । तथाऽवस्थापरिणामः *—तत्र निरोधक्षणेषु निरोधसंस्कारा बलवन्तो भवन्ति दुर्बला व्युत्थानसंस्कारा इति। एष धर्माणामवस्थापरिणामः । तत्र धर्मिणो धर्मैः परि-

---

टी० समुदाचारः। एषोऽस्य प्रथममनागतमध्वानमपेक्ष्य द्वितीयोऽध्वा । स्यादेतद्।अनागतमध्वानं हित्वा चेद्वर्त्तमानतामापन्नस्तां†च हित्वा ऽतीततामापत्स्यते हन्त भोरध्वनामुत्पात्तिविनाशौ स्याताम्।न चेष्येते। नह्यसत उत्पादो, नाऽपि सतो विनाश इत्यत आह—"न च"इति।नचाऽतीताऽनागताभ्यां सामान्यात्मनाऽवस्थिताभ्यां(१)वियुक्त इत्यर्थः।अनागतस्य निरोधस्य वर्त्तमानतालक्षणं दर्शयित्वा वर्त्तमानव्युत्थानस्याऽतीततां तृतीयमध्वानमाह-"तथा व्युत्थानम्" इति। तत्किं निरोध एवाऽनागतो,न व्युत्थानं, नेत्याह—"एवं पुनर्व्युत्थानम्" इति व्युत्थानजात्यपेक्षया पुनर्भावो, न व्यक्त्यपेक्षया। न ह्यतीतं पुनर्भवतीति । स्वरूपाऽभिव्यक्तिः = अर्थक्रियाक्षमस्याऽऽविर्भावः। स चैवं लक्षणपरिणाम उक्तस्तज्जातीयेषु पौनःपुन्येन वर्त्तत इत्याह "एवं पुनः" इति । धर्मपरिणामसूचितमेवाऽवस्थापरिणाममाह "तथाऽवस्था" इति । धर्माणां = वर्त्तमानाध्वनां बलवत्त्वाबलवत्त्वे अवस्था, तस्याः प्रतिक्षणं तारतम्यं परिणामः । उपसंहरति "एष" इति ।प-

---

टि० (१) ननु कीदृशौ तावतीताऽनागतावध्वानौ यौ वर्त्तमानाऽध्वना न विरुद्धयेते,अत आह "सामान्येति" । असदुत्पादसद्विनाशयोरसम्भवात् सामान्यरूपेणाऽवस्थिताभ्यामतीताऽनागताभ्यामवियुक्त इत्यर्थः । उद्भूतयोरेव परस्परं विरोधो, न तूद्भूताऽनुद्भूतयोरिति भावः। एतच्च "सामान्यानि त्वतिशयैः सह प्रवर्त्तन्त" इत्यादिना पूर्वमुपपादितम् । अनुपदमेव च स्पष्टयिष्यतेऽत्र भाष्यकारैः ॥   * उच्यते इति शेषः ।   † वर्त्तमानताम् ।

भा० णामो, धर्माणां लक्षणैः परिणामो, लक्षणानामप्यवस्थाभिः परिणाम इति। एवं धर्मलक्षणावस्थापरिणामैः शून्यं न क्षणमपि गुणवृत्तमवतिष्ठते। चलञ्च गुणवृत्तं, गुणस्वाभाव्यन्तु प्रवृत्तिकारणमुक्तं गुणानामिति। एतेन भूतेन्द्रियेषु धर्मधर्मिभेदात् त्रिविधः परिणामो वेदितव्यः। परमार्थतस्त्वेक एव परिणामः। धर्मिस्वरूपमात्रो हि धर्मो धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यत इति तत्र धर्मस्य धर्मिणि वर्त्तमानस्यैवाऽध्वस्वतीताऽनागतवर्त्तमानेषु

---

टी० रिणामभेदानां सम्बन्धिभेदान्निर्धारयति तन्त्रानुभवाऽनुसारात्-"तत्र धर्मिण" इति। तत्किमेष परिणामो गुणानां कादाचित्को? नेत्याह--"एवम्" इति। कस्मात्पुनरयं परिणामः सदातन इत्यत आह "चलञ्च" इति। चो--हेत्वर्थे, वृत्तं = प्रचारः। एतदेव कुत इत्यत आह--गुणस्वाभाव्यम्" इति। उक्तम्—अत्रैव पुरस्तात्। सोऽयं त्रिविधोऽपि चित्तपरिणामो भूतेन्द्रियेषु सूत्रकारेण निर्दिष्ट इत्याह—"एतेन" इति। एष त्रिविधः परिणामो धर्मधर्मिभेदाद् = धर्मधर्मिणोर्भेदमालक्ष्य[१]। तत्र भूतानां पृथिव्यादीनां धर्मिणां गवादिर्घटादिर्वा धर्मपरिणामः। धर्माणां चाऽतीताऽनागतावर्तमानरूपता लक्षणपरिणामः। वर्तमानलक्षणाऽऽपन्नस्य गवादेर्बाल्यकौमारयौवनवार्धक्यमवस्थापरिणामः। घटादीनामपि नवपुरातनताऽवस्थापरिणामः। एवमिन्द्रियाणामपि धर्मिणां तत्तन्नीलाद्यालोचनं धर्मपरिणामो, धर्मस्य वर्त्तमानतादिर्लक्षणपरिणामो, लक्षणस्य रत्नाद्यालोचनस्य स्फुटत्वास्फुटत्वादिरवस्थापरिणामः। सोऽयमेवंविधो भूतेन्द्रियपरिणामो धर्मिणो धर्मलक्षणाऽवस्थानां भेदमाश्रित्य वेदितव्यः। अभेदमाश्रित्याह—"परमार्थतस्तु" इति। तु—शब्दो भेदपक्षाद्विशिनष्टि। पारमार्थिकत्वमस्य ज्ञाप्यते न त्वन्यस्य परिणामस्य निषिध्यते[२], कस्माद्? "धर्मिस्वरूपमात्रो हि" इति। ननु यदि धर्मिविक्रियैव धर्मः, कथं तर्ह्यसङ्करप्रत्ययो[३] लोके परिणामेष्वित्यत आह—"धर्मद्वारा" इति। धर्म-शब्देन धर्मलक्षणावस्थाः परिगृह्यन्ते। तद्द्वारेण धर्मिण एव विक्रियेत्येका चाऽसङ्कीर्णा च। तद्द्वाराणामभेदे-

---

टि० (१) भेदमालक्ष्य=भेदमाश्रित्योक्त इत्यर्थः। (२) न तु परिणामानां त्रित्वं निषिध्यतेऽपि तु त्रयोऽपि परिणामा धर्मिण एवेत्यऽभेदपक्षमाश्रित्य ज्ञाप्यत इत्यर्थः।

(३) अयं धर्मपरिणामः, अयं लक्षणपरिणाम इत्यादिभेदव्यवहार इत्यर्थः।

भा० भावान्यथात्वं भवति, न द्रव्यान्यथात्वम्। यथा सुवर्णभाजनस्य भित्त्वाऽन्यथाक्रियमाणस्य भावाऽन्यथात्वं भवति, न सुवर्णाऽन्यथात्वमिति। अपर आह—धर्माऽनभ्यधिको धर्मी[१] पूर्वतत्त्वाऽनतिक्रमात्। पूर्वाऽपरावस्थाभेदमनुपतितः कौटस्थ्येन विपरिवर्त्तेत यद्यन्वयी स्याद् इति। अयमदोषः। कस्माद्, एकान्ताऽनभ्युपगमात्। तदेतत् त्रैलोक्यं व्यक्तेरपैति। कस्माद्, नित्यत्वप्रतिषेधाद्। अपेतमप्यस्ति * विनाशप्रतिषेधात्। संसर्गाच्चा-

टी० ऽपि धर्मिणः परस्पराऽसङ्करात्। ननु धार्मिणो धर्माणामभिन्नत्वे धर्मिणोऽध्वनां च भेदे धर्मिणोऽनन्यत्वेन धर्मेणापीह धर्मिवद् भवितव्यमित्यत आह—"तत्र धर्मस्य" इति। भावः = संस्थानभेदः। सुवर्णादेर्यथाभाजनस्य रुचकस्वास्तिकव्यत्वदेशभेदो भवति— तन्मात्रमन्यथाभवति, न तु द्रव्यं सुवर्णमसुवर्णतामुपैति, अत्यन्तभेदाऽभावादिति वक्ष्यमाणोऽभिसन्धिः। एकान्तवादिनं[२] बौद्धमुत्थापयति-"अपर आह" इति। धर्मा एव हि रुचकादयस्तथोत्पन्नाः परमार्थसन्तो न पुनः सुवर्णं नाम किञ्चिदेकमनेकेष्वनुगतं द्रव्यमिति। यदि पुनर्निवर्त्तमानेष्वपि धर्मेषु द्रव्यमनुगतं भवेत्ततो न चितिशक्तिवत्परिणमेताऽपि तु कौटस्थ्येनैव विपरिवर्त्तेत,—परिणामात्मकरूपं परिहाय रूपान्तरेण कौटस्थ्येन परिवर्त्तनं परिवृत्तिः। यथा चितिशक्तिरन्यथाऽन्यथाभावं भजमानेष्वपि गुणेषु स्वरूपादप्रच्युता कूटस्थनित्यैवं सुवर्णाद्यपि स्याद्। नचेष्यते तस्मान्न द्रव्यमतिरिक्तं धर्मेभ्य इति। परिहरति "अयमदोष" इति। "कस्मादेकान्ताऽनभ्युपगमाद्"। यदि चितिशक्तिरिव द्रव्यस्यैकान्तिकीं नित्यतामभ्युपगच्छेम तत एवमुपालभ्येमहि। न त्वैकान्तिकीं नित्यतामातिष्ठामहे, किन्तु तदेतत् त्रैलोक्यं न तु द्रव्यमात्रं व्यक्तेः = अर्थक्रियाकारिणो रूपादपैति[३]। कस्माद्, "नित्य-

टि० (१) धर्मी = सुवर्णादिः, धर्मेभ्यः = कुण्डलादिभ्योऽतिरिक्तो न भवति। कुतः? पूर्वतत्त्वस्य = धर्मिस्वरूपस्याऽनतिक्रमात् = कुण्डलादिष्वनुगतत्वादित्यर्थः। तदेव स्पष्टयति "पूर्वापर" इति। यदि हि धर्म्यन्वयी स्यात्तर्ह्यतीताद्यवस्थास्वप्यनुगतत्वेन सदातनसत्त्वप्रसङ्गाच्चितिशक्तिवत्कौटस्थ्येनैव तिष्ठेद्, न परिणमेत। तच्चानिष्टं भवतामपीत्यर्थः। (२) एकान्तवादिनं = धर्मधर्मिणोरत्यन्ताऽभेदवादिनमित्यर्थः। (३) अपगच्छति, कूटस्थनित्यत्वाऽभावेन वर्त्तमानतामपहायाऽतीततां प्राप्नोतीति भावः। * अतीतमपि प्रकृत्यादिधर्मिरूपेणातीतरूपेण

भा०ऽस्य सौक्ष्म्यं, सौक्ष्म्याच्चाऽनुपलब्धिरिति। लक्षणपरिणामो[१] धर्मोऽध्वसु वर्त्तमानोऽतीतोऽतीतलक्षणयुक्तोऽनागतवर्त्तमानाभ्यां लक्षणाभ्यामवियुक्तः। तथाऽनागतोऽनागतलक्षणयुक्तो वर्त्तमानाऽतीताभ्यां लक्षणाभ्यामवियुक्तः। तथा वर्त्तमानो वर्त्तमानलक्षणयुक्तोऽतीताऽनागताभ्यां लक्षणाभ्यामवियुक्त इति। यथा पुरुष एकस्यां स्त्रियां रक्तो, न शेषासु विरक्तो भवती-

टी० त्वप्रतिषेधात्" प्रमाणेन ॐ। यदि हि घटो व्यक्तेर्नोऽपेयात् कपालशर्करांचूर्णादिष्ववस्थास्वपि व्यक्तो घट इति पूर्ववदुपलब्ध्यर्थक्रिये कुर्य्यात् तस्मादनित्यं त्रैलोक्यम्। अस्तु तर्ह्यनित्यमेवोपलब्ध्यर्थक्रियारहितत्वेन गगनाऽरविन्दवदतितुच्छत्वादित्यत आह "अपेतमप्यस्ति" इति। नाऽत्यन्ततुच्छता येनैकान्ततोऽनित्यं स्यादित्यर्थः। कस्माद्, "विनाशप्रतिषेधात्" प्रमाणेन। तथाहि, यत् तुच्छं न तत्कदाचिदप्युपलब्ध्यर्थक्रिये करोति, यथागगनारविन्दम्। करोति चैतत् त्रैलोक्यं कदाचिदप्युपलब्ध्यर्थक्रिये इति᳚। तथोत्पत्तिमद्द्रव्यत्वधर्मलक्षणावस्थायोगित्वादयोऽप्यत्यन्ततुच्छगगननलिननरविषाणादिव्यावृत्ताः सत्त्वहेतव उदाहार्य्याः। तथाच नाऽत्यन्तनित्यो येन चितिशक्तिवत्कूटस्थनित्यः स्यात्, किन्तु कथञ्चिन्नित्यः। तथा च परिणामीति सिद्धम्। एतेन मृत्पिण्डाद्यवस्थासु कार्य्याणां घटादीनामनागतानां सत्त्वं वेदितव्यम्। स्यादेतद्, अपेतमप्यस्ति चेत्कार्य्यं कस्मात्पूर्ववन्नोपलभ्यते इत्यत आह—"संसर्गाद्" इति। संसर्गात्= स्वकारणलयात्, सौक्ष्म्यं = दर्शनाऽनर्हं, ततश्चाऽनुपलब्धिरिति। तदेवं धर्मपरिणामं समर्थ्य लक्षणपरिणाममपि लक्षणानां परस्पराऽनुगमनेन समर्थयते—"लक्षणपरिणाम" इति। एकैकं लक्षणं लक्षणान्तराभ्यां समनुगतमित्यर्थः। नन्वेकलक्षणयोगे लक्षणान्तरे नाऽनुभूयेते, तत्कथं तद्योग इत्यत आह-"यथा पुरुष" इति। नह्यनुभवाऽभावः प्रमाणसिद्धमपलपति, तदुत्पाद एव तत्र तत्सद्भावे प्रमाणमसत उत्पादाऽसम्भवान्नरविषाणवदिति

टि० चास्त्येवाऽत्यन्तोच्छेदप्रतिषेधादित्यर्थः। (१) लक्षणं परिणामो यस्यैवम्भूतो यो धर्मो घटादिः सोऽपि अध्वसु = कालत्रयेषु वर्त्तमानत्वेन सन्नेव, न त्वसन्नित्यर्थः। तत्र हेतुमाह "अतीत" इति यतः सूक्ष्माभ्यामनागतवर्त्तमानाऽवस्थाभ्यामवियुक्त एवाऽतीताऽवस्थायुक्तो भवत्ययो धर्मः कालत्रयेऽप्यस्तीति भावः। * केन प्रतिषेधादित्याकाङ्क्षितं पूरयति 'प्रमाणे।'। ᳚ नाऽत्यन्ततुच्छमिति शेषः।

भा० ति । अत्र लक्षणपरिणामे सर्वस्य सर्वलक्षणाऽयोगादध्वसङ्करः प्राप्नोतीति परैर्दोषश्चोद्यत इति।तस्य परिहारः—धर्माणां धर्मत्वमप्रसाध्यं, सति च धर्मत्वे लक्षणभेदोऽपि वाच्यो[१] न वर्त्तमानसमय एवाऽस्य धर्मत्वम् ।एवं हि न चित्तं रागधर्मकं स्यात्। क्रोधकाले रागस्याऽसमुदाचारादिति।किञ्च,त्रयाणां लक्षणानां युगपदेकस्यां व्यक्तौ नास्ति सम्भवः।क्रमेण तु स्वव्यञ्जकाञ्जनस्य भावो भवेदिति।उक्तं च-"रूपाऽतिशया वृत्त्यतिशयाश्च परस्परेण विरुद्ध्यन्ते,सामान्यानि त्वतिशयैः सह प्रवर्त्तन्ते। तस्मादसङ्करः। यथा रागस्यैव क्वचित्समुदाचार इति न तदानीमन्यत्राऽभावः। किन्तु केवलं सामान्येन समन्वागत इत्यस्ति तदा तत्र तस्य भावः।

टी० परोक्तं दोषमुत्थापयति-"अत्रलक्षणपरिणाम"इति। यदाधर्मो वर्त्तमानस्तदैवयद्यतीतोऽनागतश्च तदा त्रयोऽप्यध्वानः सङ्कीर्य्येरन्,अनुक्रमेण चाऽध्वनां भावेऽसदुत्पादप्रसङ्ग इति भावः । परिहरति-"तस्य परिहार"इति । वर्त्तमानतैव हि धर्माणामनुभवसिद्धा ।ततः प्राक्पश्चात्कालसंबन्धमवगमयति, न*खल्वसदुत्पद्यते,न च सद्विनश्यति।तदिदमाह-"एवं हि न चित्तम्"इति। क्रोधोत्तरकालं हि चित्तं रागधर्मकमनुभूयते। यदा च रागः क्रोधसमयेऽनागतत्वेन नासीत्तत्कथमसावुत्पद्येताऽनुत्पन्नश्च कथमनुभूयेतेति । भवत्वेवं तथाऽऽपि कुतोऽध्वनामसङ्कर इति पृच्छति—"किञ्च" इति । किं कारणमसङ्करे? च=पुनरर्थे ।उत्तरमाह—"त्रयाणाम्" इति । त्रयाणां लक्षणानां युगपन्नास्ति सम्भवः। कास्मिन् एकस्यां=चित्तवृत्तौ क्रमेण तु लक्षणानामेकतमस्य स्वव्यञ्जकाञ्जनस्य भावो[२] भवेत्=सम्भवेत् । लक्ष्याधीननिरूपणतया लक्षणानां लक्ष्याऽऽकारेण तद्वृत्ता । अत्रैव पञ्चशिखाऽऽ-

टि० (१) धर्माणां तावद् धर्मत्वं प्राक् साधितत्वान्न साधनीयम्। सिद्धे च धर्मत्वे धर्माणां लक्षणभेदः = अवस्थाबहुत्वमपि वक्तव्यं, न पुनस्तार्किकवद् वर्त्तमानमात्रमेवैकं लक्षणमित्यर्थः ।तत्र हेतुमाह"नवर्त्तमान"इति । न हि वर्त्तमानसमयमात्रेऽस्य धर्मस्य धर्मत्वं किन्त्वतीतादिसमयेऽपीति भावः । विपक्षे बाधकमाह"एवं हीति ।एवं हि = वर्त्तमानकाल एव धर्मत्वे सति। चित्तं रागधर्मकं न स्यात् । क्रोधोदयकाले रागस्याऽसमुदाचाराद् = अनाविर्भावादित्यर्थः ।

(२) लक्षणानां मध्येऽन्यतमस्य लक्षणस्य भावः = अभिव्यक्तिर्भवेन्न सर्वस्य, कीदृशस्य अन्यतमलक्षणस्य 'स्वव्यञ्जकाञ्जनस्य' = स्वाऽभिव्यञ्जकं दण्डचक्रादि वस्त्वेवाऽञ्जनमाविर्भावकं यस्य तस्येत्यर्थः । * कथमवगमयतीत्यत आह—'न' इति ।

भा०तथा लक्षणस्येति । न[१]धर्मी त्र्यध्वा, धर्मास्तु त्र्यध्वानः। ते लक्षिता अलक्षिताश्च तांतामवस्थाम्प्राप्नुवन्तोऽन्यत्वेन प्रतिनिर्दिश्यन्ते अवस्थान्तरतो,न द्रव्यान्तरतः।यथैकारेखा शतस्थाने शतं दशस्थाने दशैकं चैकस्थाने। यथा चैकत्वेऽपि स्त्री माता चोच्यते दुहिता च स्वसा चेति। अवस्थापरिणामे कौटस्थ्यप्रसङ्गदोषःकैश्चि-

टी०चार्य्यसम्मतिमाह "उक्तञ्च" इति। एतच्च प्रागेव व्याख्यातम्। उपसंहरति "तस्माद्" इति।आविर्भावतिरोभावरूपविरुद्धधर्मसंसर्गादसङ्करोऽध्वनामिति।दृष्टान्तमाह-"यथा रागस्य" इति।पूर्वं क्रोधस्य रागसंबन्धाऽवगमो दर्शित इति,इदानीन्तुविषयान्तरवर्त्तिनो रागस्य विषयान्तरवर्त्तिना रागेण संबन्धावगम इति। दार्ष्टान्तिकमाह-"तथा लक्षणस्य" इति।ननु सत्यप्यनेकान्ताऽभ्युपगमे भेदोऽस्तीति धर्मलक्षणाऽवस्थाऽन्यत्वे तदभिन्नस्य धर्मिणोप्यन्यत्वप्रसङ्गः।स एव च नेष्यते।तदनुगमाऽनुभवविरोधादित्यत आह-"नधर्मी त्र्यध्वा" इति। यतस्ताद्भिन्ना*धर्मास्त्र्यध्वानः।धर्माणामध्वत्रययोगमेव स्फोरयति-"ते" इति।लक्षिताः=अभिव्यक्ता वर्त्तमाना इति यावत्।अलक्षिताः= अनभिव्यक्ता अनागता अतीता इति यावत्। तत्र लक्षितां तां तामवस्थां बलवत्त्वदुर्बलत्वादिकां प्राप्नुवन्तोऽनन्यत्वेन निर्दिश्यन्तेऽवस्थान्तरतो,न द्रव्यान्तरतः।अवस्था—शब्देन धर्मलक्षणाऽवस्था उच्यन्ते।एतदुक्तं भवति अनुभव एव हि धर्मिणो धर्मादीनां भेदाऽभेदौ व्यवस्थापयति। नह्यैकान्तिकेऽभेदे धर्मादीनां धर्मिणो धर्मिरूपवद् धर्मादित्वं,नाप्यैकान्तिके भेदे गवाऽश्ववद् धर्मादित्वम्। सचाऽनुभवोऽनैकान्तिकत्वमवस्थापयन्नपि धर्मादिषूपजनाऽपायधर्मकेष्वपि धर्मिणमेकमनुगमयन् धर्मांश्च परस्परतो व्यावर्त्तयन् प्रत्यात्ममनुभूयत इति, तदनुसारिणो[२] वयं न तमतिवर्त्त्य[३] स्वेच्छया

टि० (१) अयं च लक्षणपरिणामो न धर्मिणो येनाऽननुगतत्वप्रसङ्गः, किन्तु धर्मस्येत्याह 'न' इति। यतो धर्मा = घटादय एव त्र्यध्वानः = अतीतादिकालत्रयोगिनो, न धर्मी = मृदादिरतस्ते घटादयो धर्मा एव तां तां नवपुरातनाद्यवस्थां प्राप्नुवन्तोऽवस्थान्तरत एव भिन्नत्वेन निर्दिश्यन्ते, न धर्मिणः सकाशाद्। द्रव्यस्य धर्मिणः सर्वाऽवस्थास्वनुगतत्वादिति भावः।

(२) तदनुसारिणः = अनुभवाऽनुसरणशीला इत्यर्थः।(३)तमतिवर्त्त्य = अनुभवमतिक्रम्येत्यर्थः।

* अग्रिमग्रन्थाऽनुरोधेन, उपलभ्यमानमपि ( तदभिन्नम् ) इति पाठमुपेक्षिपि।

भा० दुक्तः, कथम्, अध्वनो व्यापारेण व्यवहितत्वाद् यदा धर्मः स्वव्यापारं न करोति तदाऽनागतो, यदा करोति तदा वर्त्तमानो, यदा कृत्वा निवृत्तस्तदाऽतीत, इत्येवं धर्मधर्मिणोर्लक्षणानामवस्थानां च कौटस्थ्यं प्राप्नोतीति परैर्दोष उच्यते । नाऽसौ दोषः। कस्माद्, गुणिनित्यत्वेऽपि गुणानां विमर्दवैचित्र्यात् ।

टी० धर्माऽनुभवान् व्यवस्थापयितुमीश्महे इति । अत्रैव लौकिकं दृष्टान्तमाह "यथैका रेखा" इति । यथा तदेव रेखास्वरूपं तत्तत्स्थानाऽपेक्षया शतादित्वेन व्यपदिश्यत एवं तदेव धर्मिस्वरूपं तत्तद्धर्मलक्षणाऽवस्थाभेदेनाऽन्यत्वेन प्रतिनिर्दिश्यत इत्यर्थः। दार्ष्टान्तिकार्थे दृष्टान्तान्तरमाह-"यथा चैकत्वेऽपि" इति । अत्राऽन्तरे परोक्तं दोषमुत्थापयति—"अवस्था" इति । अवस्थापरिणामे = धर्मलक्षणाऽवस्थापरिणामे, कौटस्थ्यदोषप्रसङ्ग उक्तो धर्मिधर्मलक्षणाऽवस्थानाम्।पृच्छति—"कथम्" इति । उत्तरमाह—"अध्वनो-व्यापारेण" इति। दध्नः किल योऽनागतोऽध्वा तस्य व्यापारः = क्षीरस्य वर्त्तमानत्वं, तेन व्यवहित्वाद् हेतोः, यदा धर्मः = दधिलक्षणः, स्वव्यापारं = दधिकाद्यारम्भं*क्षीरे सन्नपि न करोति तदाऽनागतः, यदा करोति तदा वर्त्तमानः, यदा कृत्वा निवृत्तः सन्नेव स्वव्यापाराद् दधिकाद्यारम्भात्तदाऽतीत, इत्येवं त्रैकाल्येऽपि सत्त्वाद् धर्मधर्मिणोर्लक्षणानामवस्थानां च कौटस्थ्यं प्राप्नोति। सर्वदा(१) सत्ता हि नित्यत्वं, चतुर्णामपि च सर्वदा सत्त्वेऽसत्त्वे वा नोत्पादः। तावन्मात्रं(२) च लक्षणं कूटस्थनित्यतायाः।न हि चितिशक्तेरपि कूटस्थनित्यायाः कश्चिदन्यो विशेष इति भावः। परिहरति-"नासौ दोषः" इति।नासौ दोषः।कस्माद् गुणिनित्यत्वेऽपि गुणानां विमर्दः = अन्योऽन्याऽभिभाव्याऽभिभावकत्वं, तस्य वैचित्र्यात् । एतदुक्तं भवति(३)—यद्यपि सर्वदा सत्त्वं चतुर्णामपि गुणिगुणानां,तथापि गुणविमर्दवैचित्र्येण तदात्मभूततद्विकाराऽऽविर्भावतिरोभावभेदेन, परिणामशालितया न कौटस्थ्यं, चितिशक्ते-

टि० (१) परोक्तं कौटस्थ्याऽऽपादनं स्पष्टयति—"सर्वदा" इति । 'नोत्पादः'=सर्वदा सत्त्वे चितिशक्तिवन्नोत्पादः सर्वदाऽसत्त्वे च नरविषाणवन्नोत्पाद इति भावः । असत्त्वे वा इति दृष्टान्तार्थम् । वाकार इवार्थे । (२) तावन्मात्रं=सर्वदा विद्यमानत्वम्, उत्पादरहितत्वं वा ।

(३) न सर्वदा विद्यमानत्वमेव कौटस्थ्यमपि त्वविकारितयैकान्तानित्यत्वम् । तच्च पुरुष एव नाऽन्यत्रेत्याशयेनाऽऽह "एतदुक्तं भवति" इति । * दधिसाध्यकार्य्यारम्भामेति यावद् ।

भा० यथा[१] संस्थानमादिमद् धर्ममात्रं शब्दादीनां विनाश्यविनाशिनां, एवं लिङ्गमादिमद् धर्ममात्रं सत्त्वादीनां गुणानां विनाश्यविनाशिनां, तस्मिन्* विकारसञ्ज्ञेति । तत्रेदमुदाहरणं—मृद्धर्मी पिण्डाऽऽकाराद् धर्माद् धर्मान्तरमुपसम्पद्यमानो धर्मतः परिणमते घटाऽऽकार इति । घटाऽकारोऽनागतं लक्षणं हित्वा वर्त्तमानलक्षणं प्रतिपद्यत इति लक्षणतः परिणमते। घटो नवपुराणतां प्रतिक्षणमनुभवन्नवस्थापरिणामं प्रतिपद्यत इति । धर्मिणोऽपि धर्मान्तरमवस्था धर्मस्याऽपि लक्षणान्तरमवस्थेत्येक एव[२] द्रव्यपरिणामो भेदेनोपदर्शित इति। एवं पदार्थान्तरेष्वपि योज्यमिति। एते[३] धर्मलक्षणाऽवस्थापरिणामा धर्मिस्वरूपमनतिक्रान्ता-

---

टी० स्तु न स्वात्मभूतविकाराऽऽविर्भावतिरोभाव इति कैटस्थ्यम्। यथाहुः—"नित्यं तमाहुर्विद्वांसो यत्स्वभावो न नश्यति" इति । विमर्दवैचित्र्यमेव विकारवैचित्र्ये हेतुं प्रकृतौ विकृतौ च दर्शयति—"यथा" इति । यथा संस्थानं = पृथिव्यादिपरिणामलक्षणम्, आदिमद् धर्ममात्रं विनाशि = तिरोभावि, शब्दादीनां = शब्दस्पर्शरूपरसगन्धतन्मात्राणां स्वकार्य्यमपेक्ष्याऽविनाशिनाम् = अतिरोभाविनाम्। प्रकृतौ दर्शयति "एवं लिङ्गम्" इति, "तस्मिन् विकारसञ्ज्ञा"—न त्वेवं विकारवती चितिशक्तिरिति भावः। तदेवं परीक्षकसिद्धां विकृतिं 'च' प्रकृतिं चोदाहृत्य विकृतावेव लोकसिद्धायां गुणविमर्दवैचित्र्यं धर्मलक्षणाऽवस्थापरिणामवैचित्र्यहेतुमुदाहरति--"तत्रेदमुदाहरणम्" इति। नचाऽयं नियमो लक्षणानामेवाऽवस्थापरिणामइतिसर्वेषामेव

---

टि० (१) यथा अविनाशिनां शब्दादीनां धर्ममात्रं पृथिव्यादिसंस्थानमादिमद् विनाशि च, एवं सत्त्वादीनां धर्ममात्रं महत्तत्त्वाख्यं लिङ्गमप्यादिमद् विनाशि चेत्यन्वयः ।

(२) इति = शब्दो हेत्वर्थे, यतो धर्मादीनां सर्वेषामेवाऽवस्थाशब्दवाच्यत्वमत एक एव = अवस्थारूप एव धर्मिपरिणामो वास्तवस्तथापि ब्राह्मणवशिष्ठन्यायेन त्रिविधभेदेनोपदर्शितइत्यर्थोऽवसेयः।

(३) एते सर्वे परिणामा धर्मिस्वरूपमनुगता इत्यत एक एव = धर्मरूपः परिणाम एव, सर्वान् विशेषान् = लक्षणादिपरिणामान्, अभिप्लवते = स्वस्मिन्नन्तर्भावयतीत्यर्थः। पूर्वं हि धर्मलक्षणाऽवस्थाभेदानामवस्थाशब्दवाच्यत्वादवस्थारूप एवैकः परिणामस्तान्त्रिकया परिभाषया त्रिधोच्यत इत्युक्तमत्र तु त्रयाणां भेदानां धर्मशब्दवाच्यत्वाद् धर्मरूप एवैकः परिणामः पारमार्थिक इत्युक्तमिति भेदः । * तस्मिन् = महत्तत्त्वादिरूपे धर्मे, विकारसंज्ञा = परिणामसञ्ज्ञा ।

भा० इत्येक एव परिणामः सर्वानमून् विशेषानभिप्लवते। अथ कोऽयं परिणामः।अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः॥ १३ ॥ तत्र[1]—

सू० शान्तोदिताऽव्यपदेश्यधर्मानुपाती[2] धर्मी ॥१४॥

भा० योग्यताऽवच्छिन्ना धर्मिणः शक्तिरेव धर्मः, स च[3] फलप्रसवभेदाऽनुमितसद्भाव एकस्याऽन्योऽन्यश्च परिदृष्टः।

---

टी० धर्मलक्षणावस्थाभेदानामवस्थाशब्दवाच्यत्वादेकएवाऽवस्थापरिणामः सर्वसाधारण इत्याह—"धर्मिणोऽपि" इति। व्यापकं परिणामलक्षणमाह—"अवस्थितस्य" इति।धर्मशब्द आश्रितत्वेन धर्मलक्षणाऽवस्थावाचकः॥१३॥

यस्यैष त्रिविधः परिणामस्तं धर्मिणं सूत्रेण लक्षयति—"तत्र शान्तोदिताऽव्यपदेश्य धर्मानुपाती धर्मी" ॥ १४ ॥ धर्मोऽस्याऽस्तीति धर्मी। नाऽविज्ञाते धर्मे स शक्यो ज्ञातुमिति धर्मं दर्शयति—"योग्यता" इति। धर्मिणो=द्रव्यस्य मृदादेः, शक्तिरेव = चूर्णपिण्डघटाद्युत्पत्तिशक्तिरेव धर्मः, तेषां तत्राऽव्यक्तत्वेन भाव इति यावत्। नन्वेवमव्यक्ततया सन्तस्ते ततः प्रादुर्भवन्तूदकाऽऽहरणादयस्तु तैः स्वकारणादनासादिताः कुतः प्राप्ता इत्यत उक्तं—"योग्यताऽवच्छिन्ना" इति।याऽसौ घटादीनामुत्पत्तिशक्तिः सोदकाहरणादियोग्यताऽवच्छिन्ना,तेनोदकाहरणादयोऽपि घटादिभिः स्वकारणादेव प्राप्ता इति नाऽऽकस्मिका इति भावः।अथवा, के धर्मिण इत्यत्रोत्तरं योग्यताऽवच्छिन्ना धर्मिण इति, को धर्म इत्यत्रोत्तरं शक्तिरेव धर्मः, तेषां योग्यतैव धर्म इत्यर्थः। अतस्तद्वान् धर्मीतिसिद्धं भवति। तत्सद्भावे प्रमाणमाह "स च फलप्रसवभेदाऽनुमित" इति। एकस्य = धर्मिणः, अन्यश्चाऽन्यश्च = चूर्णपिण्डघटादिरूप इत्यर्थः, कार्य्यभेददर्शनाच्च भिन्न इति यावत्, परिदृष्टः = उपलब्धः। तत्राऽनुभवाऽरोहिणो वर्त्तमानस्य मृत्पिण्डस्य शान्ता-

---

टि० (१) तत्र = तेषु परिणामिषुसप्तमी निर्धारणार्था।इदं सूत्राऽन्वयि, सूत्रान्तर्गतमित्येके।

(२) शान्ताः = अतीता, उदिताः = वर्त्तमाना, अव्यपदेश्याः = भविष्यन्तश्च, ये धर्मास्ताननुपतितुम् = अन्वेतुं शीलं यस्याऽसौ शान्तोदिताऽव्यपदेश्यधर्माऽनुपातीत्यर्थः।

(३) फलप्रसवे = कार्य्योत्पादे यो भेदः = मृद्येव घटस्तन्तुष्वेव पट इत्याकारको विशेषः, तेनाऽनुमितः सद्भावो = अव्यक्ताऽवस्थया कारणेऽवस्थानं यस्य स एवम्भूतो योग्यतारूपो धर्म एकस्य धर्मिणोऽनेकविधो दृष्ट इत्यर्थः।

भा० तत्र वर्त्तमानः स्वव्यापारमनुभवन् धर्मो धर्मान्तरेभ्यः शान्तेभ्यश्चाऽव्यपदेश्येभ्यश्च भिद्यते । यदा तु सामान्येन समन्वाऽऽगतो भवति तदा धर्मिस्वरूपमात्रत्वात्कोऽसौ केन भिद्येत।तत्र त्रयः खलु[1] धर्मिणो धर्माः—शान्ता उदिता अव्यपदेश्याश्चेति। तत्र शान्ता ये कृत्वा व्यापारानुपरताः, सव्यापारा उदिताः, ते चाऽनागतस्य लक्षणस्य समनन्तरा, वर्त्तमानस्याऽनन्तरा अतीताः, किमर्थमतीतस्याऽनन्तरा न भवन्ति वर्त्तमानाः, पूर्वपश्चिमताया अभावात् । यथाऽनागतवर्तमानयोः पूर्वपश्चिमता नैवमतीतस्य[2]।तस्मान्नाऽतीतस्याऽस्ति समनन्तरः।तदनागत एव समनन्तरो भवति वर्त्तमानस्येति ।

टी० ऽव्यपदश्याभ्यां मृच्चूर्णमृद्घटाभ्यां भेदमाह—"तत्र वर्तमान" इति।यदि न भिद्येत पिण्डवत् 'तर्हि' चूर्णघटयोरपि तद्वदेव स्वव्यापारव्याप्तिप्रसङ्ग इति भावः।अव्यक्तस्य तु पिण्डस्य नोक्तं भेद—साधनं सम्भवतीत्याह—"यदा तु" इति।कोऽसौ केन = भेदसाधनेन भिद्येत इति ।तदेवं धर्माणां भेदसाधनमभिधाय तं भेदं विभजते--"तत्र यः खलु"इति।उदिता इति = वर्तमाना इत्यर्थः। अध्वनां पौर्वापर्य्यं निगमयति "ते च"इति ।चोदयति = "किमर्थम्" इति । किं निमित्तमतीतस्याऽनन्तरा न भवन्ति वर्तमाना इत्यर्थः । हेतुमाह--"पूर्वपश्चिमताया अभावात्" इति । विषयेण विषयिणीमनुपलब्धिं[3]सूचयति । अनुपलम्भमेवोपलम्भवैधर्म्येण दर्शयति-"यथाऽनागतवर्त्तमानयोः"इति। उपसंहरति--"तद्" इति।तत् = तस्माद् ,अनागत एव समनन्तरःपूर्वत्वेन भवति वर्तमानस्य नाऽतीतः, अतीतस्य वर्त्तमानः पूर्वत्वेन समनन्तरो नाऽव्यपदेश्यः ।

तस्मादध्वनां ❀ यविष्ठोऽतीत इति सिद्धम् । स्यादेतद् । †अनुभूयमानाऽनु-

टि० (१) तत्र ये खल्विति पाठान्तरं तु न स्वान्तं रञ्जयतीव ।

(२) नैवमतीतस्य वर्त्तमानेन सह पूर्वपश्चिमभावः उपलभ्यत इत्यर्थः ।

(३) यद्यतीतोऽपि घटः पुनर्वर्त्तमानः स्यात्तदा स एवाऽयं घट इति कदाचित्प्रत्यभिज्ञायमान उपलभ्येत । नोपलभ्यते चाऽसौ योग्याऽनुपलब्ध्याऽतीतव्यक्तेरनुन्मज्जनमेव निश्चीयत इति भावः । * अतिशयेन युवा । † अनुभूयमानावनुभूतनयेति पाठान्तरमपि न दुर्योजम् ।

भा० अथाऽव्यपदेश्याः के ? सर्वं[1] सर्वात्मकमिति । यत्रोक्तं[2] "जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टं, तथा स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेषु" इति। एवं जात्यनुच्छेदेन सर्वं सर्वात्मकमिति। देशकालाकारनिमित्ताऽपबन्धान्न खलु

---

टी० भूततया उदिताऽतीतौ शक्यावुन्नेतुमव्यपदेश्यास्तु पुनर्धर्मा अव्यपदेश्यतयैव शक्या नोन्नेतुमित्याशयवान् पृच्छति—"अथ" इति । अव्यपदेश्याः के केषु समीक्ष्यामहे*। अत्रोत्तरमाह "सर्वं सर्वात्मकम् इति यत्रोक्तम्।" इति।तदेवोपपादयति—"जलभूम्योः" इति।जलस्य हि रसरूपस्पर्शशब्दवतः, भूमेश्च गन्धरसरूपस्पर्शशब्दवत्याः पारिणामिकं[3] वनस्पतिलतागुल्मादिषु मूलफलप्रसवपल्लवादिगतरसादिवैश्वरूप्यं दृष्टम्।सोऽयमनेवमात्मिकाया भूमेरनीदृशस्य वा जलस्य न परिणामोभवितुमर्हति।उत्पादितं हि नाऽसदुत्पद्यतइति।तथा स्थावराणां पारिणामिकं जङ्गमेषु=मनुष्यपशुमृगादिषु रसादिवैचित्र्यं दृष्टम्।उपभुञ्जानाहिते[4]फलादीनि रूपादिभेदसम्पदमासादयन्ति, एवं जङ्गमानां पारिणामिकं स्थावरेषु दृष्टम्। रुधिराऽवसेकात्किल दाडिमीफलानि तालफलमात्राणि भवन्ति। उपसंहरति "एवम्" इति । एवं सर्वं जलभूम्यादिकंसर्वरसाद्यात्मकम्। तत्र हेतुमाह"जात्यनुच्छेदेन"इति। जलत्वभूमित्वादिजातेः सर्वत्र प्रत्यभिज्ञायमानत्वेनाऽनुच्छेदात्। ननु सर्वं चेत् सर्वात्मकं हंत भोः सर्वस्य सर्वदा सर्वत्रसर्वथा सन्निधानात्समानकालीना भावानां व्यक्तिः प्रसज्ज्येत। न खलु सन्निहिताविकलकारणं कार्य्यं विलम्बितुमर्हतत्यित आह—"देशकाल" इति । यद्यपि कारणं सर्वं

---

टि० (१) सर्वं वस्तु सर्वात्मकं=सर्वशक्तिमदित्यर्थः। एवं च निखिलपरिणामिनि वस्तुनि अवस्थिताः सूक्ष्मरूपेण याः सर्वविकारजननशक्तयस्ता एवाऽव्यपदेश्या इत्युच्यन्ते इति समाधानाऽर्थो बोध्यः। (२) यत्र=सर्वं सर्वशक्तिमदित्यर्थे. पूर्वाचार्य्यैरिदं वक्ष्यमाणं प्रमाणमुक्तमित्यर्थः ।(३) स्थावरेषु=इत्यस्यार्थमाह—"वनस्पति" इत्यादिना वनस्पतिलतादिषु यत् फलपुष्पादिगतरसगन्धादिवैचित्र्यं दृष्टं तद् रसादिगुणवतो जलस्य गन्धादिगुणवत्याश्च भूमेः पारिणामिकं=परिणामनिमित्तकमित्यन्वयः । जलभूम्योर्विद्यमाना या रसादिविकारजननशक्तिः साऽव्यपदेश्येत्युच्यते इति भावः। (४) ते मानुषादयः फलादीन्युपभुञ्जाना इति संबन्धः।

* केषु वस्तुषु, के भविष्यन्तो धर्मा इति समीक्षार्थं पृच्छामः ।

भा० समानकालमात्मनामभिव्यक्तिरिति। य एतेष्वभिव्यक्ताऽनभिव्यक्तेषु धर्मेष्वनुपाती सामान्यविशेषात्मा सोऽन्वयी धर्मी। यस्य तु धर्ममात्रमेवेदं [१]निरन्वयं तस्य भोगाऽभावः। कस्माद्, अन्येन विज्ञानेन कृतस्य कर्मणोऽन्यत्कथं भोक्तृत्वेनाऽधिक्रियेत। तत्स्मृत्यभावश्च। नाऽन्यदृष्टस्य स्मरणमन्यस्याऽस्तीति, वस्तुप्रत्यभिज्ञानाच्चस्थितोऽन्वयी धर्मी यो धर्माऽन्यथात्वमभ्युपगतः प्रत्यभिज्ञायते। तस्मान्नेदं धर्ममात्रं निरन्वयम् इति॥ १४॥

टी० सर्वात्मकं तथाऽपि यो यस्य कार्य्यस्य देशः[२]यथा कुङ्कुमस्य काश्मीरः तेषां* सत्त्वेऽपि पाञ्चालादिषु न समुदाचार इति †न कुङ्कुमस्य पाञ्चालादिष्वभिव्यक्तिः। एवं निदाघे न प्रावृषः समुदाचार[३]इति न तदा शालीनाम्[४]। एवं न मृगी मनुष्यं प्रसूते। न तस्यां मनुष्याकारसमुदाचार इति। एवं नाऽपुण्यवान् सुखरूपं भुङ्क्ते, न तास्मिन् पुण्यनिमित्तस्य समुदाचारइति। तस्माद् देशकालाऽऽकारनिमित्तानाम् अपबन्धाद्=अपगमान्न समानकालम्, आत्मनां=भावानाम् अभिव्यक्तिरिति। तदेवं धर्मान् विभज्य तेषु धर्मिणोऽनुगमं दर्शयति—"य एतेषु" इति। सामान्यं=धर्मिरूपं, विशेषः=धर्मः, तदात्मा=उभयात्मक इत्यर्थः। तदेवमनुभवसिद्धमनुगतं धर्मिणं दर्शयित्वा तमनिच्छतो वैनाशिकस्य क्षणिकं विज्ञानमात्रं चित्तमिच्छतोऽनिष्टप्रसङ्गमुक्तं[५] स्मारयति। "यस्य तु" इति। "वस्तुप्रत्यभिज्ञानाच्च" इति। न हि देवदत्तेन दृष्टं यज्ञदत्तः प्रत्यभिजानाति। तस्माद् यश्चाऽनुभविता स एव प्रत्यभिज्ञातेति॥ १४॥

टि० (१) धर्ममात्रम् इत्यस्य विवरणं 'निरन्वयम्' इति। यस्य=योगाचारस्य मते निर्धर्मिकं विज्ञानमात्रं क्षणिकं च चित्तं तस्य मते कर्तृभोक्तृत्वयोर्वैय्यधिकरण्येन कृतनाशाकृताऽभ्यागमनप्रसङ्ग इत्यर्थः। (२) यो यस्य देशस्तत्र तस्याऽभिव्यक्तिरिति शेषयित्वा व्याख्येयम्। उदाहरति "यथा" इत्यादिना। (३) समुदाचारः=विद्यमानता आविर्भाव इति यावत्। (४) शालीनामित्यस्याऽग्रे अभिव्यक्तिरित्यध्याहरणीयम्। (५) उक्तम्="तत्प्रतिषेधार्थमेकतत्त्वाऽभ्यासः" इति सूत्रे भाष्ये उक्तमित्यर्थः।

* पाञ्चालादिषु तेषां सत्त्वेऽपि नाऽऽविर्भाव इत्यर्थः। † अतः।

सू० क्रमाऽन्यत्वं परिणामाऽन्यत्वे हेतुः ॥ १५ ॥

भा० एकस्य धर्मिण एक एव परिणाम इति प्रसक्ते[१] क्रमान्यत्वं परिणामाऽन्यत्वे हेतुर्भवतीति। तद् यथा चूर्णमृत, पिण्डमृद्, घटमृत्, [२]कपालमृत्, कणमृद्, इति च क्रमः। यो यस्य धर्मस्य समनन्तरो धर्मः स तस्य क्रमः। पिण्डः प्रच्यवते, घट उपजायते इति धर्मपरिणामक्रमः। लक्षणपरिणामक्रमो=घटस्याऽनागतभावाद्वर्त्तमानभावक्रमः। तथा पिण्डस्य वर्त्तमानभावादतीतभावक्रमः। नाऽतीतस्याऽस्ति क्रमः। कस्मात्, पूर्वपरतायां सत्यां समनन्तरत्वं सा तु नास्त्यतीतस्य, तस्माद् द्वयोरेव

---

टी० "क्रमाऽन्यत्वं परिणामाऽन्यत्वे हेतुः" ॥१५॥ किमेकस्य धर्मिण एक एव धर्मलक्षणाऽवस्थालक्षणः परिणामः? उत बहवो धर्मलक्षणाऽवस्थालक्षणाः परिणामाः। तत्र किं प्राप्तम्—एकत्वाद् धर्मिण एक एव परिणामः। न हि एकरूपात्कारणात्कार्य्यभेदो भवितुमर्हति। तस्याऽऽकस्मिकत्वप्रसङ्गाद् इति। एवं प्राप्ते उच्यते, "क्रमाऽन्यत्वात्परिणामाऽन्यत्वम्" एकस्या मृदश्चूर्णपिण्डघटकपालकणाऽऽकारपरिणतिपरम्परा क्रमवती लौकिकपरीक्षकै[३]रध्यक्षं समीक्ष्यते। अन्यच्चेदं चूर्णपिण्डयोरानन्तर्य्यम्, अन्यच्च पिण्डघटयोः, अन्यच्च घटकपालयोः। अन्यच्च कपालकणयोः। एकत्र[४] परस्याऽन्यत्र पूर्वत्वात्, सोऽयं क्रमभेदः परिणाम एकस्मिन्ननवकल्पमानः[५] परिणामभेदमापादयति। एकोऽपि च मृद् धर्मी क्रमोपनिपतिततत्तत्सहकारिसमवधानक्रमेण क्रमवतीं परिणामपरम्परामुद्वहन् नैनामाकस्मिकयतीति भावः। धर्मपरिणामाऽन्यत्ववल्लक्षणपरिणामाऽन्यत्वेऽवस्थापरिणामाऽन्यत्वे च समानं क्रमाऽन्यत्वं हेतुरिति। तदेतद्भाष्येणाऽवद्योत्यते "एकस्य धर्मिण" इति। क्रमक्रमवतोर-

---

टि० (१) इतिप्रसक्ते=इत्येवं पूर्वपक्षे प्राप्ते सति, क्रमभेद एव परिणामभेदे हेतुर्भवतीति सिद्धान्त्यत इत्यर्थः। प्रसक्तेरिति पाठे तु इति प्रसङ्गं परिहर्त्तुमित्यत्र ल्यब्लोपे पञ्चमी बोध्या।

(२) घटोत्पत्तौ मृद्धर्मिणः क्रमं प्रतिपाद्य घटलयेऽपि मृदः क्रममाह "कपालमृत्कणमृद्" इति। सर्वत्र मृच्छब्दो मृद्धर्मिणः सर्वत्राऽनुगतत्वप्रदर्शनार्थः। (३) अप्राप्तशास्त्रजन्यधीप्रकर्षा लौकिकाः, प्राप्तशास्त्रजन्यधीप्रकर्षाः परीक्षकास्तैरित्यर्थः। (४) एकत्र परस्य=चूर्णाऽपेक्षया परस्य पिण्डरूपधर्मस्य घटाऽपेक्षया पूर्वत्वादित्यर्थः। एतेनापेक्षिको धर्मधर्मिभाव इत्यपि ध्वनितम्।

(५) एकस्मिन् परिणामेऽभ्युपगम्यमानेऽनुपपद्यमान इत्यर्थः।

भा० लक्षणयोः क्रमः। तथाऽवस्था[१] परिणामक्रमोऽपि* = घटस्याऽभिनवस्य प्रान्ते पुराणता दृश्यते सा च क्षणपरम्पराऽनुपातिना क्रमेणाऽभिव्यज्यमाना परां व्यक्तिमापद्यत इति धर्मलक्षणाभ्यां च विशिष्टोऽयं[२] तृतीयः परिणाम इति। त एते क्रमाः, धर्मधर्मिभेदे सति प्रतिलब्धस्वरूपा, धर्मोऽपि धर्मी भवत्यन्यधर्मस्वरूपापेक्षयेति। यदा तु परमार्थतो धर्मिण्यभेदोपचारस्तद्द्वारेण स एवाऽभिधीयते धर्मस्तदाऽयमेकत्वेनैव क्रमः प्रत्यवभासते।

चित्तस्य द्वये धर्माः—परिदृष्टाश्चाऽपरिदृष्टाश्च।

तत्र प्रत्ययात्मकाः परिदृष्टा, वस्तुमात्राऽत्मका अपरिदृष्टाः।

टी० भेदमास्थाय स तस्य क्रम इत्युक्तं "तथाऽवस्थापरिणामक्रम" इति।—तथा हि कीनाशेन[३] कोष्ठाऽगारे प्रयत्नसंरक्षिता अपि हि व्रीहयो हायनैरतिबहुभिः पाणिस्पर्शमात्रविशीर्य्यमाणाऽवयवसंस्थानाः परमाणुभावमनुभवन्तो दृश्यन्ते। न चायं† मभिनवानामकस्मादेव प्रादुर्भवितुमर्हति। तस्मात् क्षणपरम्पराक्रमेण सूक्ष्मतमसूक्ष्मतरसूक्ष्मबृहद्बृहत्तरबृहत्तमादिक्रमेण प्राप्तेषु विशिष्टोऽयं लक्ष्यत इति। तदिदं क्रमाऽन्यत्वं धर्मधर्मिभेदमपेक्षत एवेत्याह "तएत" इति। आ विकारेभ्य आ च लिङ्गाद् आपेक्षिको धर्मधर्मिभावो, मृदादेरपि तन्मात्राऽपेक्षया[४] धर्मत्वादित्याह "धर्मोऽपि" इति। यदा परमार्थधर्मिण्यलिङ्गेऽभेदोपचारप्रयोगः, तद्द्वारेण = सामानाधिकरण्यद्वारेण धर्म्येव धर्म इति यावत्, तदैक एव परिणामो धर्मिपरिणाम एवेत्यर्थः। धर्मलक्षणाऽवस्थानां धर्मिस्वरूपाऽभिनिवेशात्। तदनेन धर्मिणो दूरोत्सारितं कूटस्थनित्यत्वमित्युक्तप्रायम्। धर्मपरिणामं प्रतिपादयन् प्रसङ्गेन चित्तधर्माणां प्रकारभेदमाह "चित्तस्य" इति। परिदृष्टाः = प्रत्यक्षाः, अपरिदृष्टा = अपरोक्षाः। तत्र प्रत्ययात्मकाः प्रमाणादयो रागादयश्च, वस्तुमात्रा इत्यप्रकाशरूपतामाह।

टि० (१) यद्यप्यवस्थापरिणामक्रमो धर्मपरिणामवन्नाऽध्यक्षं समीक्ष्यते, तथाप्यनुमानेन तं साधयति "तथा" इति। * अपीत्यतोऽग्रे उच्यत इति शेषः। (२) विशिष्टः = धर्मलक्षणपरिणामयोः प्रतिक्षणमनुत्पादादवस्थापरिणामस्य च प्रतिक्षणमुत्पादाद् धर्मलक्षणाभ्यामतिशयित इत्यर्थः।

(३) कीनाशेन = कृषीवलेनेत्यर्थः। † अयम् = प्रशिथिलाऽवयवसंस्थानत्वेन परमाणुभावः।

(४) गन्धतन्मात्रादिसूक्ष्मभूताऽपेक्षयेत्यर्थः।

भा० ते च सन्त्येव भवन्ति अनुमानेन प्रापितवस्तुमात्रसद्भावाः। "निरोधधर्मसंस्काराः परिणामोऽथ जीवनम् । चेष्टा शक्तिश्च चित्तस्य धर्मा दर्शनवर्जिता" इति ॥ १५ ॥

अतो[1] योगिन उपात्तसर्वसाधनस्य बुभुत्सितार्थप्रतिपत्तये संयमस्य विषय उपक्षिप्यते—

टी० स्यादेतद्, अपरिदृष्टाश्चेन्न सन्त्येवेत्यत आह—"अनुमानेन" इति । अनुमानेन प्रापितो वस्तुमात्रेण सद्भावो येषां ते तथोक्ताः । पश्चान्मान-साधर्म्यादागमोऽप्यनुमानं,[2]सप्ताऽपरिदृष्टान् कारिकया संगृह्णाति—"नि-रोध"इति।निरोधो[3] वृत्तीनाम् = असम्प्रज्ञाताऽवस्था चित्तस्याऽऽगमतः, संस्कारशेषभावोऽनुमानतश्च * समधिगम्यते । धर्मग्रहणेन पुण्याऽपुण्ये उपलक्षयति। क्वचित्कर्मेतिपाठस्तत्राऽपि तज्जनिते पुण्याऽपुण्ये एव गृह्येते, ते चाऽऽगमतः, सुखदुःखोपभोगदर्शनाद्वाऽनुमानतो गम्येते । संस्कारस्तु स्मृतेरनुमीयते । एवं त्रिगुणत्वाच्चित्तस्य चलं च गुणवृत्तमिति प्रतिक्ष-णपरिणामोऽनुमीयते। एवं जीवनं = प्राणधारणप्रयत्नभेदोऽसंविदितश्चि-त्तस्य धर्मः श्वासप्रश्वासाभ्यामनुमीयते । एवं चेतसश्चेष्टा = क्रिया यथा यथा तैस्तैरिन्द्रियैः शरीरप्रदेशैर्वा सम्प्रयुज्यते साऽपि तत्संयोगादेवाऽनु-मीयते । एवं शक्तिरप्युद्भूतानां कार्य्याणां सूक्ष्माऽवस्था चेतसो धर्मः स्थू-लकार्य्याऽनुभवादेवाऽनुमीयत इति ॥ १५ ॥

अतः परमाऽऽपादपरिसमाप्तेः संयमविषयस्तद्वशीकारसूचनी विभूतिश्च वक्तव्या, तत्रोक्तप्रकारं परिणामत्रयमेव तावत्प्रथममुपात्तसकलयोगाङ्गस्य

टि० (१) अतः परं बुभुत्सितार्थप्रतिपत्तये=योगिजिज्ञासितार्थसाक्षात्काराय, धारणादिनिष्ठस्य योगिनः संयमस्य विषयविशेष उपक्षिप्यते=विविच्य प्रदर्श्यते इत्यर्थः ।

(२) निरोधधर्मयोरागमगम्यत्वात्कथमनुमानमात्रप्रापितसद्भावत्वमित्याशङ्क्याह "पश्चा-त्साधर्म्य" इति । एतेन प्रत्यक्षादनु = पश्चान्मानमित्यनुमानमितिव्युत्पत्त्याऽऽगमपदमनुमानवाच-कमपीत्युक्तम्। (३) कस्य निरोध इत्याकाङ्क्षां पूरयति-'वृत्तीनाम्' इति तस्यार्थमाह—"सम्प्रज्ञा-तेति" चित्तस्य संप्रज्ञातावस्था, आगमतः = योगशास्त्रात् समधिगम्यत इत्यर्थः ।

* एतच्च प्रथमे पादे ५१. इतिसूत्रे स्पष्टम् ।

सू० परिणामत्रयसंयमादतीताऽनागतज्ञानम् ॥१६॥

भा० धर्मलक्षणाऽवस्थापरिणामेषु संयमाद् योगिनां भवत्यतीताऽनागतज्ञानम्। धारणाध्यानसमाधित्रयमेकत्र संयम उक्तः, तेन* परिणामत्रयं साक्षात्क्रियमाणमतीताऽनाऽगतज्ञानं तेषु सम्पादयति ॥ १६ ॥

सू० शब्दार्थप्रत्ययानामितरेतराऽध्यासात्सङ्करस्तत्प्रविभागसंयमात्सर्वभूतरुतज्ञानम् ॥ १७ ॥

भा० तत्रवाग् वर्णेष्वेवाऽर्थवती, श्रोत्रं च ध्वनिपरिणाममात्रविषयम्

---

टी० योगिनः संयमविषयतयोपक्षिपति-सू० "परिणामत्रयसंयमादतीताऽनागतज्ञानम् ॥१६॥ ननु यत्र संयमस्तत्रैव साक्षात्करणं तत्कथं परिणामत्रयसंयमोऽतीताऽनागते साक्षात्कारयेदित्यत आह—"तेन" इति। तेन परिणामत्रयं साक्षात्क्रियमाणं तेषु परिणामेष्वनुगते येऽतीताऽनागते तद्विषयं ज्ञानं सम्पादयति। परिणामत्रयसाक्षात्करणमेव तदन्तर्भूताऽतीतानागतसाक्षात्करणात्मकमिति न विषयभेदः संयमसाक्षात्कारयोरित्यर्थः॥ १६॥अयमपरः संयमस्य विषय उपक्षिप्यते, सू० "श-नम्"। अत्र वाचकं शब्दमाचिख्यासुः प्रथमं तावद् वाग्व्यापारविषयमाह—"तत्र" इति। वाग् = वागिन्द्रियं वर्णव्यञ्जकमष्टस्थानम्। यथाह "अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च" इति।सा वाग् वर्णेष्वेव यथा लोकप्रतीतिसिद्धेष्वर्थवती, न च वाचक इत्यर्थः। श्रोत्रव्यापारविषयं निरूपयति-"श्रोत्रम्" इति। श्रोत्रं पुनर्ध्वनेरुदानस्य(१) वागिन्द्रियाऽभिघातिनो यः परिणतिभेदो वर्णात्मा तेनाऽऽकारेण† परिणतं तन्मात्रविषयं, न तु वाचक-

---

टि० (१) ध्वनेरित्यस्यार्थमाह "उदानस्य" इति। हृदयदेशादागत्य वागिन्द्रियाऽभिहतस्योदानाख्यवायोर्यो वर्णाकारः परिणामविशेषस्तन्मात्रविषयं श्रोत्रं, न तु ध्वन्यपरिणामभूतवाचकपदविषयमित्यर्थः।

* संयमेन। † वर्णाऽऽकारेण।

भा॰ पदं पुनर्नादाऽनुसंहारबुद्धिनिर्ग्राह्यम् इति। वर्णा[१] एकसमया-

---

टी॰ विषयमित्यर्थः। यथालोकप्रतीतिसिद्धेभ्यो वर्णेभ्यो वाचकं भिनत्ति-"पदम्" इति। पदं पुनर्वाचकं नादाऽनुसंहारबुद्धिनिर्ग्राह्यं—यथा प्रतीतिसिद्धान् नादान्—वर्णान् प्रत्येकं गृहीत्वाऽनु=पश्चाद्, या संहरति=एकत्वमापादयति गौरित्येतदेकं पदमिति, तया पदं गृह्यते[२]। यद्यपि प्राच्योऽपि बुद्धयो वर्णाका-

---

टि॰ (१) वर्णाः प्रत्येकमपदस्वरूपा उच्यन्ते प्रामाणिकैरिति सम्बन्धः। अस्तु मिलितानां वाचकत्वमित्याशङ्क्य किं वास्तवः समूह आश्रीयते, किं वा काल्पनिकः?। न तावदाद्य इत्याह "एकसमयाऽसम्भवित्वाद्" इति। उच्चरितप्रध्वस्तानां वर्णानामेकसमयस्थित्यनर्हत्वात् परस्परनिरनुग्रहात्मानः=असंबद्धस्वभावा वर्णाः। अतो न वास्तवः समूह एषां संभवतीत्यर्थः। कथमुच्चरितप्रध्वंसिनो वर्णा इत्यत आह—"ते" इति। यतो वर्णाः पदत्वमप्राप्याऽत एवार्थमनुपस्थाप्य क्षणेनैवाऽविर्भूय तिरोभूता उपलभ्यन्तेऽत उच्चरितप्रध्वंसिन इत्यर्थः। ये हि पदार्था एकस्मिन् देशे सहाऽवस्थिततयाऽनुभूयन्ते तेषु हि बहुषु समूहव्यपदेशः। यथैकस्मिन् देशे सहाऽवस्थिततयाऽनुभूयमानेषु धवखादिरपलाशेषु समूहव्यपदेशः। न च वर्णाः सहाऽवस्थिततयाऽनुभूयन्त इति न तेषां समूह इति भावः। नाऽपि काल्पनिकः समूहः सम्भवति। परस्पराश्रयप्रसङ्गाद् एकार्थप्रत्यायकत्वसिद्धौ तदुपाधिना वर्णेषु पदत्वप्रतीतिः, तत्सिद्धौ चैकार्थप्रत्यायकत्वसिद्धिरिति। ननु त्वयाऽप्यभिव्यक्त एव स्फोटोऽर्थप्रत्यायक इत्यभ्युपेयोऽन्यथा तस्य नित्यत्वेन सर्वदाऽर्थोत्पादप्रसङ्गः स्याद्, निरपेक्षस्य हेतोः सदातनत्वाद्। एवञ्च किं प्रत्येकं वर्णा व्यञ्जयन्ति स्फोटं, किं वा सम्भूयेति तवाऽपि पक्षे चोद्यं प्रसरति। यथाहुःकुमारिलभट्टाः "यस्याऽनवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः। सोऽपि पर्य्यनुयोगेन नैकेनाऽपि विमुच्यते" इति चेद्, अत्राहुः। यथा हि रत्नतत्त्वज्ञानं प्रथमप्रतीतौ स्फुटं न चकास्ति, अपि तु द्वित्रिचतुःपञ्चादिदर्शनजनितसंस्कारपरिपाकसचिवे चरमे चेतसि यथावदभिव्यज्यते, एवं ध्वनयोऽपि प्रत्येकं व्यञ्जयन्तोऽपि न द्रागित्येव स्फुटतरं स्फोटात्मानमवभासयन्ति, अपि तु पूर्वपूर्वाऽभिव्यक्तिजनितसंस्कारसचिवोऽन्त्यो ध्वनिः स्फुटतमं स्फोटमवभासयतीत्यन्यत्र विस्तरः।

(२) गौरित्येतदेकं पदमित्येवमेकत्वमापादयति या बुद्धिस्तया बुद्ध्या यद्वर्णातिरिक्तं पदं गृह्यते तद्वाचकमित्यर्थः। एतेनैतदुक्तं भवति—वर्णव्यतिरिक्त एकप्रयत्नजन्यो नादाऽभिव्यङ्ग्योऽन्तःकरणग्राह्यो ध्वनिविशेषः शब्द एव वाचकः। स च स्फुटत्यर्थोऽस्मादिति व्युत्पत्त्या स्फुटयते=अभिव्यज्यते वर्णैरिति व्युत्पत्त्या वा स्फोट इत्युच्यते शाब्दिकैरिति। न च वर्णा एवाऽनुभूयन्ते, न तु तदतिरिच्यमानशरीरः स्फोट इति साम्प्रतम्। गौरित्येकं

भा०ऽसम्भवित्वात्परस्परनिरनुग्रहात्मानस्ते पदमसंस्पृश्याऽनुपस्थाप्याऽऽविर्भूतास्तिरोभूताश्चेति प्रत्येकमपदस्वरूपा उच्यन्ते। वर्णः*पुनरेकैकः पदात्मा सर्वाभिधानशक्तिप्रचितः सहकारिवर्णा-

टी०रं पदमेव प्रत्येकं गोचरयन्ति तथाऽपि न विशदं प्रथते। चरमे तु विज्ञाने तदतिविशदमिति नादाऽनुसंहारबुद्धिनिर्ग्राह्यमुक्तम्। यस्तु[१]वै जात्यादेकपदाऽनुभवमविज्ञाय वर्णानेव वाचकानाऽऽतिष्ठते तं प्रत्याह-"वर्णा" इति । ते खल्वमी वर्णाः प्रत्येकं वाच्यविषयां धियमादधीरन् नागदन्तका इव शिक्याऽवलम्बनं, संहता वा ग्रावाण इव पिठरधारणम्। न तावत्प्रथमः कल्पः। एकस्मादर्थप्रतीतेरनुत्पत्तेः, उत्पत्तौ वा द्वितीयादीनामनुच्चारणप्रसङ्गः। निष्पादितक्रिये कर्मणि विशेषाऽनाधायिनः साधनस्य साधनन्यायाऽतिपातात् तस्माद् द्वितीयः परिशिष्यते। सम्भवति हि ग्राव्णां संहतानां पिठरधारणमेकसमयभावित्वाद्। वर्णानां तु यौगपद्याऽसम्भवोऽतः परस्परमनुग्राह्याऽनुग्राहकत्वाऽयोगात्संभूयाऽपि नार्थधियमादधते। ते पदरूपमेकमसंस्पृशन्तस्तादात्म्येनाऽत एवाऽनुपस्थापयन्त आविर्भूतास्तिरोभूता अयःशलाकाकल्पाः प्रत्येकमपदस्वरूपा उच्यन्ते। यदि पुनः पदमेकं तादात्म्येन संस्पृशेयुर्वर्णास्ततो नोक्तदोषप्रसङ्ग इत्याह-"वर्णः पुनरेकैकः पदात्मा" इति । सर्वाऽभिधानशक्तिप्रचितः=सर्वाभिरभिधानशक्तिभिर्निश्चितो, गौः, गणः, गौरं, नग,

* वर्ण—इत्यादि, द्योतयन्तीत्यन्तमेकं वाक्यमिति बोध्यम् ।

टि० पदं गामानय शुक्लामित्येकं वाक्यमित्येवं नानावर्णपदातिरिक्तैकपदवाक्यावगतेः सर्वजनीनत्वाद् । न चेयमेकत्वबुद्धिरभिन्नवस्तुनिर्भासा परस्परव्यतिरिच्यमानात्मनो वर्णानेव गोचरयितुमर्हति। एकत्वनानात्वयोरेकत्राऽसमवायाद् । नाऽप्ययमौपाधिक एकत्वप्रत्ययः। उपाधेर्दुर्निरूपत्वात्। तथाहि एकबुद्धिग्राह्यतारूपो वोपाधिः स्याद्, एकार्थधीहेतुतारूपो वा। न तावदाद्यः। एकबुद्धिनिर्ग्राह्याणामपि धवखदिरपलाशानामेकत्वनिर्भासप्रत्ययाऽनियतत्वाद्। अन्यथा धवखादिरपलाशा इति न जातु स्याद्। नाऽपि द्वितीयः। किं प्रत्येकं वाचका उत मिलिता इत्यादिना वर्णेष्वेकार्थधीहेतुताया अनुपदं निराकरिष्यमाणत्वाद् इति दिक् ।

(१) यस्तु=उपवर्षाऽऽचार्यमताऽनुपायी शबरस्वामी, कुमारिलभट्टश्च इत्यर्थः ।

भा० न्तरप्रतियोगित्वाद्वैश्वरूप्यमिवाऽऽपन्नः पूर्वश्चोत्तरेणोत्तरश्च पूर्वेण विशेषेऽवस्थापित इत्येवं बहवो वर्णाः क्रमाऽनुरोधिनोऽर्थसङ्केतेन

टी० इत्यादिषु हि गकारो गोत्वाद्यर्थाऽभिधायिषु दृष्ट इति तत्तदभिधानशक्तिः। एवं, सोमः शोचिरित्यादिष्वौश्वरार्थाऽभिधायिषु पदेष्वौवर्णो दृष्टः सोऽपि तत्तदभिधानशक्तिः। एवं सर्वत्रोहनीयम्। स चैकैको वर्णो गकारादिः सहकारि, यद्वर्णान्तरमोकारादि तदेव प्रतियोगि=प्रतिसंबन्धि यस्य तत्तथोक्तस्तस्य भावस्तत्त्वं तस्माद्वैश्वरूप्यं=नानात्वमिवाऽऽपन्नो न तु नानात्वमापन्नस्तस्य तत्त्वादेव, पूर्वो वर्णः=गकार उत्तरेणौकारेण गणादिपदेभ्यो व्यावर्त्त्य उत्तरश्चौकारो गकारेण शोचिरादिपदेभ्यो व्यावर्त्त्य विशेषे=गोत्ववाचके गोपदस्फोटेऽवस्थापितोऽनुसंहारबुद्धौ। अयमभिसन्धिः—अर्थप्रत्ययो हि वर्णैर्नियतक्रमतया परस्परमसम्भवद्भिरशक्यः कर्त्तुम्। न च संस्काद्वारा[1]ऽऽग्नेयादीनामिव परमाऽपूर्वे वा स्वर्गे वा जनयितव्येऽनियतक्रमाणामपि साहित्यमर्थबुद्ध्युपजनने वर्णानामिति साम्प्रतम्। विकल्पाऽसहत्वात्। स खल्वयं वर्णाऽनुभवजन्यः संस्कारः स्मृतिप्रसवहेतुः[2], अन्यो वाऽऽग्नेयादिजन्य इवाऽपूर्वाभिधानः। न तावदनन्तरः। कल्पनागौरवाऽऽपत्तेः। स एवं[3] तावददृष्टपूर्वः कल्पनीयस्तस्य च क्रमवद्भिर्वर्णाऽनुभवैरेकस्य जन्यत्वं न सम्भवतीति तज्जातीयाऽनेकाऽवान्तरसंस्कारकल्पनेति गौरवम्। नचैष[4] ज्ञापकहेत्वङ्गमज्ञातस्तदङ्गतामनुभवतीति। न खलु

टि० (१) ननु यथा स्वरूपतः साहित्याऽभावेऽप्याग्नेयादियागानां संस्कारद्वारा साहित्यं परिकल्प्य परमाऽपूर्वजनकत्वमभ्युपेयते तथा वर्णानां स्वरूपतः साहित्याऽभावेऽपि संस्कारद्वारा साहित्यमादाय कथं नाऽर्थहेतुत्वमभ्युपेयम्। यदाहुः—"यथाऽऽग्नेयादिकर्माणि क्रमवर्त्तीनि सन्त्यऽपि। संहत्य कुर्वते कार्य्यमेवं वर्णास्तथैव नः" इति, इत्याशङ्कां निषेधति "न च। संस्कारद्वारा" इति। (२) स्मृतिप्रसवहेतुः=भावनाऽपरनामा स्मृतिजननहेतुरित्यर्थः

(३) कल्पनागौरवमेवाह "स एव" इति। स एव=अपूर्वाख्यः संस्कार एवेत्यर्थः। आग्नेयादिषु शास्त्रबलात्तथा कल्पनेऽप्यत्र तथा कल्पने मानाभाव इत्यन्यत्र विस्तरः।

(४) न केवलं कल्पनागौरवं, किन्त्वितरेतराश्रयदोषोऽपीत्याशयनाऽऽह 'नचैष' इति अत्रेदं बोध्यम्। न हि शब्दः स्वरूपतोऽङ्गतो वाऽविदितोऽविदितसङ्गतिरर्थधीहेतुश्चक्षु-

टी० संबन्धोऽर्थप्रत्यायनाऽङ्गमज्ञातोऽङ्गतामुपैति । स्मृतिफल[१]प्रसवाऽनुमितस्तु संस्कारः स्वकारणाऽनुभवविषयनियतो न विषयान्तरे† प्रत्ययमाधातुमुत्सहते। अन्यथा[२] यत्किञ्चिदेवैकमनुभूय सर्वः सर्वं जानीयाद् इति। नच प्रत्येकवर्णाऽनुभवजनितसंस्कारपिण्डलब्धजन्मस्मृतिदर्पणसमारोहिणो वर्णाः समधिगतसहभावा वाचका इति साम्प्रतं, क्रमाऽक्रमविपरीतक्रमाऽनुभूतानां तत्राऽविशेषेणार्थधीजननप्रसङ्गाद्[३]। नचैतत्स्मरणज्ञानं पूर्वाऽनुभववर्त्तिनीं परम्परतां गोचरयितुमर्हति।तस्माद् वर्णेभ्योऽसम्भवन्नर्थप्रत्यय एकपदाऽनुभवमेव स्वनिमित्तमुपकल्पयति। नचैष पदेऽपि प्रसङ्गः। ताद्धि प्रत्येकमेव प्रयत्नभेदाभिन्ना ध्वनयो व्यञ्जयन्तः परस्परविसदृशतत्तत्पदव्यञ्जकध्वानिभिस्तुल्यस्थानकरणनिष्पन्नाः सदृशाः सन्तोऽन्योऽन्यविसदृशैः पदैः पदमेकं सदृशमापादयन्तः प्रतियोगिभेदेन तत्सादृश्यानां भेदात्तदुपधानादेकमपि अनवयवमपि सावयवमिवाऽनेकात्मकमिवाऽवभासयन्ति। यथा नियतवर्णपरिमाणसंस्थानं मुखमेकमपि मणिकृपाणदर्पणादयो विभिन्नवर्णपरिमाणसंस्थानमनेकमादर्शयन्ति, न परमार्थतः सादृश्योपधानकल्पिता भागा एव निर्भागस्य पदस्य वर्णाः। तेन तद्बुद्धिर्वर्णात्मना पदभेदे स्फोटमभेदमेव निर्भागमेव सभेदमिव सभागमिवाऽऽलम्बते। अतो गोपदस्फोटभेदस्यैकस्य गकारो भागो गौरादिपदस्फोटसादृश्येन न निर्द्धारयति स्वभागिनम्*इत्योकारेण विशिष्टो नि-

टि० रादिवद्, अपि तु विदितो विदितसङ्गतिर्विदितसमस्तज्ञापनाङ्गश्च धूमादिवत् प्रत्यायकः। अत एवोच्चरितस्य बधिरेणाऽगृहीतस्य गृहीतस्य वाऽगृहीतसङ्गतेर्वा नाऽर्थप्रत्यायकत्वम्। एवञ्चापूर्वाख्योऽस्य संस्कारः प्रत्यायनाङ्गमित्यर्थप्रत्ययात् प्रागवगन्तव्यः। न च तदाऽस्याऽवगमोपायोऽस्ति। अर्थप्रत्ययात्तु तदवगमे इतरेतराश्रयप्रसङ्गः । संस्काराऽवसायादर्थप्रत्ययोऽर्थप्रत्ययाच्च संस्काराऽवसाय इति ।(१) अस्तु तर्हि भावनाख्यः संस्कार इत्यत आह "स्मृतिफल" इति । †विषयान्तरे=अर्थप्रत्ययजनने इत्यर्थः । (२) अन्यथा=यो यद्गोचरानुऽभवयोनिः संस्कारः स तत्रैव थियमावत्ते, नाऽन्यत्रेति नियमाऽनभ्युपगमे सति इत्यर्थः ।

(३) वननवनदीदीनजराराजादिपदेष्वर्थभेदप्रतीत्यभावप्रसङ्गादितिभावः। न हि येनैव क्रमेणाऽनुभूयते तनैव क्रमेण स्मर्य्यत इति नियमः। क्रमेणाऽनुभूतानां व्युत्क्रमेणापि स्मरणदर्शनादित्याह "न चैतद्" इति। *स्वः=आत्मा भागः कल्पितोऽवयवो यस्य तं गोपदस्फोटम्।

भा० अवच्छिन्ना इयन्त एते सर्वाऽभिधानशक्तिपरिवृत्ता गकारौकारविसर्जनीयाः सास्नादिमन्तमर्थं द्योतयन्तीति। तदेतेषामर्थसङ्केतेनाऽवच्छिन्नानामुपसंहृतध्वनिक्रमाणां य एको बुद्धिनिर्भासस्तत्पदं

टी० धारयति। एवमोकारोऽपि भागः शोचिरादिपदसदृशतया न शक्तो निर्द्धारयितुं स्वभागिनं गोपदस्फोटमिति गकारेण विशिष्टो निर्द्धारयति। असहभाविनामपि च संस्कारद्वारेणाऽस्ति सहभाव इति विशेष्यविशेषणभावोपपत्तिः। न च भिन्नविषयत्वं संस्कारयोः, भागद्वयविषययोरनुभवयोस्तज्जन्मनोश्च संस्कारयोरेकपदविषयत्वात्। केवलभागाऽनुभवेन पदमव्यक्तमनुभूयतेऽनुसंहारधिया तु भागाऽनुभवयोनिसंस्कारलब्धजन्मना व्यक्तमिति विशेषः। अव्यक्ताऽनुभवाश्च प्राञ्चः संस्काराधानक्रमेण व्यक्तमनुभवमादधाना दृष्टा, यथादूराद्वनस्पतौ हस्तिप्रत्यया(१) अव्यक्ता व्यक्तवनस्पतिप्रत्ययहेतवः। नचेयं विधा वर्णानामर्थप्रत्यायने सम्भविनी। नो खलु वर्णाः प्रत्येकमव्यक्तमर्थप्रत्ययमादधत्यन्ते व्यक्तमिति शक्यं वक्तुम्। प्रत्यक्षज्ञान एव नियमाद् व्यक्ताऽव्यक्तत्वस्य। वर्णाधेयस्त्वर्थप्रत्ययो न प्रत्यक्षः। तदेष वर्णेभ्यो जायमानः स्फुट एव जायेत, न वा जायेत, नत्वस्फुटः। स्फोटस्य तु ध्वनिव्यङ्ग्यस्य प्रत्यक्षस्य सतः स्फुटाऽस्फुटत्वे कल्प्येते इत्यसमानम्। एवं प्रत्येकवर्णाऽनुभवजनितसंस्कारसहितश्रोत्रलब्धजन्मन्यनुसंहारबुद्धौ संहता वर्णा एकपदस्फोटभावमापन्नाः प्रयत्नविशेषव्यङ्ग्यतया(२) प्रयत्नविशेषस्य च नियतक्रमाऽपेक्षतया क्रमाऽन्यत्वे तदभिव्यञ्जकप्रयत्नविशेषाऽभावेन तदभिव्यक्त्यभावप्रसङ्गात् क्रमाऽनुरोधिनोऽर्थसङ्केतेनाऽवच्छिन्नाः सङ्केताऽवच्छेदमेव लौकिकं सभागपदविषयं दर्शयन्ति। इयन्तो = द्वित्राः, त्रिचतुराः, पञ्चषा, एते सर्वाऽभिधानशक्तिपरिवृत्ता गकारौकारविसर्जनीयाः सास्ना-

टि० (१) यथा दूरादवस्थितः सहकारतरुः पूर्वं हस्तिपलालकूटसाधारणेन रूपेण प्रतिभासते, पुनरालोच्यमानो वृक्षात्मना प्रकाशते, पुनश्च सहकारात्मना स्फुटं प्रतीयते, तद्वदिति भावः। सर्वत्रोपलभ्यमानमपि 'अस्तिप्रत्यया' इति पाठं तत्त्वबिन्द्वद्यनुसारेणोपैक्षिषि। (२) प्रयत्नविशेषव्यङ्ग्यतया क्रमाऽनुरोधिन इत्यग्रिमेणाऽन्वयः। तदुपपादनप्रकारपरः शेषग्रन्थः।

भा०वाचकं वाच्यस्य सङ्केत्यते। तदेकं पदमेकबुद्धिविषय एकप्रयत्ना-क्षिप्तम्। अभागमक्रममवर्णं बौद्धमन्त्यवर्णप्रत्ययव्यापारोपस्थापितं परत्र प्रतिपिपादयिषया वर्णैरेवाऽभिधीयमानैः श्रूयमाणैश्च श्रोतृभिरनादिवाग्व्यवहारवासनाऽनुविद्धया लोकबुद्ध्या सिद्धव-

टी०दिमन्तमर्थमवद्योतयन्ति । तत्किमिदानीं सङ्केतानुसारेण वर्णानामेव वाचकत्वम्। तथाच न पदं नाम किञ्चिदेकमित्यत आह-"तदेतेषाम्" इति। ध्वनिनिमित्तः क्रमो ध्वनिक्रमः। उपसंहृतो ध्वनिक्रमो येषु ते तथोक्ताः। बुद्ध्या निर्भास्यते: प्रकाश्यते इति बुद्धिनिर्भासः, सङ्केताऽवच्छिन्ना। स्थूलदर्शिलोकाऽऽशयाऽनुरोधेन गकारौकारविसर्जनीया इत्युक्तम्। गकारादीनामपि तद्धा गतया तादात्म्येन वाचकत्वात्। प्रतीत्यनुसारस्त्वेकमेव पदं वाचकमित्यर्थः । एतदेव स्पष्टयति—"तदेकम्" इति। तदेकं पदं लोकबुद्ध्या प्रतीयत इति संबन्धः। कस्मादेकमित्यत आह—"एकबुद्धिविषय" इति। गौरित्येकं पद-मित्येकाकारायाः बुद्धेर्विषयो यतस्तस्मादेकम्। तस्य व्यञ्जकमाह—"एक-प्रयत्नाक्षिप्तम्" इति। रस इति पदव्यञ्जकात्प्रयत्नाद्विलक्षणः सर, इति पदव्यञ्जकः प्रयत्नः, सचापक्रमतः सर—इति पदाऽभिव्यक्तिलक्षणफला-ऽवच्छिन्नः पूर्वाऽपरीभूत एकस्तदाऽऽक्षिप्तम्। भागानां सादृश्योपधानभेदकल्पितानां परमार्थसतामभावाद् अभागम्। अत एव पूर्वाऽपरीभूतभागा-ऽभावादक्रमम्। ननु वर्णाः पूर्वाऽपरीभूतास्ते चाऽस्यभागा इति कथमक्रम-मभागं चेत्यतआह—"अवर्णम्" इति। नह्यस्य वर्णा भागाः, किन्तु सादृश्योपधानभेदात्पदमेव। तेन तदाऽऽकारेणाऽपरमार्थसता प्रथते। न हि मणि कृपाणदर्पणादिवर्त्तीनि मुखानि मुखस्य परमार्थसतोऽवयवा इति । बौद्धम् = अनुसंहारबुद्धिविदितम्। अन्त्यवर्णप्रत्ययस्य व्यापारः=संस्कारः पूर्ववर्णाऽनुभवजनितसंस्कारसहितः, तेनोपस्थापितं = विषयीकृतम्। वर्णा-ऽनुभवतत्संस्काराणां च पदविषयत्वमुपपादितमधस्ताद्। स्यादेतद् अभाग-मक्रममवर्णं चेत् पदतत्त्वं कस्मादेवंविधं कदाचिन्न प्रथते। न हि लाक्षारसाऽव-सेकोपधानाऽऽपादिताऽरुणभावः स्फटिकमणिस्तदपगमे स्वच्छो धवलो नानुभूयते। तस्मात्पारमार्थिका एव वर्णा इत्यतआह "परत्र" इति। प्रतिपिपादयिषया वर्णैरेवाऽभिधीयमानैः = उच्चार्यमाणैः श्रूयमाणैश्च श्रोतृभिरना-

भा०स्संप्रतिपत्त्या प्रतीयते, तस्य संकेतबुद्धितः प्रविभाग=एताव-तामेवञ्जातीयको ऽनुसंहार एकस्या ऽर्थस्य वाचक इति। सङ्केतस्तु पदपदार्थयोरितरेतराऽध्यासरूपःस्मृत्याऽऽत्मको, *यो ऽयं[1]शब्दः

---

टी० दिर्योऽयं वाग्व्यवहारो विभक्तवर्णपदनिबन्धनः, तज्जनिता वासना साप्यनादिरेव तदनुविद्धया=तद्वासितया लोकबुद्ध्या विभक्तवर्ण-रचितपदावगाहिन्या सिद्धवत्=परमार्थवत् सम्प्रतिपत्त्या=संवादेन वृद्धा-नां पदं प्रतीयते । एतदुक्तं भवति-अस्ति कश्चिदुपाधिर्य उपधेयेन संयुज्यते वियुज्यते च। यथा लाक्षादिः। तत्र तद्वियोगे स्फटिकः स्वाभाविकेन स्वच्छ-धवलेन रूपेण प्रकाशत इति युज्यते।पदप्रत्ययस्य तु प्रयत्नभेदोपनीतध्वनि-भेदादन्यतो ऽनुत्पादात्तस्य च सदा सादृश्यदोषरूषिततया वर्णात्मनैव प्रत्य-यजनकत्वमिति कुतो निरुपाधिनः पदस्य प्रथा[2]।यथाहुः-"ध्वनयः सदृशा-ऽऽत्मानो विपर्य्यासस्य हेतवः । उपलम्भकमेतेषां विपर्य्यासस्य कारणम् । उपायत्वाच्च नियतःपददर्शितदर्शिनाम्। ज्ञानस्यैव च बाधेयं लोके ध्रुवमुप-प्लव"इति। यतः पदाऽऽत्मा विभक्तवर्णरूषितः प्रकाशते। अतःस्थूलदर्शी लोको वर्णानेव पदमभिमन्यमानस्तानेव प्रकारभेदभाजो ऽर्थभेदे सङ्केतयती-त्याह "तस्य" इति। तस्य पदस्याऽऽजानत[3]एकस्या ऽपि सङ्केतबुद्धितः स्थू-लदर्शिलोकहिताय वर्णाऽऽत्मना विभागः । विभागमाह—"एतावताम्" इति । एतावतां न न्यूनानाम ऽधिकानां वा, एवं जातीयको नैरन्तर्य्यक्रमवि-शेषः। अनुसंहार=एकबुद्ध्युपग्रह, एकस्या ऽर्थस्य=गोत्वादेर्वाचक इति । ननु यद्येकस्याऽर्थस्या ऽयं शब्दो वाचक इति सङ्केतो,हन्त भोः शब्दार्थयोर्ने-तरेतराध्यासस्तर्हीत्यत आह,—"सङ्केतस्तु" इति । स्मृतावात्मा=स्वरूपं

---

* स्मृत्यात्मक इत्यस्य पाणिन्याद्यनुशासनबोध्य इत्यर्थ इति शाब्दिकमञ्जूषाकारः । आधुनिकनामादिकल्पनाव्यावर्त्तनाय स्मृत्यात्मक इति, इति भिक्षुः ।

टि० (१) सङ्केतस्याऽध्यासरूपत्वं स्पष्टयति--योऽयमित्यादिना, भवतीत्यन्तेन।

(२) रुदितहसितादौ वर्णभिन्नत्वेन ध्वनेःप्रतीतिसत्त्वेऽपि परन्तु सादृश्यदोषसंवलित-तया वर्णात्मनैव ध्वनीनां प्रत्ययजनकत्वोपलब्धेर्न निरुपाधिकपदत्वप्रतीतिरिति भावः ।

(३) आजानतः=स्वभावतः पदस्यैकस्याऽपि सङ्केतबुद्ध्या वर्णात्मना विभाग इत्यन्वयः ।

भा० सोऽयमर्थः, योऽर्थः स शब्द इत्येवमितरेतराऽध्यासरूपः सङ्केतो भवति, इत्येवमेते शब्दार्थप्रत्यया इतरेतराऽध्यासात्सङ्कीर्णा, गौरिति[१] शब्दो, गौरित्यर्थो गौरितिज्ञानम्।य एषाम्प्रविभागज्ञः स सर्ववित्। सर्वपदेषु चाऽस्ति वाक्यशक्तिः, वृक्षइत्युक्तेऽस्तीति गम्यते, न सत्तां पदार्थो व्यभिचरतीति। तथा नह्यसाधना

---

टी० यस्य स तथोक्तः। न हि कृत इत्येव सङ्केतोऽर्थमवधारयत्यपि तु स्मर्य्यमाणः। एतदुक्तं भवति—अभिन्नाकार एव सङ्केते कथञ्चिद् भेदं विकल्प्य षष्ठी[२]प्रयुक्तेति। य एषां प्रविभागज्ञः स तत्र[३] संयमे भवति सर्ववित्=सर्वभूतरुतज्ञ इति। तदेवं विकल्पितवर्णभागमेकमनवयवं पदं व्युत्पाद्य कल्पितपदविभागं वाक्यमेकमनवयवं व्युत्पादयितुमाह,—"सर्वपदेषु चाऽस्तिवाक्यशक्तिः" इति। अयमभिसन्धिः—परप्रत्यायनाय शब्दः प्रयुज्यते। तदेव च परं प्रति प्रतिपादयितव्यं यत्तैःप्रतिपित्सितम्। तदेव च तैः प्रतिपित्सतं, यदुपादानादिगोचरः। न पदार्थमात्रं तद्गोचरः, किन्तु वाक्यार्थ, इति वाक्यार्थपरा एव सर्वे शब्दाः। तेन स एव तेषामर्थः। अतो यत्राऽपि केवलस्य पदस्य प्रयोगस्तत्रापि पदान्तरेण[४]सहैकीकृत्य ततोऽर्थो गम्यते न तु केवलात्। कस्मात्, तन्मात्रस्याऽसामर्थ्यात्। तथाच वाक्यमेव तत्र तत्र वाचकं, न तु पदानि। तद्भागतया[५]तु तेषामप्यस्तिवाक्यार्थवाचकशक्तिः पदार्थ इव पदभागतया वर्णानाम्। तेन यथा वर्ण एकैकः सर्वपदार्थाऽभिधानशक्तिप्रचित एवं पदमप्येकैकं सर्ववाक्यार्थाऽभिधानशक्तिप्रचितम्। तदिदमुक्तं—"सर्वपदेषु चास्ति वाक्यशक्तिः, वृक्ष इत्युक्तेऽस्तीति गम्यते" = अध्याहृताऽस्तिपदसहितं वृक्ष इति पदं वाक्यार्थे वर्त्तत इति* तद्भागत्वाद् वृक्षपदं तत्र वर्त्तत इत्यर्थः। कस्मात्

---

टि० (१) सङ्केतमाह—"गौः" इत्यादिना। (२) षष्ठी = पदपदार्थयोरिति षष्ठीत्यर्थः। (३) तत्र = प्रविभागविषये संयमे क्रियमाणे सतीत्यर्थः। (४) पदान्तरेण = अध्याहृताऽस्त्यादिपदान्तरेणेत्यर्थः। (५) तद्भागतया = वाक्याऽवयवतयेत्यर्थः। * अतः।

भा० क्रियाऽस्तीति । तथा च, पचतीत्युक्ते सर्वकारकाणामाक्षेपो, नियमार्थो[१]ऽनुवादः कर्तृकर्मकरणानां चैत्राऽग्नितण्डुलानामिति । दृष्टं च वाक्यार्थे पदरचनं, श्रोत्रियश्छन्दोऽधीते, जीवति प्राणान् धारयति[२] । तत्र वाक्ये पदाऽर्थाऽभिव्यक्तिः । ततः

टी० पुनरस्तीति गम्यत इत्यत आह—"न सत्तां पदार्थो व्यभिचरति" इति । लोक एव हि पदानाऽमर्थाऽवधारणोपायः, स च केवलं पदार्थमस्त्यर्थेनाभिसमस्य[३]सर्वत्र वाक्यार्थीकरोति । सोऽयमव्यभिचारः सत्तया पदार्थस्य । अत एव शब्दवृत्तिविदां[४]व्यवहारः—"यत्रान्यत् क्रियापदं नास्ति तत्राऽस्तिर्भवन्तीपरः प्रयोक्तव्य" इति । क्रियाभेदाऽव्यभिचारि प्रातिपदिकमुक्त्वा क्रियाभेदं कारकाऽव्यभिचारिणं दर्शयति— "तथा च पचतीत्युक्ते" इति । पचतीत्युक्ते हि कारकमात्रस्य तदन्वययोग्यस्याऽवगमाद् अन्यव्यावृत्तिपरस्तद्भेदानामनुवादः । तदेवं भेद एव वाक्यार्थ इति । तथाऽनपेक्षमपि पदं वाक्यार्थे वर्त्तमानं दृश्यत इति सुतरामस्ति वाक्यशक्तिः पदानामित्याह—"दृष्टञ्च" इति । नचैतावताऽपि श्रोत्रियादिपदस्य स्वतन्त्रस्यैवंविधाऽर्थप्रत्यायनं, न यावदस्त्यादिभिरभिसमासोऽस्य भवति । तथा चाऽस्याऽपि वाक्याऽवयवत्वात्कल्पितत्वमेवेति भावः । स्यादेतत्, पदानामेव चेद्वाक्यशक्तिः, कृतं तर्हि वाक्येन; तेभ्य एव तदार्थाऽवसायादित्यत आह—"तत्र वाक्य" इति । उक्तमेतन्न केवलं पदात्पदार्थः प्रतिपित्सितः प्रती-

टि० (१) नन्वाऽऽक्षेपस्वीकारे कारकवाचकपदानां कुत्राऽपि प्रयोगो न स्यादित्यत आह "नियमार्थोऽनुवाद" इति । कारकान्तरव्यावृत्त्यर्थश्चैत्रादिकर्त्रादिकारकाणां प्रयोगः क्रियत इति भावः । एतच्च "पदार्थाऽभिसंबन्धस्योपलब्धिर्भवति वाक्ये" इत्यादिनाऽर्थवत्सूत्रे महाभाष्येऽपि स्पष्टमुपदिष्टमिति तत एव निरीक्ष्यम् । (२) छन्दोऽधीत इति वाक्यस्यार्थे श्रोत्रिय इति पदरचनं दृष्टं, प्राणान्धारयतीति वाक्यार्थे जीवतीति पदं दृष्टमित्यर्थः । (३) अभिसमस्य=अभेसंबध्य (४) शब्दवृत्तिविदां="अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते" इति वदतां कात्यायनमुनिमुख्यानामित्यर्थः । को व्यवहार इत्यत आह "यत्र" इति । अस्तिः=असधातुः, भवन्तीपरः=लट्परक इत्यर्थः । भवन्तीति लटः संज्ञा प्राचाम् ।

पदं प्रविभज्य व्याकरणीयं[१] क्रियावाचकं कारकवाचकं वा, अन्यथा भवति । अश्वः, अजापय इत्येवमादिषु नामाऽऽख्यातसारूप्यादनिर्ज्ञातं कथं क्रियायां कारके वा व्याक्रियेतेति । तेषां शब्दार्थप्रत्ययानां प्रविभागः । तद् यथा—श्वतते प्रासाद इति क्रियार्थः । श्वेतः प्रासाद इति कारकार्थः शब्दः, क्रिया-

टी० यत, न यावदेतत्पदाऽन्तरेणाऽभिसमस्यत इति । तथा च वाक्यात्पदान्यपोद्धृत्यकल्पितानि वाक्यार्थाच्चाऽपोद्धृत्य तदेकदेशं कारकं वा, क्रियां वा तत्पदं प्रकृत्यादिविभागकल्पनया व्याकरणीयं = व्याख्येयम्*। किमर्थं पुनरेतावता क्लेशेनाऽन्वाऽऽख्यायत इत्यत आह—"अन्यथा" इति । घटो भवति, भवति भिक्षां देहि, भवति तिष्ठति, इति नामाऽऽख्यातयोश्च साम्याद् । एवम्, अश्वस्त्वम्, अश्वो यातीति । एवमजापयः पिब, अजापयः शत्रून् इति नामाऽऽख्यातसारूप्यादनिर्ज्ञातं नामत्वेनाऽऽख्यातत्वेन वा, अन्वाऽऽख्यानाऽभावे निष्कृष्याऽज्ञानं कथं क्रियायां वा कारके वा व्याक्रियेत । तस्माद्वाक्यात्पदान्यपोद्धृत्य व्याख्यातव्यानि, न तु अन्वाऽऽख्यानादेव पारमार्थिको विभागः पदानामिति । तदेवं शब्दरूपं व्युत्पाद्य शब्दार्थप्रत्ययानां सङ्केताऽऽपादितसङ्कराणामसङ्करमाख्यातुमुपक्रमते—"तेषां शब्दार्थप्रत्ययानाम्प्रविभाग" इति । "तद्यथा श्वेतते प्रासाद इति क्रियार्थः शब्दः" = स्फुटतरो ह्यत्र पूर्वाऽपरीभूतायाः क्रियायाः साध्यरूपायाः, सिद्धरूपः क्रियार्थः श्वेत इति भिन्नः शब्दः[२]। यत्राऽपि शब्दार्थयोः सिद्धरूपत्वं तत्राऽप्यर्थादस्ति शब्दस्य भेद इत्याह—"श्वेतः प्रासाद इति कारकार्थः शब्द" इति । अभिहितत्वाच्च कारकविभक्तेरभावः ।

टि० (१) यतो वाक्यार्थेऽपि पदरचना भवत्यतः सन्देहस्थले पदं प्रकृतिप्रत्ययविभागेनाऽन्वाख्याय वाक्येन विवरणीयमित्यर्थः । विपक्षे बाधकमाह "अन्यथा" इति । भवति-इति पदमाख्यातत्वेन, घटो भवतीत्यर्थकम् ? उत संबुद्ध्यन्तत्वेन, भवति भिक्षां देहीत्यर्थकम्, आहो सप्तम्यन्तत्वेन, भवति तिष्ठतीत्यर्थकम् ? एवमश्व—इति पदं श्विधातोर्लुङि निष्पन्नत्वेन, त्वं गमनमकार्षीरित्यर्थकम्, उत घोटकवाचकत्वेनाऽश्वो यातीत्यर्थकम् ? एवमजापय—इति पदं षष्ठीतत्पुरुषत्वेन, बर्कर्य्याः दुग्ध पिबेत्यर्थकम् ? उत ण्यन्तजिधातोर्लङि निष्पन्नत्वेन, शत्रून् पराभावितवानित्यर्थकमित्येवं नामाऽऽख्यातसारूप्यस्थले वाक्यार्थप्रतिपत्तिर्न भवेद्यदि विभज्य पदं नाऽन्वाऽऽख्यायेतेति भावः । (२) श्वतते—इति तिङन्ताऽभिहितसाध्यरूपाक्रियायाः सकाशात्, श्वेत—इति कृदभिहितः सिद्धरूपः क्रियार्थो भिन्न इति भावः । *अन्वाख्येयमित्यपि रम्यम् ।

भा० कारकात्मा तदर्थः[१]प्रत्ययश्च। कस्मात्। सोऽयमित्यभिसंबन्धादे[२]काकार एव प्रत्ययः सङ्केते इति। यस्तु श्वेतोऽर्थः स शब्दप्रत्यययोरालम्बनीभूतः। स हि स्वाभिरवस्थाभिर्विक्रियमाणो न शब्दसहगतो न बुद्धिसहगत, एवं शब्द[३], एवं प्रत्ययो नेतरेतरसहगत इति। अन्यथा शब्दोऽन्यथाऽर्थोऽन्यथा प्रत्यय इति विभागः। एवं तत्प्रविभागसंयमाद्[४] योगिनः सर्वभूतरुतज्ञानं सम्पद्यत इति ॥ १७ ॥

---

टी० अर्थं विभजते—"क्रियाकारकात्मा तदर्थ"इति। तयोः शब्दयोरर्थः क्रियात्मा कारकात्मा चेत्यर्थः। प्रत्ययं विभजते"प्रत्ययश्च"इति। च शब्देन तदर्थइत्येतत्पदमत्राऽनुकृष्यते। तद[५]त्राऽन्यपदार्थप्रधानं संबध्यते। स एव क्रियाकारकात्माऽर्थो यस्य स तथोक्तः। नन्वभेदेन प्रतीतेः शब्दार्थप्रत्ययानां सङ्करात्कुतः प्रविभाग इत्याशयवान् पृच्छति-"कस्माद्"इति। उत्तरमाह—"सोऽयमित्यभिसंबन्धाद्" इति। सङ्केतोपाधिरेकाकारप्रत्ययो न तु तात्त्विक इत्यर्थः। सङ्केतस्य निमित्तता दर्शिता, सङ्केत इति सप्तम्या। परमार्थमाह—"यस्तु श्वेतोऽर्थ"इति अवस्था नवपुराणत्वादयः, सहगतः = सङ्कीर्णः। एवं प्रविभागसंयमाद् योगिनः सर्वेषाम्भूतानां पशुमृगसरीसृपवयःप्रभृतीनां यानि रुतानि* तत्राऽप्यव्यक्तं पदं तदर्थः, तत्प्रत्ययश्च इति। तदिह मनुष्यवचनवाच्यप्रत्ययेषु कृतः संयमः समानजातीयतया तेष्वपि कृत एवेति तेषां रुतं तदर्थभेदं तत्प्रत्ययं च योगी जानातीति सिद्धम् ॥ १७ ॥

---

टि० (१) श्वेतते—इत्यस्य क्रिया = साध्यरूपोऽर्थः, श्वेत—इति शब्दस्य कारकं = सिद्धरूपोऽर्थ इति भावः। (२) सोऽयमित्याभिसंबन्धाद् = श्वेतनं या क्रिया सोऽयं श्वेतरूपः कारको गुणो, यश्च श्वेतत इत्यस्मात् श्वेताऽऽकारः प्रत्ययः सोऽयं श्वेत इत्यस्मादपि श्वेताऽऽकारः प्रत्यय इत्यभेदप्रत्यभिज्ञानादित्यर्थ इति विज्ञानः।

(३) यथाऽर्थो न शब्दप्रत्ययसहगत एवं शब्दोऽपि नाऽर्थप्रत्ययसहगतः। एवमेव प्रत्ययोऽपि न शब्दार्थसहगत इत्यर्थः। * तानि जानातीति शेषः।

(४) ननु परीक्षका अपि शास्त्रदृष्ट्या शब्दार्थप्रत्ययविभागं जानन्त्येवेति कथं न तेषां सर्वभूतशब्दज्ञानमुत्पद्यते इत्यत आह—"तत्प्रविभागसंयमाद्" इति। संयमजन्य एव शब्दार्थप्रत्ययविभागसाक्षात्कारः सर्वभूतरुतज्ञानहेतुरिति भावः।

(५) तद् = अनुवर्त्तमानं तदर्थ इति पदमित्यर्थः।

सू० संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम्[१] ॥१८॥

भा० द्वये खल्वमी[२] संस्काराः,=स्मृतिक्लेशहेतवो वासनारूपा, विपाकहेतवो धर्माऽधर्मरूपाः। ते पूर्वभवाऽभिसंस्कृताः परिणामचेष्टानिरोधशक्तिजीवनधर्मवदपरिदृष्टाश्चित्तधर्माः[३], तेषु संयमः संस्कारसाक्षात्क्रियायै समर्थः। न च देशकालनिमित्ताऽनुभवैर्विना तेषामस्ति साक्षात्करणम्। तदित्थं संस्कारसाक्षात्करणात्पूर्वजातिज्ञानमुत्पद्यते योगिनः। परत्राऽप्येवमेव संस्कारसाक्षात्करणात्परजातिसंवेदनम्।

अत्रेदमाख्यानं श्रूयते—भगवतो जैगीषव्यस्य संस्कारसाक्षात्करणाद् दशसु महासर्गेषु जन्मपरिणामक्रममनुपश्यतो-

टी० सू० "संस्कारसाक्षात्करणात्पूर्वजातिज्ञानम्"॥१८॥ ज्ञानजा हि संस्काराः स्मृतेर्हेतवः, अविद्यादिसंस्कारा अविद्यादीनां क्लेशानां हेतवः, विपाकहेतवः=विपाको=जात्यायुर्भोगरूपः, तस्य हेतवो धर्माऽधर्मरूपाः। पूर्वेषु भवेषु अभिसंस्कृताः=निष्पादिताः स्वकारणैः। यथा[४] संस्कृतं व्यञ्जनं, कृतमिति गम्यते। परिणामचेष्टानिरोधशक्तिजीवनान्येव धर्माश्चित्तस्य तद्वदपरिदृष्टाश्चित्तधर्माः। तेषु श्रुतेष्वनुमितेषु सपरिकरेषु संयमः संस्काराणां द्वयेषां साक्षात्क्रियायै समर्थः। अस्तु तत्र संयमात्तत्साक्षात्कारः पूर्वजातिसाक्षात्कारस्तु कुत इत्यत आह—"न च देश" इति। निमित्तम्=पूर्वशरीरम् इन्द्रियादि च, साऽनुबन्ध[५] संस्कारसाक्षात्कार एव नान्तरीयकतया जात्यादिसाक्षात्कारमाक्षिपतीत्यर्थः। स्वसंस्कारसंयमं परकीयेष्वतिदिशति-"परत्राऽप्ये[६]वम्" इति। अत्र श्रद्धोत्पादे हेतुमनुभवत आवट्यस्य जैगीषव्येण संवादनुपन्यस्यति-"अत्रेदमाख्यानं श्रूयते" इति।

टि० (१) संयमसिद्धिप्रकरणादत्र "संस्कारसंयमेन" इति सूत्रस्यादौ देयम्।

(२) अमी=सूत्रोक्ताः संस्कारा द्विविधा इत्यर्थः। के ते द्वये इत्याह "स्मृति" इत्यादिना। (३) यथा परिणामचेष्टादयः सप्त चित्तधर्मा अतीन्द्रियास्तद्वद्वासनारूपा धर्माऽधर्मरूपाश्च संस्काराश्चित्तधर्मा अप्यतीन्द्रिया इत्यर्थः।

(४) संस्कृत—शब्दो निष्पादितेत्यर्थपर इत्यत्र दृष्टान्तमाह "यथा" इति।

(५) अनुबन्धाः=मातृपितृजन्मभूमिनगरकालादयः। तैः सह वर्त्तत इति साऽनुबन्धः।

(६) परत्राऽपीति भाष्यस्याऽनाऽगतावस्थानां भाविजन्मसंस्काराणां साक्षात्करणाद् भाविजन्मज्ञानामित्यर्थ इति कश्चिद्। अत्र योग्यनुभव एव शरणम्।

भा० विवेकजं ज्ञानं प्रादुरभवद्। अथ भगवानाऽऽवट्यस्तनुधरस्तमुवाच—दशसु महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन त्वया[१]नरकतिर्य्यग्गर्भसम्भवं दुःखं संपश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन सुखदुःखयोः किमधिकमुपलब्धमिति। भगवन्तमावट्यं जैगीषव्य उवाच—दशसु[२]महासर्गेषु भव्यत्वादनभिभूतबुद्धिसत्त्वेन मया नरकतिर्य्यग्भवं दुःखं संपश्यता देवमनुष्येषु पुनः पुनरुत्पद्यमानेन यत्किञ्चिदनुभूतं[३] तत्सर्वं दुःखमेव प्रत्यवैमि। भगवानाऽऽवट्य उवाच—यदिदमायुष्मतः प्रधानवशित्वमनुत्तमं च सन्तोषसुखं किमिदमपि दुःखपक्षे निक्षिप्तमिति। भगवान् जैगीषव्य उवाच—विषयसुखाऽपेक्षयैवेदमनुत्तमं सन्तोषसुखमुक्तं, कैवल्याऽपेक्षया दुःखमेव। बुद्धिसत्त्व[४]स्यायं धर्मस्त्रिगुणः। त्रिगुणश्च प्रत्ययो हेयपक्षे न्यस्त इति। [५]दुःखस्वरूपस्तृष्णातन्तुस्तृष्णादुःखसन्तापाऽपगमात्तु प्रसन्नमबाधं सर्वाऽनुकूलं सुखमिदमुक्तमिति ॥ १८ ॥

सू० प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥

भा० प्रत्यये संयमात्प्रत्ययस्य साक्षात्करणात्ततः परचित्तज्ञानम् ॥ १९ ॥

---

टी० महाकल्पो महासर्गः। तनुधर इति निर्माणकायसम्पदुक्ता। भव्यः=शोभनो, विगलितरजस्तमोमल इत्यर्थः। प्रधानवशित्वम्=ऐश्वर्य्यं, तेन हि प्रधानं विक्षोभ्य यस्मै यादृशीं कायेन्द्रियसम्पदं दित्सति तस्मै तादृशीं दत्ते, स्वकीयानि च कायेन्द्रियाणि सहस्राणि निर्मायाऽन्तरिक्षे दिवि भुवि च यथेच्छं विहरतीति। सन्तोषे हि तृष्णाक्षयो बुद्धिसत्त्वस्य प्रशान्तता धर्मः॥ १८॥ "प्रत्यस्य परचित्तज्ञानम्"॥ १९॥ प्रत्ययस्य=परचित्तमात्रस्य साक्षात्करणादिति ॥ १९ ॥ यथा संस्कारसाक्षात्कारस्तदनुबन्धपूर्वजन्मसाक्षात्कार-

---

टि० (१) त्वया सुखदुःखयोर्मध्ये किमधिकमुपलब्धमित्यन्वयः। (२) किं दुःखबहुलः संसारः किं वा सुखबहुल इति पृष्टो जैगीषव्यो दुःखबहुत्वप्रतिपादनाय सर्वं दुःखमेवेत्याह "दशसु" इत्यादिना। (३) यत्किञ्चित्सुखमनुभूतमित्यर्थ इति वि०। (४) कैवल्याऽपेक्षयादुःखमुपपादयति "बुद्धिसत्त्वस्य" इति। (५) ननु सन्तोषमपि यदि दुःखमेव, कथं तर्हि "सन्तोषादनुत्तमसुखलाभ" इत्यादिना सन्तोषस्य सुखहेतुत्वाऽभिधानमित्यत आह—"दुःख" इत्यादि। रज्जुरिव बन्धकत्वेन तृष्णा रज्जुस्तन्तुर्दुःखरूपः प्रसिद्धस्तदपगमाच्च सन्तोषस्य सुखत्वमुक्तमिति भावः।

सू० नच तत्सालम्बनं तस्याऽविषयीभूतत्वाद्[१]॥२०॥

भा०रक्तं प्रत्ययं जानाति [२]अमुष्मिन्नालम्बने रक्तमिति न जानाति ।परप्रत्यस्य यदाऽऽलम्बनं तद्योगिचित्तेन नाऽऽलम्बनीकृतं परप्रत्यमात्रंतु योगिचित्तस्याऽऽलम्बनीभूतमिति ॥ २० ॥

सू० कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशाऽसम्प्रयोगेऽन्तर्द्धानम् ॥ २१ ॥

भा० कायरूपे संयमाद् रूपस्य या ग्राह्या शक्तिस्तां प्रति बध्नाति । ग्राह्यशक्तिस्तम्भे सति चक्षुःप्रकाशा ऽसम्प्रयोगेऽन्तर्द्धानमुत्पद्यते योगिनः । एतेन शब्दाद्यन्तर्धानमुक्तं वेदितव्यम् ॥२१॥

---

टी०माक्षिपत्येवं परचित्तसाक्षात्कारोऽपि तदालम्बनसाक्षात्कारमाक्षिपेदिति प्राप्त आह—"न च तत्सालम्बनं तस्याविषयीभूतत्वाद्"॥२०॥सानुबन्धसंस्कारविषयोऽसौ संयमः, अयन्तु परचित्तमात्रविषय इत्यभिप्रायः॥२०॥

सू० "काय—अन्तर्द्धानम्" ॥२१॥ पञ्चात्मकः कायः। स च रूपवत्तयाचाक्षुषो भवति। रूपेण हि कायश्च तद्रूपं च चक्षुर्ग्रहणकर्मशक्तिमनुभवति। तत्र यदा रूपे संयमविशेषो योगिना क्रियते तदा रूपस्य ग्राह्यशक्तिः रूपवत्कायप्रत्यक्षताहेतुः स्तभ्यते[३] *तस्माद् ग्राह्यशक्तिस्तम्भे सत्यन्तर्द्धानं योगिनः,ततः परकीयचक्षुर्जनितेन प्रकाशेन=ज्ञानेनाऽसम्प्रयोगः, चक्षुर्ज्ञानाऽविषयत्वं योगिनः कायस्येति यावत् ।तस्मिन् कर्त्तव्येऽन्तर्धानं कारणमित्यर्थः—"एतेन" इति ।काये शब्दस्पर्शरसगन्धसंयमात् तद्ग्राह्यशक्तिस्तम्भे श्रोत्रत्वग्रसनाघ्राणप्रकाशाऽसम्प्रयोगे तदन्तर्धानम्[४] इति सूत्रमूहनीयम् ॥ २१ ॥

---

टि० (१) इदं भाष्यमेवेति विज्ञानभिक्षोरस्थान एव व्यामोहो, वृत्त्यादिविरोधात् ।

(२) रक्तं प्रत्ययं=रागयुक्तं परचित्तं जानाति, न त्वस्मिन्विषये रक्तमिति विशिष्य जानातीत्यर्थः। तत्र हेतुमाह "परप्रत्यय" इति ।

(३) रूपवत्कायप्रत्यक्षताहेतुर्या रूपस्य ग्राह्यशक्तिः सा स्तभ्यते = प्रतिबध्यते इत्यर्थः।

(४) तदन्तर्धानं=शब्दाद्यन्तर्धानमित्यर्थः । योगिनः शब्दादिकं न केनचिद् अध्यक्ष्यत इति भावः । * स्तम्भ्यत इति पाठस्त्वकर्मकत्वाऽभिप्रायेण ।

सू० सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ २२ ॥

भा० आयुर्विपाकं कर्म द्विविधं—सोपक्रमं, निरुपक्रमं च । तत्र यथाऽऽर्द्रवस्त्रं वितानितं[१] लघीयसा कालेन शुष्येत् तथा सोपक्रमम् । यथा च तदेव सम्पिण्डितं चिरेण संशुष्येद् एवं निरुपक्रमम् । यथा चाग्निः शुष्के कक्षे[२] मुक्तो वातेन समन्ततो युक्तः क्षेपीयसा* कालेन दहेत्तथा सोपक्रमम् । यथा वा स एवाऽग्निस्तृणराशौ क्रमशोऽवयवेषु न्यस्तश्चिरेण दहेत्तथा निरुपक्रमम्। तदैकभविकमायुष्करं कर्म द्विविधं—सोपक्रमं निरुपक्रमं च । तत्संयमाद् अपरान्तस्य=प्रायणस्य ज्ञानम् । अरिष्टेभ्यो वेति । त्रिविधमरिष्टमाध्यात्मिकमाधिभौतिकमा-

टी०सू० "सोऽपक्रमं-वा" ॥२२॥ आयुर्विपाकं च कर्म द्विविधं— सोपक्रमं, निरुपक्रमं च । यत् खल्वैकभविकं कर्म जात्यायुर्भोगहेतुस्तदाऽऽयुर्विपाकम् । तच्च किञ्चत्कालाऽनपेक्षमेव भोगदानाय प्रस्थितं दत्तबहुभोगमल्पाऽवशिष्टफलं प्रवृत्तव्यापारं केवलं तत्फलस्य सहसा भोक्तुमेकेन शरीरेणाऽशक्यत्वाद्विलम्बते । तदिदं सोपक्रमम् । उपक्रमः = व्यापारस्तत्सहितमित्यर्थः । तदेव तु दत्तस्तोकफलं तत्कालमपेक्ष्य फलदानाय व्याप्रियमाणं कादाचित्कमन्दव्यापारं निरुपक्रमम् । एतदत्र निदर्शनाभ्यां विशदयति—"तत्र यथा" इति । अत्रैवाऽतिवैशद्याय निदर्शनान्तरं दर्शयति—"यथा वाऽग्निः" इति । परान्तम् = महाप्रलयमपेक्ष्याऽपरान्तो मरणं, तस्मिन् कर्मणि धर्माऽधर्मयोः संयमादपरान्तज्ञानम् । ततश्च योगी सोपक्रममात्मनः कर्म विज्ञाय बहून् कायान् निर्माय सहसा फलं भुक्त्वा स्वेच्छया म्रियते । प्रासङ्गिकमाह[३]"अरिष्टेभ्यो वा" इति । अरिवत् त्रासयन्तीत्यरिष्टानि त्रिविधानि मरणचिह्नानि । विपरीतं वा सर्वं=

टि० (१) वितानितं=विस्तारितम् । लघीयसा=अतिस्वल्पेन । (२)कक्षे=तृणे । *क्षेपीयसा =अतिशीघ्रेण । (३) प्रसङ्गात् सर्वजनसंवेदनीयानि मरणसूचकचिह्नान्याहेत्यर्थः ।

भा० धिदैविकं चेति । तत्राऽऽध्यात्मिकं घोषं स्वदेहे पिहितकर्णो न श्रृणोति[१] । ज्योतिर्वा नेत्रेऽवष्टब्धे न पश्यति । तथाऽऽधिभौतिकं यमपुरुषान् पश्यति, पितृनतीतानकस्मात्पश्यति । आधिदैविकं—स्वर्गमकस्मात्सिद्धान् वा पश्यति, विपरीतं[२] वा सर्वमिति । अनेन* वा जानात्यपरान्तमुपस्थितमिति ॥२२॥

## सू० मैत्र्यादिषु बलानि ॥ २३ ॥

भा० मैत्री करुणा मुदितेति तिस्रो भावनाः । तत्र भूतेषु सुखितेषु मैत्रीं भावयित्वा मैत्रीबलं लभते । दुःखितेषु करुणां भावयित्वा करुणाबलं लभते । पुण्यशीलेषु मुदितां भावयित्वा मुदिताबलं लभते । भावनातः[३] समाधिर्यः स संयमस्ततो बलान्यवन्ध्यवीर्य्याणि जायन्ते, पापशीलेषूपेक्षा[४] न तु भावना । ततश्च तस्यां

---

टी० माहेन्द्रजालादिव्यतिरेकेण ग्रामनगरादि स्वर्गमभिमन्यते मनुष्यलोकमेव देवलोकमिति ॥ २२ ॥

सू० "मैत्र्यादिषु बलानि" ॥ २३ ॥ मैत्र्यादिषु संयमान्मैत्र्यादिबलान्यस्य भवन्ति । तत्र मैत्रीभावनातो बलं येन जीवलोकं सुखाकरोति । ततः सर्वहितो भवति । एवं करुणाबलात्प्राणिनो दुःखाद् दुःखहेतोर्वा समुद्धरति । एवं मुदिताबलाज्जीवलोकस्य माध्यस्थ्यमाधत्ते । वक्ष्यमाणौपयिकं भावनाकारणत्वं समाधेराह "भावनातःसमाधिर्यःससंयमः" इति । यद्यपिधारणध्यानसमाधित्रय-

---

टि० (१) कर्णाऽवरुद्धकर्णः सन् घोषं = स्वदेहाभ्यन्तरभवं ध्वनिं न श्रृणोतीत्यर्थः । नेत्रेऽवष्टब्धे = निमीलिते सति, अङ्गुल्यादिना भ्रामिते वा अन्तर्वह्निकणतुल्यं ज्योतिर्न पश्यतीत्यर्थः ।

(२) एतच्च "कृपणोऽपि वदान्यः स्याद् वदान्यः कृपणो यदि । प्रकृतेर्विकृतिश्चेत्स्यात्तदा पञ्चत्वमृच्छति" इत्यादिना स्कान्दादिषु स्पष्टम् ।

(३) न केवलं भावनामात्रान्मैत्र्यादिबलानि भवन्त्यपि तु भावनोत्तरं मैत्र्यादिसंयमादित्याह—"भावनात" इति ।

(४) ननु मैत्र्यादिष्वित्यादिपदेन प्रथमपादोक्तापेक्षा कथं न सङ्गृहीतेत्यत आह-"पापशीलेषु" इति ।

* अरिष्टेन वा ।

भा० नास्ति समाधिरिति। अतो न बलमुपेक्षातस्तत्र संयमाऽभावाद् इति ॥ २३ ॥

सू० बलेषु हस्तिबलादीनि ॥ २४ ॥

भा० हस्तिबले संयमाद् हस्तिबलो भवति, वैनतेयबले संयमाद् वैनतेयबलो भवति, वायुबले संयमाद्वायुबल इत्येवमादि ॥२४॥

सू० प्रवृत्त्याऽऽलोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्ट-ज्ञानम् ॥ २५ ॥

भा० ज्योतिष्मती प्रवृत्तिरुक्ता मनसस्तस्या य आलोकस्तं योगी सूक्ष्मे वा व्यवहिते वा विप्रकृष्टे वाऽर्थे विन्यस्य तमर्थमधिगच्छति।२५

सू० भुवनज्ञानं सूर्य्ये संयमाद् ॥ २६ ॥

---

टी० मेव संयमो न समाधिमात्रं तथाऽपि समाध्यनः नरं,कार्य्योत्पादात्समाधेः प्राधान्यात् तत्र संयम उपचरितः । क्वचिद्भावना समाधिरिति पाठः । तत्र भावनासमाधी समूहस्य संयमस्याऽवयवौ(१) हेतू भवतः । वीर्य्यं=प्रयत्नः, तेन मैत्र्यादिबलवतः पुंसः सुखित्वादिषु परेषां कर्त्तव्येषु प्रयत्नोऽवन्ध्यो भवतीति । उपेक्षा=औदासीन्यम् । न तत्र भावना, नाऽपि सुखितादिवद् भाव्यं किञ्चिदस्तीति ॥ २३ ॥

सू० "बलेषु हस्तिबलादीनि" ॥ २४ ॥ यस्य बले संयमस्तस्य बलं लभत इति ॥ २४ ॥

सू० "प्रवृत्त्या-ज्ञानम्" ॥ २५ ॥ सूक्ष्मे व्यवहिते विप्रकृष्टे वार्थे संयमने विन्यस्य;तमर्थमधिगच्छतीति ॥ २५ ॥

सू०"भुवनज्ञानं सूर्य्ये संयमाद" ।आ ध्रुवाद्-इतो मेरुपृष्ठात् *।तदेवमनेन

---

टि० (१) संयमस्याऽवयवौ भावनासमाधी समूहस्य संयमस्य हेतूभवतः । समूहस्य समूहिसाध्यत्वाद् । * मेरुपृष्ठोपलक्षिताद् इतो=भूर्लोकाद ध्रुवलोकपर्य्यन्तं भुवर्लोकः।

भा० तत्प्रस्तारः[१] सप्तलोकाः, तत्राऽवीचेः प्रभृति मेरुपृष्ठं यावदित्येष भूर्लोकः, मेरुपृष्ठादारभ्याऽऽध्रुवाद् ग्रहनक्षत्रताराविचित्रोऽन्तरिक्षलोकः, तत्परः स्वर्लोकः पञ्चविधो, माहेन्द्रस्तृतीयो लोकः, [२] चतुर्थः प्राजापत्यो महर्लोकः, त्रिविधो ब्राह्मः । तद्यथा—जनलोकस्तपोलोकः सत्यलोक इति । "ब्राह्मस्त्रिभूमिको लोकः[३] प्राजापत्यस्ततो महान् । माहेन्द्रश्चस्वरित्युक्तो दिवि तारा भुवि प्रजा" इतिसंग्रहश्लोकः । तत्राऽवीचेरुपर्य्युपरिनिविष्टाः षण्महानरकभूमयो घन[४] सलिलानलानिलाऽऽकाशतमःप्रतिष्ठा महाकालाऽम्बरीषरौरवमहारौरवकालसूत्रान्धतामिस्राः । यत्रस्वकर्मोपार्जितदुःखवेदनाः[५] प्राणिनः कष्टमायुर्दीर्घमाक्षिप्य[६] जायन्ते ततो महातलरसातलाऽतलसुतलवितलतलाऽतलपातालाख्यानि सप्त पातालानि । भूमिरियमष्टमी सप्तद्वीपा वसुमती, यस्याः

---

टी० सङ्ग्रहश्लोकाऽन्तेन संक्षेपतः सप्तलोकानुपन्यस्य विस्तरेणाह—"तत्राऽवीचेः" इति । घन—शब्देन पृथिव्युच्यते । भूमिः = स्थानामि* त्यर्थः । एते महानरका अनेकोपनरकपरिवारा बोद्धव्याः । एतानेव नामाऽन्तरेणोपसंहरति—"महाकाल" इति ।

---

टि० (१) भुवनपदार्थमाह—"तत्प्रस्तार" इत्यादिना । तस्य भुवनस्य प्रस्तारः = विन्यासः सङ्क्षेपविस्तराभ्यामुच्यत इति शेषः । प्रस्ताव इति पाठान्तरम् । सङ्क्षेपेण तावदाह-"सप्तलोका" इति । लोकान् विभजते—"तत्रावीचेः" इति । अवीचिर्नाम नरकविशेषो, यतोऽधो नाऽन्यो लोक इति । †इत्येवेति, इत्येवम् इति चाऽपि श्लिष्टम् ।

(२) पञ्चविधस्वर्गाणामवान्तरभेदमाह—"माहेन्द्र" इति । भूर्भुवर्लोकाऽपेक्षया तृतीयो लोको माहेन्द्राऽऽख्य एक स्वर्गः । एवमेतल्लोकापेक्षया चतुर्थो महर्लोकः प्राजापत्याऽऽख्यो द्वितीयः स्वर्ग इत्यर्थः ।

(३) जनतपःसत्याख्यभूमित्रयोपेतो ब्रह्मलोकः । ततोऽधो, महान् = महरितिनामा प्रजापतिलोकः । ततोऽधः स्वारितिनामा माहेन्द्रलोकः । ततोऽधो द्यौर्लोको यत्र दिवि तारा वर्त्तन्ते । ततोऽधो भूर्लोको, यत्र भुवि प्रजा = मनुष्यादयो वर्त्तन्त इत्यर्थः । (४) घनशब्देन पार्थिवाः शिलाशकलशर्करादयो गृह्यन्ते । घनादीनामुत्तरोत्तराणां षण्णां यथाक्रममाधारभूता महाकालादयः षड् नरकभूमयो वर्त्तन्ते इत्यर्थः । (५) दुःखवेदनाः = दुःखभोगिनः ।

(६) कष्टं = दुःखफलकं दीर्घमायुराक्षिप्य = गृहीत्वा । *न तु नरक इति भावः ।

भा०सुमेरुर्मध्ये पर्वतराजः काञ्चनः। तस्य राजतवैदूर्य्यस्फटिक-हेममणिमयानि शृङ्गाणि[१]। तत्र वैदूर्य्यप्रभानुरागान्नीलोत्पल-पत्रश्यामो नभसो दक्षिणो भागः, श्वेतः पूर्वः, स्वच्छः पश्चिमः, कुरुण्डकाभ*उत्तरः।दक्षिणपार्श्वे चाऽस्य[२]जम्बूः।यतोऽयं जम्बू-द्वीपः।तस्य सूर्य्यप्रचाराद् रात्रिंदिवं लग्नमिव विवर्त्तते।तस्य[३] नीलश्वेतशृङ्गवन्त उदीचीनास्त्रयः पर्वता द्विसहस्राऽऽयामाः। तदन्तरेषु त्रीणि वर्षाणि नवनवयोजनसाहस्राणि– रमणकं हिरण्मयमुत्तराः कुरव इति। निषधहेमकूटहिमशैला दक्षिणतो द्विसहस्राऽऽयामाः,तदन्तरेषु त्रीणि वर्षाणि नवनवयोजनसाह-स्राणि–हरिवर्षं किम्पुरुषं भारतमिति । सुमेरोः[४] प्राचीना भद्राश्वा माल्यवत्सीमानः,प्रतीचीना केतुमाला गन्धमादनसी-मानः, मध्ये वर्षमिलावृतम्।तदेतद् योजनशतसहस्रं सुमेरो-

टी० तस्य सूर्य्यप्रचाराद् रात्रिंदिवं लग्नमिव विवर्त्तते।यमेवाऽस्य भागं सूर्य्य-स्त्यजति तत्र रात्रिः,यमेवभागमलङ्करोति तत्र दिनमित्यर्थः। सकलजम्बू-द्वीपपरिमाणमाह'तदेतद्योजनशतसहस्रम्'इति।किम्भूतंयोजनानां शतसह-

टि० (१) यथाक्रमं पूर्वदक्षिणपश्चिमोत्तरभागेषु वर्त्तन्त इति शेषः । (२) अस्य सुमेरो-रुपरि दक्षिणपार्श्वे जम्बूनामा वृक्षः, यतः=यन्नाम्नाऽयं जम्बूद्वीप इत्युच्यत इत्यर्थः ।

(३) तस्य सुमेरोः, उदीचीनाः=उत्तरस्यां दिशि विद्यमाना द्विसहस्रयोजनविस्तारा नीलादयस्त्रयः पर्वता वर्त्तन्ते तदन्तरेषु=तेषां पर्वतानामवकाशेषु प्रत्येकं नवसहस्रयोजनवि-स्ताराणि रम्यकादीनि त्रीणि वर्षाणि तिष्ठन्ति । तत्र नीलगिरिर्मेरूत्तरादिक्संलग्नो वर्त्तते, नीलस्योत्तरे भागे रमणकं वर्षं, श्वेतस्योत्तरे हिरण्मयं, शृङ्गवत उत्तरे समुद्रपर्य्यन्तमुत्तराः कुरव इत्यर्थः । एवं पुराणाऽनुसारेण दक्षिणदिश्यपि व्यवस्था बोध्या ।

(४) सुमेरोः पूर्वदिशि तत्संयुक्तो माल्यवान्नामपर्वतः । तमेव सीमानं कृत्वा समुद्रपर्य्य-न्ता भद्राश्वनामानो देशाः । एवं सुमेरोः पश्चिमदिशि तत्संयुक्तो गन्धमादननामा पर्वतः । तं सीमानं कृत्वा समुद्रपर्य्यन्ताः केतुमालनामानो देशा इत्यर्थः ।

* कुरुण्डकं=स्वर्णवर्णः पुष्पविशेषः ।

भा० दिशि दिशि तदर्द्धेन व्यूढम्। स खल्वयं शतसहस्राऽऽयामो जम्बूद्वीपस्ततो द्विगुणेन लवणोदधिना वलयाऽऽकृतिना वेष्टितः। ततश्च द्विगुणा द्विगुणाः शाककुशक्रौञ्चशाल्मलमगधपुष्करद्वीपाः सप्तसमुद्राश्च सर्षपराशिकल्पाः सविचित्रशैलाऽवंतसा इक्षुरससुरासर्पिर्दधिमण्डक्षीरस्वादूदकाः [१] सप्तसमुद्रवेष्टिता[२] वलयाऽऽकृतयोलोकाऽलोकपर्वतपरिवाराः पञ्चाशद्योजनकोटिपरिसङ्ख्याताः। तदेतत्सर्वं सुप्रतिष्ठितसंस्थानमण्डमध्ये व्यूढम्, अण्डं च प्रधानस्याऽणुरवयवो यथाकाशे खद्योतः। तत्र पाताले जलधौ पर्वतेष्वेतेषु देवनिकाया असुरगन्धर्वकिन्नरकिंपुरुषयक्षराक्षसभूतप्रेतपिशाचाऽपस्मारकाऽप्सरोब्रह्मराक्षसकूष्माण्डविनायकाः प्रतिवसन्ति। सर्वेषु द्वीपेषु पुण्यात्मानो देवमनुष्याः। सुमेरुस्त्रिदशानामुद्यानभूमिः। तत्र मिश्रवनं नन्दनं चैत्ररथं सुमानसमित्युद्यानानि। सुधर्मा देवसभा, सुदर्शनं पुरं,

टी० "स्रमित्याह-सुमेरोर्दिशि दिशि तदर्द्धेन व्यूढम्" इति। तदर्द्धेन= पञ्चाशता योजनसहस्रेण, व्यूढं=संक्षिप्तम्। यतोऽस्य मध्यस्थः सुमेरुः। सप्तसमुद्राश्चसर्षपराशिकल्पा द्विगुणा द्विगुणा इति संबन्धः। यथा सर्षपराशिर्न व्रीहिराशिरिवोच्छ्रितो नाऽपि भूमिसमस्तथा समुद्रा अमी इत्यर्थः। विचित्रैः शैलैरवतंसैरिव सह वर्त्तन्त इति सविचित्रशैलाऽवतंसा द्वीपाः। तदेतत्सर्वं सद्वीपविपिननगनगरनीरधिमालावलयंलोकाऽलोकपरिवृतं विश्वम्भरामण्डलं ब्रह्माण्डमध्ये व्यूढं संक्षिप्तं, सुप्रतिष्ठितं संस्थानं = सन्निवेशो यस्य तत्तथोक्तम्। ये यत्र प्रति वसन्ति तत्र तान् दर्शयति—"तत्र-पाताल" इति। सुमेरोः सन्निवेशमाह—"सुमेरुः" इति। तदेवं भूर्लोकं

टि० (१) वर्त्तन्त इति शेषः। सप्तसमुद्रा इत्यस्य विशेषणमिदम्।

(२) समुद्रादिसहितानां सप्तद्वीपानां समुच्चित्य प्रमाणमाह—"सप्तसमुद्र" इति। एते सप्तद्वीपाः सप्तसमुद्रसहिताः सप्तसमुद्राद् बहिःस्थितेन लोकालोकपर्वतेन परिवृताः पञ्चाशद्योजनकोटिपरिमिता इत्यर्थः।

भा० वैजयन्तः प्रासादः। ग्रहनक्षत्रतारकास्तु [1] ध्रुवे निबद्धा वायुविक्षेपनियमनोपलक्षितप्रचाराः सुमेरोरुपर्य्युपरि सन्निविष्टा विपरिवर्त्तन्ते। माहेन्द्रनिवासिनः षड् देवनिकायाः,—त्रिदशा अग्निष्वात्ता, याम्याः, तुषिता अपरिनिर्मितवशवर्त्तिनः, परिनिर्मितवशवर्त्तिनश्चेति। सर्वे सङ्कल्पसिद्धा अणिमाद्यैश्वर्य्योपपन्नाः कल्पायुषो वृन्दारकाः कामभोगिन औपपादिकदेहा उत्तमाऽनुकूलाभिरप्सरोभिः कृतपरिवाराः। महति लोके प्राजापत्ये पञ्चविधो देवनिकायः—कुमुदाः, ऋभवः, प्रतर्दना, अञ्जनाभाः, प्रचिताभा इति। एते महाभूतवशिनो ध्यानाऽऽहाराः कल्पसहस्त्रायुषः। प्रथमे ब्रह्मणो जनलोके चतुर्विधो देवनिकायो—ब्रह्मपुरोहिता ब्रह्मकायिका ब्रह्ममहाकायिका अमरा इति। एते भूतेन्द्रियवशिनः [2]। द्वितीये तपसि

---

टी० सप्रकारमुक्त्वा सप्रकारमेवाऽन्तरिक्षलोकमाह—"ग्रह" इति। विविक्षेपो = व्यापारः। स्वर्लोकमादर्शयति—"माहेन्द्रनिवासिन" इति। देवनिकायाः = देवजातयः। षण्णामपि देवनिकायानां रूपोत्कर्षमाह—"सर्वे सङ्कल्पसिद्धा" इति। सङ्कल्पमात्रादेवैषां विषया उपनमन्ति। वृन्दारकाः = पूज्याः, कामभोगिनो = मैथुनप्रिया, औपपादिकदेहाः = पित्रोः संयोगमन्तरेणाऽकस्मादेव दिव्यशरीरमेषां धर्मविशेषाऽतिसंस्कृतेभ्यो ऽणुभ्यो, भवतीति। महर्लोकमाह—"महति" इति। महाभूतवशिनः = यद् यदेतेभ्यो रोचते तत्तदेव महाभूतानि प्रयच्छन्ति। तदिच्छातश्च महाभूतानि तेन तेन संस्थानेनाऽवतिष्ठन्ते। ध्यानाहाराः = ध्यानमात्रतृप्ताः पुष्टा भवन्ति। जनलोकमाह-"प्रथम" इति। उक्तक्रमेण [3] "भूतेन्द्रियवशिन"

---

टि० (१) ग्रहाः सूर्य्यादयः, नक्षत्राणि अश्विन्यादीनि, तारका इतराणि क्षुद्रज्योतींषि। एते ग्रहादयो मेढिकाष्ठवन्निश्चलतया स्थिते ध्रुवसञ्ज्ञके ज्योतिषि वायुरज्ज्वा बद्धा वायोः प्रातिनियतसञ्चारेण लब्धप्रचारा भुवर्लोके गात्र इव भ्रमन्तीत्यर्थः।

(२) भूतेन्द्रियवशिन इत्यस्याऽग्रे द्विगुणद्विगुणोत्तराऽऽयुष इति पाठो यद्यपि केषुचित्पुस्तकेषूपलभ्यते तथाऽपि वाचस्पत्यानुरोधान्नोपन्यस्तः। ब्रह्मलोकस्थितानामायुः पूर्वोक्ताऽऽकल्पसहस्राद् द्विगुणं, तदुत्तरस्य तद्द्विगुणमिति च तदर्थ इति विज्ञानभिक्षुः।

(३) तद् यथा जनलोक इत्याद्युक्तक्रमेण प्रथमे ब्रह्मलोकभेदे जनलोके इत्यर्थः।

भा० लोके त्रिविधो देवनिकायः—अभास्वरा, महाभास्वरा, सत्यमहाभास्वरा इति । एते भूतेन्द्रियप्रकृतिवशिनो द्विगुणद्विगुणोत्तरायुषः सर्वे ध्याना ऽऽहारा ऊर्द्ध्वरेतस*ऊर्द्ध्वमप्रतिहतज्ञाना अधरभूमिष्वनावृतज्ञानविषयाः । तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकायाः-अच्युताः, शुद्धनिवासाः, सत्याभाः, सञ्ज्ञासञ्ज्ञिनश्चेति । अकृतभवनन्यासाः स्वप्रतिष्ठा उपर्य्युपरिस्थिताः प्रधानवशिनो यावत्सर्गायुषः । तत्रा ऽच्युताः-सवितर्कध्यानसुखाः शुद्धनिवासाः-सविचारध्यानसुखाः, सत्याभा—आनन्दमात्रध्यानसुखाः,

---

टी० इति । भूतानि पृथिव्यादीनि इन्द्रियाणि = श्रोत्रादीनि यथा नियोक्तुमिच्छन्ति तथैव नियुज्यन्ते । उक्तक्रमाऽपेक्षया द्वितीयं ब्रह्मणस्तपोलोकमाह-"द्वितीय" इति । "भूतेन्द्रियप्रकृतिवशिन" इति । प्रकृतिः = पञ्चतन्मात्राणि तद्वशिनः, तादिच्छातो हि तन्मात्राण्येव कायाऽऽकारेण परिणमन्त इत्यागमिकाः । "द्विगुण" इति । आभास्वरेभ्यो द्विगुणाऽऽयुषो महाभास्वराः, तेभ्योऽपि द्विगुणायुषः सत्यमहाभास्वरा इत्यर्थः । "ऊर्द्ध्वम्" इति । ऊर्द्ध्वं सत्यलोके अप्रतिहतज्ञानाः । अवीचेस्तु(१) प्रभृति आ तपोलोकं सूक्ष्मव्यवहितादि सर्वं विजानन्तीत्यर्थः । तृतीयं ब्रह्मणो लोकमाह—"तृतीय" इति । अकृतो भवनस्य = गृहस्य न्यासो यैस्ते तथोक्ता, आधाराऽभावादेव स्वप्रतिष्ठाः, = स्वेषु शरीरेषु प्रतिष्ठा येषां ते तथोक्ताः । प्रधानवशिनः = तादिच्छातः सत्त्वरजस्तमांसि प्रवर्तन्ते । यावत्सर्गायुषः = तथाच श्रूयते— "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे । परस्याऽन्ते कृताऽत्मानः प्रविशन्ति परम्पदम्" इति । तदेवं चतुर्णां देवनिकायानां साधारणधर्मानुक्त्वा नामविशेषग्रहणेन धर्मविशेषानाह—"तत्र" इति । अच्युता नाम देवाः स्थूलविषयध्यानसुखाः । तेन ते तृप्यन्ति । शुद्धनिवासा नाम देवाः सूक्ष्मविषयध्यानसुखाः । तेन ते तृप्यन्ति । सत्याभा नाम देवा इन्द्रियविषयध्यानसुखाः । तेन ते

---

टि० (१) अधरभूमिष्वनावृतज्ञानविषया इति भाष्यस्याऽर्थमाह—"अर्वाचेः" इति ।

* अस्खलितवीर्य्याः ।

भा० सञ्ज्ञासञ्ज्ञिनश्चाऽस्मितामात्रध्यानसुखाः।तेऽपि त्रैलोक्य-मध्ये प्रतितिष्ठन्ति(१), त एते सप्तलोका सर्वे एव ब्रह्मलोकाः(२)। विदेहप्रकृतिलयास्तु मोक्षपदे वर्त्तन्ते न लोकमध्ये न्यस्ता इति। एतद् योगिना साक्षात्कर्त्तव्यं सूर्य्यद्वारे संयमं कृत्वा, ततोऽन्य-त्रापि(३)। एवन्तावदभ्यसेद् यावदिदं सर्वं दृष्टमिति ॥ २६ ॥

सू० चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥

भा० चन्द्रे संयमं कृत्वा ताराव्यूहं * विजानीयाद् ॥ २७ ॥

सू० ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥

---

टी० तृप्यन्ति। सञ्ज्ञासञ्ज्ञिनो नाम देवा अस्मितामात्रध्यानसुखाः।तेन ते तृप्यन्ति। ते एते सर्वे संप्रज्ञातसमाधिमुपासते। अथाऽसम्प्रज्ञातसमाधि-निष्ठा विदेहप्रकृतिलयाः कस्मान्न लोकमध्ये न्यस्यन्त इत्यत आह—"विदेह-प्रकृतिलयास्तु" इति। बुद्धिवृत्तिमन्तो हि दर्शितविषया लोकयात्रां वहन्तो लोकेषु वर्त्तन्ते, न चैवं विदेहप्रकृतिलयाः सत्यपि साऽधिकारत्व इत्यर्थः। तदेतद् आसत्यलोकम् आ चाऽवीचेर्योगिना साक्षात्करणीयं, सूर्य्यद्वारे=सु-षुम्नायां नाड्याम्। नचैतावताऽपि तत्साक्षात्कारो भवतीत्यत आह-"तत" इति। ततोऽन्यत्रापि=सुषुम्नाया अन्यत्रापि† योगोपाध्यायोपदिष्टेषु। 'या-वदिदं सर्वं = जगद्दृष्टम्' इति। बुद्धिसत्त्वं हि स्वभावत एव विश्वप्रका-शनसमर्थं तमोमलावृतं यत्रैव रजसोद्घाट्यते तदेव प्रकाशयति, सूर्य्यद्वा-रसंयमोद्घाटितं भुवनं प्रकाशयति। न चैवमन्यत्राऽपि प्रसङ्गः। तत्संयमस्य तावन्मात्रोद्घाटनसामर्थ्यादिति सर्वमवदातम् ॥ २६ ॥

---

टि० (१) ते=एते अच्युतादयश्चत्वारोऽपि ब्रह्माण्डमध्य एव तिष्ठन्ति न ब्रह्माण्डाद् बहिरि-त्यर्थः। एते न मुक्ता इति भावः।

(२) हिरण्यगर्भस्य लिङ्गदेहेन सर्वलोकव्यापनाद् वस्तुतः सर्वे एव लोका ब्रह्मलोका इत्यर्थः। * व्यूहः=सन्निवेशविशेषः।

(३) ततः=सूर्य्यद्वारादन्यत्राऽपि संयमं कृत्वा साक्षात्करणीयमित्यर्थः। संयमाऽवधिमाह "एवम्" इति। † अन्यत्रेत्यस्यार्थमाह—"योगोपाध्याय" इति।

भा० ततो ध्रुवे संयमं कृत्वा ताराणां गतिं[१] जानीयात् । ऊर्ध्वविमानेषु[२] कृतसंयमस्तानि विजानीयात् ॥ २८ ॥

सू० नाभिचक्रे कायव्यूहज्ञानम् ॥ २९ ॥

भा० नाभिचक्रे संयमं कृत्वा कायव्यूहं[३] विजानीयात्। वातपित्तश्लेष्माणस्त्रयो दोषाः सन्ति, धातवः सप्त—त्वग्लोहितमांसस्नाय्वस्थिमज्जाशुक्राणि, पूर्वं पूर्वमेषां बाह्यमि[४]त्येष विन्यासः। २९।

सू० कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥

भा० जिह्वाया अधस्तात् तन्तुः, ततोऽधस्तात् कण्ठः, ततोऽधस्तात्कूपः। तत्र संयमात् क्षुत्पिपासे न बाधेते ॥ ३० ॥

सू० कूर्मनाड्यां स्थैर्य्यम् ॥ ३१ ॥

भा० कूपादध उरसि कूर्माऽऽकारा नाडी, तस्यां कृतसंयमः स्थिरपदं लभते। यथा सर्पो गोधा वेति[५] ॥ ३१ ॥

---

टी० तत्र तत्र जिज्ञासायां योगिनस्तत्र तत्र संयमः। एवं क्षुत्पिपासानिवृत्तिहेतुः संयमः स्थैर्य्यहेतुश्च संयमः सूत्रपदैरुपादिष्टो भाष्येण च निगदव्याख्यातेन व्याख्यात इति न व्याख्यातः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥

---

टि० (१) इयता कालेनामुं राशिमिदं नक्षत्रं यास्यतीत्यादिकां गतिमित्यर्थः ।

(२) ऊर्द्ध्वविमानेषु = आदित्यादिरथेष्वित्यर्थः । तानि = आदित्यादिरथानीत्यर्थः ।

(३) कायव्यूहं = कायस्थपदार्थानां विन्यासविशेषमित्यर्थः। तमेव विन्यासविशेषमाह "वातपित्त" इत्यादिना ।

(४) शुक्राद् मज्जा बाह्या, मज्जातोऽस्थीनीत्येवं पूर्वं पूर्वं बाह्यमित्यर्थः ।

(५) कुण्डलितसर्पवदवस्थिततया कूर्माकारं हृदयपुण्डरीकाख्यं नाडीचक्रम् । तत्र कृतसंयमो योगी स्थिरपदं = स्थिरां चित्तवृत्तिं लभत इत्यर्थः । नाड्याः कूर्माऽऽकारत्वे दृष्टान्तद्वयं "यथा सर्पो, गोधा वा" इति। कुण्डलित इति। शेष इति विज्ञानभिक्षुः। गोधायाः कुण्डलितत्वाऽभावात् स्थिरपद एव निदर्शनद्वयं कथञ्चिद् व्याख्येयमिति तु युक्तमवैमि।

**सू० मूर्द्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥**

भा० शिरःकपालेऽन्तश्छिद्रं प्रभास्वरं ज्योतिः, तत्र संयमात्[१] सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनम् ॥ ३२ ॥

**सू० प्रातिभाद्वा सर्वम् ॥ ३३ ॥**

भा० प्रातिभं नाम तारकं, तद्विवेकजस्य ज्ञानस्य पूर्वरूपं, यथोदये प्रभा भास्करस्य[२] तेन वा सर्वमेव जानाति योगी प्रातिभस्य ज्ञानस्योत्पत्ताविति ॥ ३३ ॥

**सू० हृदये चित्तसंविद् ॥ ३४ ॥**

भा० यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म तत्र विज्ञानं तस्मिन् संयमाच्चित्तसंविद् ॥ ३४ ॥

---

टी० सू० "मूर्द्धज्योतिषि सिद्धदर्शनम्" ॥ ३२ ॥ मूर्द्धशब्देन सुषुम्ना नाम नाडी लक्ष्यते, 'तत्र संयम इति' ❀ ॥ ३२ ॥

सू० "प्रातिभाद्वा सर्वं ॥ ३३ ॥ प्रतिभा = ऊहः, तद्भवं प्रातिभं, प्रसङ्ख्यानहेतुसंयमवतो हि तत्प्रकर्षे प्रसङ्ख्यानोदयपूर्वलिङ्गं यदूहजं ज्ञानं तेन सर्वं विजानाति योगी, तच्च प्रसङ्ख्यानसंन्निधापनेन संसारात्तारयतीति तारकम् ॥ ३३ ॥

सू० "हृदये चित्तसंविद्" ॥ ३४ ॥ हृदयपदं व्याचष्टे—"यदिदमस्मिन् ब्रह्मपुरे" इति । बृहत्त्वादात्मा ब्रह्म तस्य पुरं निलयः। तद्धि तत्र विजानाति स्वमिति। दहरं = गर्त्तं तदेव पुण्डरीकमधोमुखं वेश्म मनसः । चित्तसंवेदनत्वे हेतुमाह—"तत्र विज्ञानम्" इति । तत्र संयमाच्चित्तं विजानाति स्ववृत्तिविशिष्टम् ॥ ३४ ॥

---

टि० (१) शिरःकपालमध्ये यच्छिद्रं तच्छिद्रस्याऽन्तर्यत्प्रभास्वरं ज्योतिस्तत्र संयमादित्यर्थः ।

(२) यथा सूर्योदयस्य पूर्वलिङ्गं प्रभा तद्वत् प्रसङ्ख्यानस्य पूर्वलिङ्गं प्रातिभं ज्ञानमित्यर्थः । स्वप्रतिभोत्थमनौपदेशिकं ज्ञानं प्रातिभमित्युच्यते इति बोध्यम् ।❀ न सार्वत्रिकः ।

सू०सत्त्वपुरुषयोरत्यन्ताऽसङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थत्वात् स्वाऽर्थसंयमात् पुरुषज्ञानम्॥३५॥

भा०बुद्धिसत्त्वं प्रख्याशीलं समानसत्त्वोपनिबन्धने रजस्तमसी वशीकृत्य सत्त्वपुरुषाऽन्यताप्रत्ययेन परिणतम्। तस्माच्च सत्त्वात्परिणामिनोऽत्यन्तविधर्मा शुद्धोऽन्यश्चितिमात्ररूपः पुरुषः। तयोरत्यन्ताऽसङ्कीर्णयोः प्रत्ययाऽविशेषो भोगः पुरुषस्य। दर्शितविषयत्वात्-

टी०सू० "सत्त्व-ज्ञानम्।३५।यत्र[१]प्रकाशरूपस्याऽतिस्वच्छस्य नितान्ताभिभूतरजस्तमस्तया विवेकख्यातिरूपेण परिणतस्य बुद्धिसत्त्वस्याऽऽत्यन्तिकश्चैतन्यादसङ्करस्तत्र कैव कथा रजस्तमसोर्जडस्वभावयोरित्याशयवान् सूत्रकारः सत्त्वपुरुषयोरित्युवाच। इममेवाऽभिप्रायं गृहीत्वा भाष्यकारोऽप्याह—"बुद्धिसत्त्वम्प्रख्याशीलम्" इति। न प्रख्याशीलमात्रमपि तु विवेकख्यातिरूपेणपरिणतम्। अतो नितान्तशुद्धप्रकाशतयाऽत्यन्तसारूप्यं चैतन्येनेति सङ्कर इत्याह*"समान" इति। सत्त्वेनोपनिबन्धनम् = अविनाभावः सम्बन्धः। समानं सत्त्वोपनिबन्धनं ययो रजस्तमसोस्ते तथोक्ते। वशीकारः = अभिभवः, । असङ्करमाह—"तस्माच्च" इति। चकारोऽप्यर्थकः। न केवलं रजस्तमोभ्यामित्यर्थः[२]। 'परिणामिनः, इति वैधर्म्यमपरिणामिनः पुरुषादुक्तम्। प्रत्ययाऽविशेषः = शान्तघोरमूढरूपाया बुद्धेश्चैतन्याबिम्बोद्ग्राहेण चैतन्यस्य शान्ताद्याऽऽकाराऽध्यारोपः, चन्द्रमस इव स्वच्छसलिलप्रतिबिम्बितस्य तत्कम्पनात् कम्पनाऽऽरोपः। भोगहेतुमाह—"दर्शितविषयत्वाद्" इति। असकृद् व्याख्यातम्। ननु बुद्धिसत्त्वमस्तु पुरुषभिन्नं, भोगस्तु पुंसः कुतो भिद्यते इत्यत आह

टि० (१) बुद्धिपुरुषयोरित्यनुक्त्वा सत्त्वपुरुषयोरिति वदतः सूत्रकारस्याऽभिप्रायमाह "यत्र" इत्यादि। *'इत्यत आह' इति पाठान्तरं तु चित्तमुद्वेजयति।

(२) न केवलं रजस्तमोभ्यामसङ्कीर्णः पुरुषोऽपि तु यद्बुद्धिसत्त्वं सत्त्वपुरुषाऽन्यतारूपेण परिणतं तस्मादपि बुद्धिसत्त्वात्परिणामिनो भिन्नः पुरुष इत्यर्थः।

भा० स भोगप्रत्ययः सत्त्वस्य परार्थत्वाद् दृश्यः। यस्तु तस्माद्विशिष्टश्चितिमात्ररूपोऽन्यः पौरुषेयः प्रत्ययस्तत्र संयमात्पुरुषविषया प्रज्ञा जायते। न च पुरुषप्रत्ययेन बुद्धिसत्त्वाऽऽत्मना पुरुषो दृश्यते। पुरुष एव प्रत्ययं स्वात्मावलम्बनं पश्यति। तथा-ह्युक्तं,—"विज्ञातारमरे केन विजानीयाद्" इति ॥ ३५ ॥

सू० ततः(१)प्रातिभश्रावणवेदनाऽऽदर्शाऽऽस्वादवार्ता जायन्ते ॥ ३६ ॥

टी० "स" इति, स भोगप्रत्ययः = भोगरूपःप्रत्ययः सत्त्वस्य। अतः परार्थत्वाद् दृश्यो भोगः। सत्त्वं हि परार्थं संहतत्वात्, तद्धर्मश्च भोग इति सोऽपि परार्थः, यस्मै च परस्मा असौ तस्य भोक्तुर्भोगः, अथवाऽनुकूलप्रतिकूलवेदनीयो हि सुखदुःखाऽनुभवो भोगः। नचाऽयमात्मानमेवाऽनुकूलयति, प्रतिकूलयति वा। स्वात्मनि वृत्तिविरोधात्। अतोऽनुकूलनीयप्रतिकूलनीयार्थो भोगः। स भोक्ता आत्मा। तस्य दृश्यो भोग इति। यस्तु तस्मात्परार्थाद्विशिष्ट इति = परार्थादिति पञ्चम्यन्यपदाऽध्याहारेण व्याख्याता। स्यादेतत्, पुरुषविषया चेत्प्रज्ञा हन्तभोः पुरुषः प्रज्ञायाः प्रज्ञेय इति प्रज्ञान्तरमेव तत्र तत्रेत्यनवस्थापात इत्यत आह—"नच पुरुषप्रत्ययेन" इति। अयमभिसन्धिः। चित्या जडः प्रकाश्यते, न जडेन चितिः। पुरुषप्रत्ययस्त्वचिदात्मा कथं चिदात्मानं प्रकाशयेत्। चिदात्मा त्वपराधीनप्रकाशो जडं प्रकाशयतीति युक्तम्। बुद्धिसत्त्वात्मना—इत्यचिद्रूपतादात्म्येन जडत्वमाह। बुद्धिसत्त्वगतपुरुषप्रतिबिम्बाऽऽलम्बनात्पुरुषालम्बनं, दर्पणवन्मुखाऽऽलम्बनं*न तु पुरुषप्रकाशनात्पुरुषाऽऽलम्बनम्। बुद्धिसत्त्वमेव तु तेन प्रत्ययेन संक्रान्तपुरुषप्रतिबिम्बं पुरुषच्छायापन्नं चैतन्यमालम्बत इति पुरुषार्थः। अत्रैव श्रुतिमुदाहरति-"तथा ह्युक्तम्" इति। ईश्वरेण। "विज्ञातारम्" इति। न केनचिदित्यर्थः ॥ ३५ ॥ स च स्वार्थसंयमो न यावत्प्रधानं स्वकार्य्यं पुरुषज्ञानमभिनिर्वर्त्तयति तावत्, तस्य पुरस्ताद् या विभूतीराधत्ते ताः सर्वा दर्शयति—सू० "ततः जायन्ते" ॥ ३६ ॥

* क्वाचित्कमप्यमुमुचितःवान्न्यवीविशम्।

टि० (१) ततः=अभ्यस्यमानात्स्वार्थसंयमाद्, व्युत्थानकालेऽपि योगिनः प्रातिभादिसञ्ज्ञिकाः

भा० प्रातिभात्सूक्ष्मव्यवहितविप्रकृष्टाऽतीताऽनागतज्ञानं, श्रावणाद् दिव्यशब्दश्रवणं, वेदनाद् दिव्यस्पर्शाऽधिगमः, आदर्शाद् दिव्यरूपसंविद्, आस्वादाद् दिव्यरससंविद्, वार्त्तातो दिव्यगन्धविज्ञानम्, इत्येतानि नित्यं जायन्ते ॥ ३६ ॥

सू० ते समाधावुपसर्गा(१) व्युत्थाने सिद्धयः ॥३७॥

भा० ते प्रातिभादयः समाहितचित्तस्योत्पद्यमाना उपसर्गाः। तद्दर्शनप्रत्यनीकत्वाद्(२), व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः ॥ ३७॥

टी० तदनेन योगजधर्माऽनुगृहीतानां मनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानां यथासंख्यं प्रातिभज्ञानदिव्यशब्दाद्यपरोक्षहेतुभाव उक्तः । श्रोत्रादीनां पञ्चानां दिव्यशब्दाद्युपलम्भकानां तान्त्रिक्यः सञ्ज्ञाः श्रावणाद्याः । सुगमं भाष्यम् ॥३६॥ कदाचिदात्मविषयसंयमप्रवृत्तस्तत्प्रभावादमूरर्थान्तरासिद्धीराधिगम्य कृतार्थम्मन्यः संयमाद्विरमेदत आह—"ते समाधावुपसर्गा व्युत्थाने सिद्धयः" ॥ ३७ ॥ व्युत्थितचित्तो हि ताः सिद्धीरभिमन्यते जन्मदुर्गत इव द्रविणकणिकामपि*द्रविणसम्भारम्†योगिना तु समाहितचित्तेनोपनताभ्योऽपि ताभ्यो विरन्तव्यम् । अभिसंहिततापत्रयाऽऽत्यन्तिकोपशमरूपपरमपुरुषार्थः(३) स खल्वयं कथं तत्प्रत्यनीकासु सिद्धिषु रज्येतेति सूत्रभाष्ययोरर्थः ॥ ३७ ॥

टि० सिद्धयो भवन्तीत्यर्थः । तत्र मनसोऽतीताऽनागतविप्रकृष्टव्यवहितसूक्ष्मपदार्थज्ञानसामर्थ्यं प्रातिभमित्युच्यते। एवं श्रोत्रस्य दिव्यशब्दश्रवणसामर्थ्यं श्रावणमित्युच्यते । एवमग्रेऽपि त्वगादीनां तत्तत्सामर्थ्यं वेदनादिपदेनोच्यते इति। यत्तु विज्ञानभिक्षुणा तत इत्यस्य पुरुषसाक्षात्कारादित्यर्थ इत्युक्तम्।तन्मन्दम्,तद्दर्शनप्रत्यनीकत्वादित्यागामिसूत्रेभाष्येप्रातिभादीनांपुरुषदर्शनप्रतिबन्धकत्ववचनात्प्रातिभादीनां साक्षात्कारफलत्वस्याऽयुक्तत्वाद्। न हि यद् यस्य प्रतिबन्धकं तत् तस्य फलमिति त्वदन्यः कश्चिड्डिम्भोऽप्यभ्युपैति। यत्तु चकाराद्यभावेन नेदं स्वार्थसंयमफलं सिद्ध्यन्तरमिति, तदपि न।अध्याहारेण तथार्थकरणे प्रत्यवायाऽभावाद् । विनाऽपि चकारम्. "अहरहर्नयमानो गामश्वं पुरुषं पशुम्" इत्यादौ समुच्चयस्य दृष्टत्वाच्च। तस्मात्पूर्वोक्तसंयमस्यैवेदं पुरुषसाक्षात्कारात्प्राक्तनं सिद्ध्यन्तरमिति वाचस्पत्यमेव सूत्राऽवतरणं शोभनमित्यलं बहुना ।

(१) उपसर्गाः=विघ्नाः । (२) तस्य समाहितचित्तस्य यद्दर्शनं पुरुषसाक्षात्कारस्तत्प्रतिबन्धकत्वादित्यर्थः । (३) अभिसंहितः=अभिलषितो दुःखत्रयाऽऽत्यन्तिकनिवृत्तिरूपः परमपुरुषार्थो येन स तथोक्तः । * धनलेशम् । † धनराशिम् ।

सू० बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीराऽऽवेशः ॥ ३८ ॥

भा० लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयवशाद्बन्धः प्रतिष्ठेत्यर्थः[१], तस्य कर्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद् भवति प्रचारसंवेदनं च चित्तस्य समाधिजमेव। कर्मबन्धक्षयात् स्वचित्तस्य प्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति, निक्षिप्तं चित्तं चेन्द्रियाण्यनुपतन्ति, यथा मधुकरराजानं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनुनिविशन्ते तथेन्द्रियाणि परशरीराऽऽवेशे चित्तमनुविधीयन्त इति ॥ ३८ ॥

टी० तदेवं ज्ञानरूपमैश्वर्य्यं पुरुषदर्शनान्तं संयमफलमुक्त्वा क्रियारूपमैश्वर्य्यं संयमफलमाह-"बन्धकारण-आवेशः"॥ ३८॥ 'समाधिबलाद्' इति । बन्धकारणविषयसंयमबलात्[२] । प्राधान्यात्समाधिग्रहणम् । प्रचरत्यनेनाऽस्मिन्निति प्रचारः, चित्तस्य गमाऽऽगमाऽध्वानो नाड्यः। तस्मिन् प्रचारे संयमात्तद्वेदनं, तस्माच्च[३]। बन्धकारणशैथिल्यान्न तेन प्रतिबद्ध्यते, अप्रतिबद्धमप्युन्मार्गेण गच्छन्न स्वशरीरादप्रत्यूहं निष्क्रामति, न च परशरीरमाविशति। तस्मात्तत्प्रचारोऽपि ज्ञातव्यः।इन्द्रियाणि च चित्ताऽनुसारीणि परशरीरे यथाऽधिष्ठानं निविशन्ते इति ॥ ३८ ॥

टि०(१)लोलीभूतस्य = चञ्चलस्वभावस्याऽत एवैकत्राऽप्रतिष्ठस्य मनसो धर्माऽधर्मवशाद् एकस्मिन्नेव शरीरे या प्रतिष्ठा स बन्ध इत्यर्थः ।

(२) समाधिबलादित्यस्यार्थमाह "बन्ध" इति बन्धस्य कारणं यददृष्टं तद्विषयो यः संयमस्तद्बलादित्यर्थः । ननु भाष्ये संयमबलादित्यनुक्त्वा समाधिबलादित्येव कथमुक्तं तत्राऽऽह "प्राधान्याद्" इति । धारणाध्याने अन्तरा समाधेरलाभात् समाधिशब्देन तयोरपि ग्रहणसम्भव इति भावः ।

(३) चकारः पूर्वोक्तादृष्टविषयकसंयमसमुच्चायकः । परशरीरावेशे साध्य उभयोः संयमयोः समुच्चय एव न तु विकल्प इत्याशयेनाह" बन्धकारण" इति। अनेनादृष्टसंयमफलमुक्तम् । प्रचारसंयमफलमाह, "अप्रतिबद्धम्" इत्यादिना ।

**सू० उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९॥**

**भा० समस्तेन्द्रियवृत्तिः प्राणादिलक्षणा जीवनं, तस्य क्रिया पञ्चतयी =प्राणो मुखनासिकागतिराहृदयवृत्तिः, समं नयनात्समानश्चाऽऽनाभिवृत्तिः, अपनयनादपान आपादतलवृत्तिः, उन्नयनादुदान आशिरोवृत्तिः, व्यापी व्यान इति। तेषां प्रधानः प्राणः ।**

टी० "उदान—श्च"॥३९॥समस्तेन्द्रियवृत्तिर्जीवनं(१) प्राणादिलक्षणा=प्राणादयो लक्षणं यस्याः सा तथोक्ता द्वयीन्द्रियाणां वृत्तिर्बाह्याऽऽभ्यन्तरी च। बाह्या रूपाद्यालोचनलक्षणा, आभ्यन्तरी तु जीवनम्। स हि प्रयत्नभेदःशारीरोपगृहीतमारुतक्रियभेदहेतुः सर्वकरणसाधारणः।यथाहुः-"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च "इति। तैरस्य लक्षणीयत्वात्। तस्य = प्रयत्नस्य, क्रिया = कार्य्यं पञ्चतयी। प्राण आ नासिकाऽग्रादा च हृदयादवस्थितः । अशितपीताहारपरिणतिभेदं रसं तत्र तत्र स्थाने समम् = अनुरूपं नयन् समान,आ हृदयादा च नाभेरस्य स्थानम्। मूत्रपुरीषगर्भादीनामपनयनहेतुरपान, आ नाभेरा च पादतलादस्य वृत्तिः । उन्नयनाद् = ऊर्ध्वनयनाद् रसादीनामुदान, आ नासिकाऽग्रादा च शिरसो वृत्तिरस्य। व्यापी व्यानः ।एषामुक्तानां प्रधानं प्राणः, तदुत्क्रमे सर्वोत्क्रमश्रुतेः-"प्राणमुत्क्रामन्तमनु सर्वे प्राणा उत्क्रामन्ति"इति।तदेवं प्राणादीनां क्रियास्थानभेदेनभेदं

---

टि० (१) अत्र समस्तेन्द्रियशब्देनाऽन्तःकरणत्रयमेव गृह्यते, न तु बाह्येन्द्रियाण्यपि । सुषुप्तौ चक्षुराद्यपगमेऽपि प्राणव्यापारदर्शनाद्। अत एव कपिलाचार्य्यैरीश्वरकृष्णैश्चाऽन्तःकरणप्रस्तावे "त्रयाणां स्वालक्षण्यम्" इत्यनेनाऽसाधारणीरध्यवसायादिवृत्तीर्यथायथमुक्त्वा "सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च" इत्यभिहितम्। एतेन समस्तेन्द्रियशब्देन बाह्याभ्यन्तरोभयेन्द्रियग्रहणं वदन् विज्ञानभिक्षुर्गलहस्तितो वेदितव्यः । किञ्च "सामान्यकरणवृत्तिरिति" सूत्रव्याख्याने 'अन्तःकरणत्रयस्य साधारणी वृत्तिः प्राणादिः' इत्युक्त्वा, अत्र तद्विरुद्धं वदन् कथमात्मानं टीककं मन्यते इति स एव वाच्यः ।

भा० उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग, उत्क्रान्तिश्च प्रायणकाले भवति, तां वशित्वेन[1] प्रतिपद्यते ॥ ३९ ॥

सू० समानजयाज्ज्वलनम् ॥ ४० ॥

भा० जितसमानस्तेजस उपध्मानं कृत्वा ज्वलति[2] ॥ ४० ॥

सू० श्रोत्राऽऽकाशयोः संबन्धसंयमाद् दिव्यं श्रोत्रम् ॥ ४१ ॥

भा० सर्वश्रोत्राणामाकाशं प्रतिष्ठा, सर्वशब्दानां च। यथोक्तं "तुल्य-

टी० तदेवं प्राणादीनां क्रियास्थानभेदेन भेदं प्रतिपाद्य सूत्रार्थमवतारयति—"उदानजयाद्" इति। उदाने कृतसंयमस्तज्जयाज्जलादिभिर्न प्रतिहन्यते, उत्क्रान्तिश्चाऽर्चिरादिमार्गेण भवति प्रयाणकाले। तस्मात्तामुत्क्रान्तिं वशित्वेन प्रतिपद्यते। प्राणादिसंयमात्तद्विजये विभूतय एताः क्रियास्थानविजयादिभेदात् प्रतिपत्तव्याः ॥ ३९ ॥

०"समान—म्"॥तेजसः शारीरस्योपध्मानम् = उत्तेजनम् ॥ ४० ॥

स्वार्थसंयमादन्वाचयशिष्टं *श्रावणाद्युक्तम्। सम्प्रति श्रावणाद्यर्थादेव संयमाच्छ्रावणादि भवतीत्याह—"श्रोत्र—श्रोत्रम्" ॥४१॥ संयमविषयं श्रोत्राऽऽकाशयोः सबन्धमाधाराऽऽधेयभावमाह-"सर्व" इति । सर्वश्रोत्राणामाहङ्कारिकाणामप्याकाशं = कर्णशष्कुलीविवरं प्रतिष्ठा, तदायतनं श्रोत्रम्। तदुपकाराऽपकाराभ्यां[3] श्रोत्रस्योपकाराऽपकारदर्शनात्। शब्दानां च श्रोत्रसहकारिणाम्[4]। पार्थिवादिशब्दग्रहणे कर्त्तव्ये कर्णशष्कुलीसुषिरवर्त्ति श्रोत्रं

टि० (१) वशित्वेन=उदानसंयमाज्जितोदानत्वेन, ताम् = आर्चिरादिमार्गेणोर्ध्वोत्क्रान्तिं, प्रतिपद्यते = लभत इत्यर्थः। उदानवशित्वं विना नोर्ध्वोत्क्रमणं भवत्यत उदानजयी स्यादिति भावः।

(२) ज्वलति = सतीवत् स्वशरीरं दहतीत्यर्थ इत्येके। केचित्तु—अग्निमावेष्टय व्यवस्थितस्य समानाऽऽख्यस्य प्राणस्य वशीकरणेनाऽग्नेर्निरावरणत्वसम्पादनात्तेजसा प्रज्वलन्निव योगी प्रतिभातीत्याहुः। (३) श्रोत्रस्याऽऽहङ्कारिकत्वात् कथमाकाशाऽऽयतनत्वमित्यत आह—"तदुपकाराऽपकाराभ्याम्" इति । (४) श्रोत्रसहकारिणां शब्दानामपि आकाशं प्रतिष्ठेत्यर्थः। प्रतिष्ठात्वमुपपादयति "पार्थिवादि" इत्यादिना । * इतरफलेनोद्देश्येन सहानुशिष्टत्वेनाऽऽनुषाङ्गिकम् ।

भा० देशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति" इति।तच्चैतदाकाशस्य लिङ्गमनावरणं चोक्तम्। तथाऽमूर्त्तस्यानावरणादर्शना-

टी० स्वाश्रय—नभो—गताऽसाधारणशब्दमेपक्षते, गन्धादिगुण (१)सहकारिभिर्घ्राणादिभिर्बाह्ये पृथिव्यादिवर्त्तिगन्धाद्यालोचने कार्य्ये दृष्टम्। आहङ्कारिकमपि घ्राणरसनत्वक्चक्षुःश्रोत्रं भूताऽधिष्ठानमेव भूतोपकाराऽपकाराभ्यां घ्राणादीनामुपकाराऽपकारदर्शनादित्युक्तम्। तच्चेदं श्रोत्रमाहङ्कारिकमयःप्रतिममयस्कान्तमणिकल्पेन वक्तृवक्त्रसमुत्पन्नेन वक्त्रस्थेनशब्देनाकृष्टं स्ववृत्तिपरम्परया वक्तृवक्त्रमागतं शब्दमालोचयति। तथाच दिग्देशवृत्तिशब्दप्रतीतिः प्राणभृन्मात्रस्य नासतिबाधके प्रमाणीकृता भविष्यतीति। तथाच पञ्चशिखस्य वाक्यं--"तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति" इति। तुल्यदेशानि श्रवणानि = श्रोत्राणि येषां चैत्रादीनां ते तथोक्ताः। सर्वेषां श्रवणान्याकाशवर्त्तीनीत्यर्थः।तच्चश्रोत्राऽधिष्ठानमाकाशं शब्दगुणतन्मात्रादुत्पन्नं शब्दगुणकं*येन शब्देन सहकारिणा पार्थिवादीन् शब्दान् गृह्णाति। तस्मात्सर्वेषामेकजातीया श्रुतिः शब्दे इत्यर्थः। तदनेन श्रोत्राऽधिष्ठानत्वमाकाशस्य शब्दगुणत्वं च दर्शितमिति। तच्च = एकदेशश्रुतित्वमाकाशस्य लिङ्गम्। साह्येकजातीया शब्दव्यञ्जिका श्रुतिर्यदाश्रया तदेवाकाशशब्दवाच्यम्। नहीदृशीं श्रुतिमन्तरेण शब्दव्यक्तिः, न चेदृशी श्रुतिः[२] पृथिव्यादिगुणस्तस्य स्वाऽऽत्मनि व्यङ्ग्यव्यञ्जकत्वाऽनुपपत्तेरिति।अनावरणंचाऽऽकाशलिङ्गम्।

टि० (१) श्रोत्रे पार्थिवादिशब्दग्रहणे कर्त्तव्ये स्वाश्रयनभोगताऽसाधारणशब्दमपेक्षत इत्यत्र दृष्टान्तमाह—पृथिव्यादि—इत्यादिना, दृष्टमित्यन्तेन। *किंशब्दगुणकमित्यत आह 'येन' इति।

(२) ननु पृथिव्यादय एव श्रोत्रेन्द्रियाऽऽश्रया भवन्तु, तत्कथमाकाशसिद्धिरित्याशङ्कां वारयति। "न चेदृशी" इति। तत्र हेतुमाह "तस्य" इति। आकाशाश्रया श्रुतिर्व्यञ्जिका, पार्थिवादिशब्दाश्च व्यङ्ग्या, इत्येवं सम्भवति सति एकस्मिन् व्यङ्ग्यव्यञ्जकभावोऽन्याय्य इति भावः। न च कर्णशष्कुल्येव श्रवणेन्द्रियाश्रय इति साम्प्रतम्। परलोकगमनकाले कर्णशष्कुल्यभावाद् निराश्रयश्रोत्रेन्द्रियगमनाऽनुपपत्तेः। कर्णविवरपिधानेऽपि शब्दश्रवणप्रसङ्गाच्च। न च विवरपिधाने शब्दा एव श्रोत्रे न गच्छन्तीति वाच्यम्। भित्त्यादिव्यवहितशब्दश्रवणेन भित्त्यादिवत्कर्णच्छिद्रस्थद्रव्याणामपि शब्दाऽऽगमनाऽप्रतिबन्धकत्वकल्पनात्।तस्मात् कर्णशष्कुल्यवच्छिन्नं नभ एव श्रोत्राधारतया सिद्ध्यति इति दिक्।

भा० द्विभुत्वमपि प्रख्यातमाकाशस्य शब्दग्रहणाऽनुमितं श्रोत्रं, बधिराऽबधिरयोरेकः शब्दं गृह्णात्यपरो न गृह्णातीति[१] तस्माच्छ्रोत्रमेव शब्दविषयम्। श्रोत्राकाशयोः संबन्धे कृतसंयमस्य योगिनो दिव्यं[२] श्रोत्रं प्रवर्त्तते ॥ ४१ ॥

सू० कायाऽऽकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाऽऽकाशगमनम् * ॥ ४२ ॥

टी० यद्याकाशंनाऽभविष्यदन्योन्यं सम्पीडितानि मूर्त्तानि न सूचीभिरप्यभेत्स्यन्त, ततश्च सर्वैरेव सर्वमावृतं स्याद्। नच मूर्त्तद्रव्याभावमात्रादेवानावरणम्, अस्याभावस्य भावाश्रितत्वेन तदभावेऽभावाद्,[३] न च चितिशक्तिस्तस्याऽऽश्रया भवितुमर्हति। अपरिणामितयाऽवच्छेदकत्वाऽभावात्। न च दिक्कालादयः पृथिव्यादिद्रव्यव्यतिरिक्ताः सन्ति। तस्मात्तादृशः परिणतिभेदो नभस एवेति सर्वमवदातम्। अनावरणे चाऽऽकाशलिङ्गे सिद्धे यत्र यत्रानावरणं तत्र सर्वत्राऽऽकाशमिति सर्वगतत्वमप्यस्य सिद्धमित्याह-"तथाऽमूर्त्तस्य" इति। श्रोत्रसद्भावे प्रमाणमाह—"शब्दग्रहण" इति। क्रिया हि करणसाध्या दृष्टा। यथा छिदादिर्वास्यादिसाध्या। तदिह शब्दग्रहणक्रिययापि करणसाध्यया भवितव्यम्। यच्च करणं तच्चश्रोत्रमिति। अथास्याश्चक्षुरादय एव कस्मात्करणं न भवन्तीत्यत आह "बधिराऽबधिरयोः" इति। अन्वयव्यतिरेकाभ्यामवधारणम्। उपलक्षणं[२] चैतत्। त्वग्वातयोश्चक्षुस्तेजसोः-रसनोदकयोर्नासिकापृथिव्योः सम्बन्धसंयमाद्दिव्यत्वगाद्यप्यूहनीयम्॥ ४१

---

* चकारो विकल्पार्थकः। अत्र च लघूभवन एवोभयोः संयमयोर्विकल्पो बोध्यो, न त्वाकाशगमन इति ध्येयम्।

---

टि० (१) इति=शब्दो यत इत्यर्थे। एवञ्च यत इमावन्वयव्यतिरेकौ तस्माच्छ्रोत्रमेव शब्दविषयं=शब्दो विषयो यस्य तत्तथेत्यर्थो बोध्यः।

(२) दिव्यत्वं च तन्मात्रादिरूपसूक्ष्मशब्दादिग्राहकत्वम्।

(३) उपलक्षणं चैतत्। साङ्ख्यीय राद्धान्तेऽभावाऽनभ्युपगमाच्चेत्यस्यापि।

भा० यत्र कायस्तत्राऽऽकाशं[१] तस्याऽवकाशदानात्कायस्य । तेन सबन्धः प्राप्तिः । तत्र कृतसंयमो जित्वा तत्सबन्धं लघुषु तूलादिष्वाऽऽपरमाणुभ्यः समापत्तिं लब्ध्वा जितसंबन्धो लघुः, लघुत्वाच्च जले पादाभ्यां विहरति । ततस्तूर्णनाभितन्तुमात्रेविहृत्य रश्मिषु विहरति । ततो यथेष्टमाकाशगतिरस्य भवतीति ॥४२॥

सू० बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशाऽऽवरणक्षयः ॥ ४३ ॥

भा० शरीराद्बहिर्मनसो वृत्तिलाभो विदेहा नाम धारणा । सा यदि शरीरप्रतिष्ठस्य मनसो बहिर्वृत्तिमात्रेण भवति सा कल्पितेत्युच्यते ।

---

टी० सू० "काय—गमनम्" ॥ ४२ ॥ कायाऽऽकाशसम्बन्धसंयमाद्वा लघुनि वा तूलादौ कृतसंयमात् समापत्तिं = चेतसस्तत्स्थतदञ्जनतां लब्ध्वेति । सिद्धिक्रममाह—"जले" इति ॥ ४२ ॥

अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्मविपाकक्षयहेतुमाह-सू० "बहिः- क्षयः" । विदेहामाह "शरीराद्" इति । अकल्पितायाः महाविदेहाया य उपायस्तत्प्रदर्शनाय कल्पितां विदेहामाह "सा यदि" इति । वृत्तिमात्रं कल्पना-

---

टि० (१) कायाऽऽकाशयोर्यादृशः सम्बन्धोऽभीष्टस्तादृशमेवाह "यत्र" इति । यत्र=आसनादौ, शरीरं तिष्ठति तत्र शरीराऽवच्छेदेनाऽऽकाशमपि वर्त्तते इत्यर्थः । तत्र हेतुमाह—"तस्याऽवकाशदानाद्" इति आकाशस्याऽवकाशप्रदातृत्वादित्यर्थः । फलितमाह—तेन इति । तेनाऽऽकाशेन सह यः कायस्य सम्बन्धः स प्राप्तिरूपः, व्यापनमिति यावत् । तत्र = पूर्वोक्ते सम्बन्धे, कृतसंयमो योगी तत्सम्बन्धं जित्वा = साक्षात्कारेण स्वेच्छाऽधीनं कृत्वा, लघुर्भवतीत्यग्रिमेणाऽन्वयः । द्वितीयं हेतुं व्याचष्टे—लघुषु इत्यादिना, आ परमाणुभ्यः = परमाणुपर्य्यन्तेषु, सूक्ष्मपदार्थेषु तूलादिषु संयमात्तेषु चेतसः समापत्तिं लब्ध्वा जितसबन्धः = स्वाधीनीकृतकायाऽऽकाशसबन्धो वा लघुर्भवतीत्यर्थः । लघूभवनानन्तरं यया पारिपाट्याऽऽकाशगमनं भवति तामाह—"लघुत्वाच्च" इत्यादिना ।

भा०या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खल्व ऽकल्पिता। तत्र कल्पितया साधयत्यकल्पितां महाविदेहामिति, यया परशरीराण्याऽऽविशन्ति योगिनः। ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं = क्लेशकर्मविपाकत्रयं रजस्तमोमूलं तस्य क्षयो भवति ॥ ४३ ॥

सू० स्थूलस्वरूपसूक्ष्माऽन्वयाऽर्थवत्त्वसंयमाद् भूतजयः ॥ ४४ ॥

भा०तत्र पार्थिवाद्याः शब्दादयो विशेषाः सहाऽऽकारादिभिर्धर्मैः

टी० ज्ञानमात्रं तेन। महाविदेहामाह—"या तु" इति। उपायोपेयते कल्पिताऽकल्पितयोराह-"तत्र"इति। किं परशरीरावेशमात्रमितो, नेत्याह-"ततश्च" इति। ततो धारणातो = महाविदेहाया मनःप्रवृत्तेः सिद्धेः, क्लेशश्च कर्म च ताभ्यां विपाकत्रयं जात्यायुर्भोगास्तदेतद्रजस्तमोमूलम्[१] विगलितरजस्तमसः सत्त्वमात्राद् विवेकख्यातिमात्रसमुत्पादात्, तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सद् बुद्धिसत्त्वमावृणोति।तत्क्षयाच्च निरावरणं योगिचित्तं यथेच्छं विहरति विजानाति चेति ॥ ४३ ॥

"स्थूलं—जयः"॥ ४ ४॥ स्थूलं च स्वरूपं च सूक्ष्मं चाऽन्वयश्चाऽर्थवत्त्वं चेति स्थूलस्वरूपसूक्ष्माऽन्वयाऽर्थवत्त्वानि, तेषु संयमात्तज्जयः। स्थूलमाह "तत्र" इति। पार्थिवाः पाथसीयास्तैजसा वायवीया आकाशीया शब्दस्पर्शरूपरसगन्धा यथासम्भवं विशेषाः षड्जगान्धारादयः शीतोष्णादयो नीलपीतादयः कषायमधुरादयः सुरभ्यादयः। एते हि नामरूपप्रयोजनैः परस्परतो भिद्यन्त इति विशेषाः। एतेषां पञ्च पृथिव्यां, गन्धवर्जं चत्वारोऽप्सु,गन्धरसवर्जं त्रयस्तेजसि, गन्धरसरूपवर्जं द्वौ नभस्वति, शब्द एवाकाशे। त एत ईदृशा विशेषाः सहाकारादिभिर्धर्मैः स्थूल-

टि०(१) न तु सत्त्वमूलमित्यर्थः। तत्र हेतुमाह—"विगलित" इति। यतो रजस्तमःसम्पर्कराहितात्सत्त्वमात्राद्विवेकख्यातिमात्रमेव समुत्पद्यते, न क्लेशादि। अतो न क्लेशादि सत्त्वमूलं, किन्तु रजस्तमोमूलमिति भावः।

भा०स्थूलशब्देन परिभाषिताः। एतद् भूतानां प्रथमं रूपम्।द्वितीयं रूपं स्वसामान्यम्(१)।मूर्त्तिर्भूमिः, स्नेहो जलं,वह्निरुष्णता, वायुः प्रणामी, सर्वतोगतिराकाश इति । एतत्स्वरूपशब्देनोच्यते। अस्य

टी०शब्देन परिभाषिताः शास्त्रे । तत्राऽपि पार्थिवास्तावद् धर्माः—"आकारो गौरवं रौक्ष्यं वरणं स्थैर्य्यमेव च। वृत्तिर्भेदः (२) क्षमा कार्श्यं काठिन्यं सर्वभोग्यता" । अपां धर्माः—"स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवं च यत् । शैत्यं रक्षा (३) पवित्रत्वं सन्धानं चौदका गुणाः"। तैजसा धर्माः—"ऊर्ध्वभाक् पावकं दग्धृ पाचकं लघु भास्वरम् । प्रध्वंस्योजस्वि वै तेजः पूर्वाभ्यां भिन्नलक्षणम्" । वायवीया धर्माः-"तिर्य्यग्यानं पवित्रत्वमाक्षेपो(४) नोदनं बलम्। चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः" । आकाशीया धर्माः—"सर्वतो गतिरव्यूहो(५) विष्टम्भश्चेति च त्रयः । आकाशधर्मा व्याख्याताः पूर्वधर्मविलक्षणाः" । त एत आकारप्रभृतयो धर्मास्तैःसहेति । आकारश्च सामान्यविशेषो गोत्वादिः। द्वितीयं रूपमाह-"द्वितीयं रूपं स्वसामान्यम्" इति ।मूर्त्तिः = सांसिद्धिकं काठिन्यं, स्नेहो जलं मज्जा पुष्टिबलाधानहेतुः, वह्निरुष्णता—औदर्य्यं सौर्य्यं भौमे च सर्वत्रैव तेजसि समवेतोष्णतेति । सर्वं चैतद् धर्म्मधर्म्मिणोरभेदाविवक्षयाऽभिधानम्।वायुः प्रणामी = वहनशीलः। तदाह-"चलनेन तृणादीनां शरीरस्याऽटनेन च । सर्वगं वायुसामान्यं नामित्वमनुमीयते" । सर्वतो गतिराकाशः,सर्वत्र शब्दोपलब्धिदर्शनात्।श्रोत्राऽऽश्रयाऽऽकाशगुणेन हि शब्देन पार्थिवादिशब्दोपलब्धि-

टि० (१) स्वसामान्यं=स्वस्वसामान्यमित्यर्थः । यस्य यत्सामान्यं तद्दर्शयति—"मूर्त्तिः" इत्यादिना । मूर्त्तिमती भूमिः, स्नेहवज्जलमित्येवं वक्तव्येऽपि मूर्त्तिर्भूमिरित्याद्यभिधानं धर्मधर्मिणोः सामान्यविशेषयोस्तादात्म्यप्रतिपादनायेत्यवधेयम्। (२) वृत्तिः = सर्वभूताऽऽधारता, भेदः = विदारणं, क्षमा = सहिष्णुता। (३)रक्षा =दुर्गादिद्वारा रक्षकत्वं,सन्धानं = विश्लिष्टानां मेलनम्। (४) आक्षेपः = पातनं, नोदनं = कम्पनम् । (५) सर्वतो गतिः = व्यापित्वम्, अव्यूहः = सर्वपदार्थविश्लेषकरणत्वम्, अविष्टम्भः = अवकाशप्रदातृत्वम् ।

भा०सामान्यस्य शब्दादयो विशेषाः। तथाचोक्तम्- "एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिः"[१] इति। सामान्यविशेषसमुदायोऽत्र द्रव्यं, द्विष्ठो हि समूहः-प्रत्यस्तमितभेदाऽवयवाऽनुगतः[२] शरीरं वृक्षो यूथं वनमिति। शब्देनोपात्तभेदाऽवयवाऽनु-

टी०रित्युपपादितमधस्तात्। एतत्स्वरूपशब्देनोक्तम्। अस्यैव=मूर्त्त्यादिसामान्यस्य, शब्दादयः=षड्जादय उष्णत्वादयः शुक्लत्वादयः कषायत्वादयः सुरभित्वादयो मूर्त्त्यादीनां सामान्यानां भेदाः। सामान्यान्यपि मूर्त्त्यादीनि जम्बीरपनसाऽऽमलकफलादीनि रसादिभेदात्परस्परं व्यावर्त्तन्ते। तेनैतेषामेते रसादयो विशेषाः[३]। तथाचोक्तम्। एकजातिसमन्वितानां=प्रत्येकं पृथिव्यादीनामेकैकया जात्या=मूर्त्तिस्नेहादिना, समन्वितानामेषां षड्जादिधर्ममात्रव्यावृत्तिरिति। तदेवं सामान्यं मूर्त्त्याद्युक्तं विशेषाश्च शब्दादय उक्ताः। ये*चाहुः। सामान्यविशेषाश्रयो द्रव्यमिति तान् प्रत्याह "सामान्य" इति। सामान्यविशेषसमुदायोऽत्र दर्शने द्रव्यम्। येऽपि तदाश्रयो द्रव्यमास्थिषत तैरपि तत्समुदायोऽनुभूयमानो नाऽपह्नोतव्यः। न च तदपह्नवे तयोराधारो द्रव्यमिति भवति। तस्मात्तदेवाऽस्तु द्रव्यं, न तु ताभ्यां तत्समुदायाच्च तदाधारमपरं द्रव्यमुपलभामहे। ग्रावभ्यो†ग्रावसमुदायादिव च तदाधारमपरं पृथग्विधं शिखरं समूहो द्रव्यमित्युक्तम्। तत्र समूहमात्रं द्रव्यमिति भ्रमाऽपनुत्तये समूहविशेषो द्रव्यमिति निर्धारयितुं समूहप्रकारानाह—"द्विष्ठो हि" इति। यस्मादेवं तस्मान्न समूहमात्रं द्रव्यमित्यर्थः। द्वाभ्याम्प्रकाराभ्यां तिष्ठतीति द्विष्ठः। एकं प्रकार-

टि० (१) षड्जादिधर्ममात्रेण सजातीयान्तराद् व्यावृत्तिरेषां भूतानामित्यर्थः। (२) प्रत्यस्तमितः=अवान्तरविभागबोधकशब्देनाऽनुपस्थापितो, भेदः=अवान्तरविभागो येषामवयवानां ते प्रत्यस्तमितभेदा अवयवास्तेष्वनुगत इत्यर्थः। तदुदाहरणमाह—"शरीरम्" इत्यादिना।

(३) यद्यपि भूम्यादीनां मूर्त्यादिधर्मा अपि परस्परं व्यावर्त्तकाः सन्ति तथाऽपि भूम्याद्यन्तराद् भूम्याद्यन्तरस्य व्यावर्त्तका गन्धादय एव। यथा जम्बीररूपभूमिसकाशात् पनसाऽऽमलकादिभूमेर्व्यावर्त्तका मधुरादयः। अतः शब्दादय एव तान्त्रिकया परिभाषया विशेषा उच्यन्त इति भावः। * ये=वैशेषिकादयः। † पाषाणेभ्यः।

भा०गतः समूहः—उभये देवमनुष्याः[१], समूहस्य देवा एको भागो मनुष्या द्वितीयो भागस्ताभ्यामेवाऽभिधीयते समूहः। स च भेदाऽभेदविवक्षितः। आम्राणांवनंब्राह्मणानांसङ्घः। आम्रवनं ब्राह्मणसङ्घ इति। स पुनर्द्विविधो युतसिद्धाऽवयवोऽयुतसिद्धाऽवयवश्च। युतसिद्धाऽवयवः समूहो वनं सङ्घ इति, अयुतसिद्धाऽवयवः सङ्घातः शरीरं वृक्षः परमाणुरिति । अयुतसिद्धाऽवयवभेदाऽनुगतः समूहो

टी०माह-"प्रत्यस्तमित"इति। प्रत्यस्तमितो भेदो येषामवयवानां ते तथोक्ताः प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः । एतदुक्तं भवति । शरीरवृक्षयूथवनशब्देभ्यः समूहः प्रतीयमानोऽप्रतीताऽवयवभेद[२]स्तद्वाचकशब्दाऽप्रयोगात् समूह एकोऽवगम्यतइति । युताऽयुतसिद्धाऽवयवत्वेन चेतनाऽचेतनत्वेन चोदाहरणचतुष्टयम्। युताऽयुतसिद्धाऽवयवत्त्वं चाऽग्रे वक्ष्यते । द्वितीयं प्रकारमाह—"शब्देनोपात्तभेदाऽवयवाऽनुगतः समूह उभये देवमनुष्या" इति । देवमनुष्या इति हि शब्देनोभयशब्दवाच्यस्य समूहस्य भागौ भिन्नावुपात्तौ। ननूभयशब्दात्तदवयवभेदो न प्रतीयते, तत्कथमुपात्तभेदाऽवयवाऽनुगत इत्यत आह—"ताभ्याम्" इति । ताभ्यां भागाभ्यामेव च समूहोऽभिधीयते । उभयशब्देन भागद्वयवाचिशब्दसहितेन समूहो वाच्यः । वाक्यस्य वाक्याऽर्थवाचकत्वादिति भावः । पुनर्द्वैविध्यमाह—"स च" इति । भेदेन चाऽभेदेन च विवक्षितः । भेदविवक्षितमाह—"आम्राणां वनं ब्राह्मणानां सङ्घ" इति । भेद एव षष्ठीश्रुतेः, यथा गर्गाणां गौरिति । अभेदविवक्षितमाह—"आम्रवनं ब्राह्मणसङ्घ" इति । आम्राश्च ते वनं चेति, समूहसमूहिनोरभेदं विवक्षित्वा सामानाधिकरण्यमित्यर्थः । विधान्तरमाह "स पुनर्द्विविध" इति । युतसिद्धाऽवयवः समूहः

टि० (१) उभाववयवौ येषां त उभये । के ते, देवमनुष्या इति । अत्र हि उभयशब्दवाच्यस्य समूहस्यावान्तरविभागौ देवमनुष्यशब्दाभ्यामुपात्तावित्यस्त्यत्र शब्देनोपात्तभेदत्वमिति भावः ।

(२) अप्रतीताऽवयवभेद एकः समूहोऽवगम्यत इत्यन्वयः । तत्र हेतुमाह—"तद्वाचकशब्दाऽप्रयोगाद्" इति । अवयवबोधकशब्दाऽनुपादानादित्यर्थः ।

भा० द्रव्यमिति पतञ्जलिः। एतत्स्वरूपमित्युक्तम्। अथ किमेषां सूक्ष्मरूपं तन्मात्रं भूतकारणं, तस्यैकोऽवयवः परमाणुः सामान्यविशेषात्माऽयुतसिद्धाऽवयवभेदाऽनुगतः समुदाय इति। एवं सर्वतन्मात्राणि, एतत्तृतीयम्। अथ भूतानां चतुर्थं रूपं[१]-ख्यातिक्रियास्थितिशीला गुणाः कार्य्यस्वभावाऽनुपातिनोऽन्वयशब्देनोक्ताः। अथैषां पञ्चमं रूपमर्थवत्त्वं, भोगाऽपवर्गार्थता गुणेष्वन्वयिनी[२]

टी० युतसिद्धाः पृथक्सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः, यूथं वनमिति[३] सान्तराला हि तदवयवा वृक्षाश्च गावश्च। अयुतसिद्धाऽवयवश्च समूहो वृक्षो गौः परमाणुरिति, निरन्तरा हि तदवयवाः सामान्यविशेषाः वा सास्नादयो वेति। तदेतेषु समूहेषु द्रव्यभूतं समूहं निर्धारयति-"अयुतसिद्ध" इति। तदेवं प्रासङ्गिकं द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति-"एतत्स्वरूपमित्युक्तम्" इति। तृतीयं रूपं विवक्षुः पृच्छति-"अथ" इति। उत्तरमाह-"तन्मात्रम्" इति। तस्यैकोऽवयवः=परिणामभेदः परमाणुः, सामान्यं=मूर्त्तिः शब्दादयो विशेषाः तदात्मा, अयुतसिद्धा=निरन्तरा येऽवयवाः सामान्यविशेषास्तद्भेदेष्वनुगतः समुदायः। यथा च परमाणुः सूक्ष्मं रूपमेवं सर्वतन्मात्राणि सूक्ष्मं रूपमिति। उपसंहरति "एतद्" इति। "अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्य्यस्वभावाऽनुपातिनः"=कार्य्यस्वभावमनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ताः। अत एवाऽन्वयशब्देन उक्ताः। 'अथैषां पञ्चमं रूपमर्थवत्त्वम्=अर्थवत्त्वं विवृणोति—"भोग" इति। नन्वेवमपि सन्तु गुणा अर्थवन्तः, तत्कार्य्याणान्तु कुतोऽर्थवत्त्वमि-

टि० (१) सूत्रोक्तमन्वयाख्यं चतुर्थं रूपमुच्यत इत्यर्थः। (२) यद्यपि शब्दाद्युपलब्धिविवेकख्यात्याख्यौ भोगाऽपवर्गौ पुरुषार्थौ चित्त एव वर्त्तेते तथाऽपि प्रलयकालेऽनागताऽवस्थया वासनारूपेण गुणेष्ववस्थानाद् गुणेष्वन्वयिनीत्युक्तमिति बोध्यम्।

(३) एतदनुरोधेन भाष्येऽपि यूथं वनमित्येव पाठ इत्येके। यूथसङ्घयोरेकार्थतया वाचस्पत्ये तथोक्तिरिति तु युक्तमुत्पश्यामः।

भा०गुणास्तन्मात्रभूतभौतिकेष्विति[१]सर्वमर्थवत्। तेष्विदानी-म्भूतेषु[२]पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूप-दर्शनं जयश्च प्रादुर्भवति। तत्र पञ्च भूतस्वरूपाणि जित्वा भूतजयी भवति, तज्जयाद् वत्साऽनुसारिण्य इव गावोऽस्य सङ्कल्पाऽनुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४४ ॥

सू० ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मा-ऽनभिघातश्च ॥ ४५ ॥

भा०तत्राऽणिमा=भवत्यणुः, लघिमा=लघुर्भवति, महिमा=महान् भवति, प्राप्तिः=अङ्गुल्यग्रेणाऽपि स्पृशति चन्द्रमसम्, प्राकाम्यम् इच्छाऽनभिघातो, भूमावुन्मज्जति[३] निमज्जति यथोदके,

---

टी०स्यत आह "गुणा" इति। भौतिका=गोघटादयः। तदेवं संयमाविषयमुक्त्वा संयमं तत्फलं चाऽऽह—"तेषु" इति। भूतप्रकृतयः=भूतस्वभावाः॥४४॥

सङ्कल्पाऽनुविधाने भूतानां किं योगिनः सिध्यतीत्यत आह—सू० "ततो-ऽणिमादि—श्च" ॥ ४५ ॥ स्थूलसंयमजयाच्चतस्रः सिद्धयो भवन्तीत्याह—"तत्र" इति। अणिमा=महानपि भवत्यणुः, लघिमा=महानपि लघुर्भूत्वेषीकातूल इवाऽऽकाशे विहरति, महिमा=अल्पोऽपि नागनगनगरपरिमाणो भवति, प्राप्तिः=सर्वे भावाः सन्निहिता भवन्ति योगिनः। तद्यथा भूमिष्ठ एवाऽङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। स्वरूप-संयमविजयात्सिद्धिमाह-"प्राकाम्यमिच्छाऽनभिघात" इति। नाऽस्य रूपं भूतस्वरूपैर्मूर्त्यादिभिरभिहन्यते। भूमावुन्मज्जति निमज्जति च यथोदके।

---

टि० (१) भौतिकेषु—इत्यत्रान्वयिन इति शेषः। (२) सूत्रोक्तानि पञ्चरूपाणि व्याख्याय वाक्यार्थमाह "तेषु" इति। इदानीम्भूतेषु=इदानीमुत्पन्नेषु, इदानीन्तनेषु स्थूलभूतेषु इत्यर्थः। तन्मात्रादिषु पञ्चरूपाऽभावाद् इदानीम्भूतेष्वित्युक्तमिति बोध्यम्। (३) उन्मज्जति=जलमिव भूमिमुद्भिद्योत्तिष्ठति, निमज्जति=जले इव भूमौ प्रविशति, इत्यर्थः।

भा० वशित्वम्=भूतभौतिकेषु वशीभवत्यवश्यश्चान्येषाम्,ईशितृत्वं=तेषाम्प्रभवाऽप्ययव्यूहानामीष्टे, यत्र कामाऽवसायित्वं=सत्यसङ्कल्पता, यथा सङ्कल्पस्तथा भूतप्रकृतीनामवस्थानं, न च शक्तोऽपि पदार्थविपर्य्यासं करोति, कस्माद्, अन्यस्य यत्र कामाऽवसायिनः(१)पूर्वसिद्धस्य तथा भूतेषु सङ्कल्पादिति।एतान्यष्टा-

टी० सूक्ष्मविषयसंयमजयात्सिद्धिमाह"—वशित्वम्" इति। भूतानि—पृथिव्यादीनि, भौतिकानि-गोघटादीनि, तेषु वशी=स्वतन्त्रो भवति।तेषान्त्वऽवश्यः,तत्कारणतन्मात्रपृथिव्यादिपरमाणुवशीकारात्तत्कार्य्यवशीकारस्तेन यानि यथाऽवस्थापयति तानि तथाऽवतिष्ठन्त इत्यर्थः।अन्वयविषयसंयमजयात्सिद्धिमाह-"ईशितृत्वम्" इति। तेषां=भूतभौतिकानां विजितमूलप्रकृतिः सन् यः प्रभव=उत्पादो यश्चाऽप्ययो=विनाशो यश्च व्यूहः=यथावदवस्थापनं तेषामीष्टे।अर्थवत्त्वसंयमात्सिद्धिमाह—"यत्र कामाऽवसायित्वं सत्यसङ्कल्पता" इति।विजितगुणाऽर्थवत्त्वो हि योगी यद् यदर्थतया सङ्कल्पयति तत् तस्मै प्रयोजनाय कल्पते, विषमप्यमृतकार्य्ये सङ्कल्प्य भोजयन् जीवयतीति। स्यादेतद्,यथा शक्तिविपर्य्यासं करोत्येवं पदार्थविपर्य्यासमपि कस्मान्न करोति,तथा चन्द्रमसमादित्यं कुर्य्यात्कुहूं च(२) सिनीवालीमित्यत आह-नच शक्तोऽपीति। न खल्वेते यत्रकामाऽवसायिनस्तत्र*भगवतः परमेश्वरस्याऽऽज्ञामुत्क्रमितुत्सहन्ते। शक्तयस्तु पदार्थाना जातिदेशकालाऽवस्थाभेदेनाऽनियतस्वभावा इति युज्यते तासु तदिच्छाऽनुविधानमिति, एतान्यष्टावैश्वर्य्याणि । 'तद्धर्माऽनभिघात' इति। अणिमादिप्रादुर्भाव

टि० (१) यत्र कामाऽवसायिशब्दस्तान्त्रिक्या परिभाषया सत्यसङ्कल्पार्थकः, पूर्वसिद्धस्य=संयमनैरपेक्ष्येणैव सत्यसङ्कल्पादिगुणशालिनः परमेश्वरस्य, तथाभूतेषु=यथादृष्टेष्वेव सङ्कल्पाद् इत्यर्थः। "सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयद्" इत्यात्मानियमपालनार्थं नेश्वरेणाऽन्तर्य्यामिणा पदार्थविपर्य्यासे योगी प्रेर्य्यत इति भावः।

(२) "या पूर्व्वाऽमावस्या सा सिनीवाली, योत्तरा सा कुहूः" इति श्रुतेः। चतुर्दशीयुक्ताऽमावास्या सिनीवाली, प्रतिपद्युक्ता कुहूः।

* तस्य पूज्यत्वेन प्रसिद्धस्य, तत्र भवत इति तु साधुः।

भा० वैश्वर्य्याणि। कायसम्पद् वक्ष्यमाणा। तद्धर्मा ऽनभिघातश्च =पृथ्वी मूर्त्या न निरुणद्धि योगिनः शरीरादिक्रियां, शिलामप्यनुप्रविशतीति, नाऽपः स्निग्धाः क्लेदयन्ति, नाऽग्निरुष्णो दहति, न वायुः प्रणामी वहति, अनाऽऽवरणात्मकेऽप्याकाशे भवत्यावृतकायः, सिद्धानामप्यदृश्यो भवति ॥ ४५ ॥

सू० रूपलावण्यबलवज्रसंहननत्वानि कायसम्पद् ॥४६॥

भा० दर्शनीयः कान्तिमान् अतिशयबलो वज्रसंहननश्चेति ॥४६॥

सू० ग्रहणस्वरूपाऽस्मिताऽन्वयाऽर्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥

भा० सामान्यविशेषाऽऽत्मा शब्दादिर्ग्राह्यः। तेष्विन्द्रियाणां वृत्तिग्रहणं,

---

टी० इत्यनेनैव तद्धर्माऽनभिघातसिद्धौ पुनरुपादानं कायासिद्धिवद् एतत्सूत्रोपबद्धसकलविषयसंयमफलवत्त्वज्ञापनाय(१) । सुगममन्यद् ॥ ४५ ॥

कायसम्पदमाह—"सू० रूप—सम्पद्" ॥४६॥ वज्रस्येव संहननम् = अवयवव्यूहो दृढो निविडो यस्य स तथा तस्य भावस्तत्त्वमिति ॥४६॥

जितभूतस्य योगिन इन्द्रियजयोपायमाह—"सू० ग्रहण—जयः ॥ ४७ ॥ ग्रहणं च स्वरूपं चाऽस्मिता चाऽन्वयश्चाऽर्थवत्त्वं च तेषु संयमस्तस्मादित्यर्थः । गृहीतिर्ग्रहणं, तच्च ग्राह्याऽधीननिरूपणमिति ग्राह्यं दर्शयति "सामान्यविशेषाऽऽत्मा" इति ।

---

टि० (१) प्रकृतसूत्रोपात्तं यत्, सकलविषयसंयमस्य = पूर्वसूत्रोक्तस्थूलरूपादिविषयकसंयमस्य फलवत्त्वं तद्बोधनायेत्यर्थः। स्थूलादिपञ्चरूपाणां मध्ये प्रत्येकजयस्य फलवत्त्वबोधनाय कायसिद्धतद्धर्माऽनभिघातयोरुपादानमिति न पौनरुक्त्यमिति भावः ।

भा० न च तत्सामान्यमात्रग्रहणाऽऽकारं[१], कथमनाऽऽलोचितः स विषयविशेष इन्द्रियेण मनसाऽनुव्यवसीयेतेति। स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभेदाऽनुगतः समूहो द्रव्यमिन्द्रियम्[२]। तेषां तृतीयं रूपमस्मितालक्षणोऽहङ्कारः, तस्य सामान्यस्येन्द्रियाणि विशेषाः। चतुर्थं रूपं व्यव-

टी० ग्राह्यमुक्त्वा ग्रहणमाह-"तेषु" इति। वृत्तिः=आलोचनं, विषयाऽऽकारा परिणतिरिति यावद्। ये[३] त्वाहुः सामान्यमात्रगोचरेन्द्रियवृत्तिरिति तान्प्रत्याह-"नच" इति। गृह्यत इति ग्रहणं, सामान्यमात्रगोचरं ग्रहणम्। बाह्येन्द्रियतन्त्रं हि मनो बाह्ये प्रवर्त्ततेऽन्यथा[४]ऽन्धबधिराद्यभावप्रसङ्गात्। तदिह यदि न विशेषविषयमिन्द्रियं तेनाऽसावनालोचितो विशेष इति कथम्मनसाऽनुव्यवसीयेत। तस्मात् सामान्यविशेषविषयमिन्द्रियाऽऽलोचनमिति। तदेतद् ग्रहणमिन्द्रियाणां प्रथमं रूपम्। द्वितीयं रूपमाह-"स्वरूपं पुनः" इति। अहङ्कारो हि सत्त्वभागेनाऽऽत्मीयेनेन्द्रियाण्यजीजनद्, अतो यत्तत्र करणत्वं सामान्यं यच्च नियतरूपादिविषयत्वं विशेषस्तदुभयमपि प्रकाशाऽऽत्मकमित्यर्थः। 'तेषां तृतीयंरूपम्' इति =अहङ्कारो हीन्द्रियाणां कारणमिति यत्रेन्द्रियाणि तत्र तेन भवितव्यमिति सर्वेन्द्रियसाधारण्यात्सामान्यमिन्द्रियाणामित्यर्थः। 'चतुर्थं रूपम्'-इति। गुणानां हि द्वैरूप्यं व्यव-

टि० (१) सामान्यमात्रेण ग्रहणमेवाऽऽकारः = स्वभावो यस्य तत्सामान्यमात्रग्रहणाऽऽकारमिन्द्रियमित्यर्थः। (२) प्रकाशाऽऽत्मनो बुद्धिसत्त्वस्य कार्य्यभूता येऽयुतसिद्धा अवयवभेदाः सात्त्विकाऽहङ्काररूपास्तेष्वनुगतो यः सामान्यविशेषरूपयोः समूहस्तद् द्रव्यमित्यर्थः। तत्र सामान्यं श्रोत्रत्वादि, विशेषाः शब्दाद्याकारपरिणामभेदा इति। (३) मनोमात्रग्राह्यो विशेषो न त्विन्द्रियग्राह्य इति वादिनो बौद्धा इत्यर्थः। (४) चक्षुरादीनैरपेक्ष्येणैव मनसो बहिर्वृत्तिस्वीकारे सति, अन्धादयोऽपि रूपादीनाऽऽलोचयेयुरिति भावः।

भा० सायाऽऽत्मकाः[१] प्रकाशक्रियास्थितिशीला गुणाः, येषामिन्द्रियाणि साहङ्काराणि परिणामः। पञ्चमं रूपं गुणेषु यदनुगतं पुरुषाऽर्थवत्त्वमिति। पञ्चस्वेतेष्विन्द्रियरूपेषु यथाक्रमं संयमः[२] तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः ॥ ४७ ॥

सू० ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥

भा० कायस्याऽनुत्तमो गतिलाभो मनोजवित्वं[३], विदेहानामिन्द्रियाणामभिप्रेतदेशकालविषयाऽपेक्षो वृत्तिलाभो विकरणभावः[४], सर्वप्रकृतिविकारवशित्वम्प्रधानजय इति। एतास्तिस्रः सिद्धयो मधु-

---

टी० सायाऽऽत्मकत्वं, व्यवसेयाऽऽत्मकत्वं च[५]। तत्र व्यवसेयात्मकतां ग्राह्यतामास्थाय पञ्चतन्मात्राणि भूतभौतिकानि च निर्मिमते, व्यवसायाऽऽत्मकत्वं तु ग्रहणरूपमास्थाय साऽहङ्काराणीन्द्रियाणीत्यर्थः। शेषं सुगमम् ॥ ४७ ॥

पञ्चरूपेन्द्रियजयात् सिद्धीराह-सू० "ततो-श्च" ॥ ४८ ॥ विदेहानामिन्द्रियाणां करणभावो विकरणभावः। देशः-काश्मीरादिः, कालः-अतीतादिः, विषयः—सूक्ष्मादिः। साऽन्वयेन्द्रियजयात्सर्वप्रकृतिविकारवशित्वम्प्रधानजयस्ता एताः

---

टि० (१) व्यवसायाऽपरपर्य्यायमहत्तत्वरूपेण परिणता इत्यर्थः ॥ (२) यथाक्रमं = सूत्रोक्तग्रहणादिरूपपञ्चकक्रमेण संयमः कर्त्तव्य इति शेषः ॥ (३) मनोवदनेकयोजनाऽन्तरितमपि देशं झटित्येव गच्छतीति भावः ॥ (४) विदेहानां = शरीरानिरपेक्षाणामिन्द्रियाणां योऽभिप्रेतदेशाद्यपेक्षः = देशाद्यपरित्यागी वृत्तिलाभः स विकरणभाव इत्यर्थः। यत्रैव देशादिषु वृत्तिलाभ इष्यते योगिना तत्रैव वृत्तिलाभो भवति। तद्यथा स्रुघ्नस्थ एव पाटलिपुत्रस्थं विष्णुशर्माणं पश्यति, तत्रत्यं च शब्दं शृणोति। एवं घ्राणादिष्वपि बोध्यमिति भावः।

(५) विषयविषयिभावेन गुणा एव परिणता भवन्तीति भावः।

भा० प्रतीका उच्यन्ते। एताश्च करणपञ्चकरूपजयादधिगम्यन्ते ४८

सू० सत्त्वपुरुषाऽन्यताख्यातिमात्रस्य सर्वभावाऽधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥

भा० निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्य परे वैशारद्ये परस्यां वशीकारसञ्ज्ञायां वर्त्तमानस्य सत्त्वपुरुषाऽन्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाऽधिष्ठातृत्वं,=सर्वाऽऽत्मानो[१] गुणा व्यवसायव्यवसेयात्मकाः स्वामिनं क्षेत्रज्ञं प्रत्यशेषदृश्याऽऽत्मत्वेनोपतिष्ठन्त इत्यर्थः।

---

टी० सिद्धयो मधुप्रतीका इत्युच्यन्ते योगशास्त्रनिष्णातैः। स्यादेतद्, इन्द्रियजयादिन्द्रियाणि सविषयाणि वश्यानि भवन्तु, प्रधानादीनां तत्कारणानां किमायातमित्यत आह "एताश्च" इति। करणानाम्=इन्द्रियाणां पञ्चरूपाणि=ग्रहणादीनि तेषाञ्जयाद्। एतदुक्तं भवति=नेन्द्रियमात्रजयस्यैताः सिद्धयोऽपि तु पञ्चरूपस्य, तदन्तर्गतं च प्रधानादीति ॥ ४८ ॥

ते एते ज्ञानक्रियारूपैश्वर्य्यहेतवः संयमाः[२] साक्षात्पारम्पर्य्येण च स्वसिद्ध्युपसंहारसम्पादितश्रद्धाद्वारेणयदर्थास्तस्याः सत्त्वपुरुषाऽन्यताख्यातेरवान्तरविभूतीर्दर्शयति। सू० "सत्त्वं-च" ॥ ४९॥ निर्धूतरजस्तमोमलतया वैशारद्यं, ततः परा वशीकारसञ्ज्ञा। रजस्तमोभ्यामुपप्लुतं हि चित्तसत्त्वमवश्यमासीत्तदुपशमे तु तद्वश्यं योगिनो वशिनः। तस्मिन् वश्ये योगिनः सत्त्वपुरुषाऽन्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाऽधिष्ठातृत्वम्। एतदेव विवृणोति। "सर्वात्मानः" इति। व्यवसायव्यवसेयात्मानः=जड़प्रकाशरूपा

---

टि० (१) सर्वात्मान इत्यस्य विवरणं—व्यवसायव्यवसेयात्मका इति। यतो गुणाः सर्वात्मानोऽतोऽशेषदृश्याऽऽत्मत्वेन=योगिसङ्कल्पितभोग्यवस्त्वाऽऽकारेण परिणताः सन्तः स्वामिनं क्षेत्रज्ञं प्रत्युपतिष्ठन्त इत्यर्थः। उपस्थिता इति पाठे तु भवन्तीत्यध्याहार्य्यम्।

(२) संयमा—इत्यस्य यदर्था इत्यनेनान्वयः। तत्र साक्षाद्विवेकख्यात्यर्थाः स्वार्थसंयमादयः, पारम्पर्य्येण चाऽणिमादिजनकाः। पारम्पर्य्येणेत्यस्याऽर्थमाह "स्वसिद्ध्युपसंहार" इति।

भा०सर्वज्ञातृत्वं=सर्वात्मनांगुणानां शान्तोदिताऽव्यपदेश्यधर्मत्वेन व्यवस्थितानामऽक्रमोपारूढं विवेकजं ज्ञानमित्यर्थः[१] । इत्येषा विशोका नाम सिद्धिः याम्प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति ॥ ४९ ॥

सू० तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्[२] ॥ ५० ॥

भा०यदाऽस्यैवं भवति क्लेशकर्मक्षये—सत्त्वस्याऽयं विवेकप्रत्ययो धर्मः, सत्त्वं च हेयपक्षे न्यस्तं पुरुषश्चाऽपरिणामी शुद्धोऽन्यः सत्त्वादिति[३] । एवम् अस्य ततो विरज्यमानस्य यानि क्लेशबीजानि दग्धशालिबीजकल्पान्यप्रसवसमर्थानि तानि सह मनसा प्रत्यस्तं गच्छन्ति ।

---

टी०इत्यर्थः।तदनेन क्रियैश्वर्य्यमुक्तम्।ज्ञानैश्वर्य्यमाह—"सर्वज्ञातृत्वम्" इति। अस्या अपि द्विविधायाः सिद्धेर्वैराग्याय योगिजनप्रसिद्धां सञ्ज्ञामाह "एषा विशोका" इति ।क्लेशाश्च बन्धनानि च=कर्माणि तानि क्षीणानि यस्य स तथा ॥४९॥ संयमान्तराणां पुरुषाऽर्थाऽऽभासफलत्वाद् विवेकख्यातिसंयमस्य पुरुषार्थतां दर्शयितुं विवेकख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलमाह—" सू० तद्वैराग्यात्—ल्यम्" ॥ ५० ॥ यदाऽस्य योगिनः क्लेशकर्मक्षय एवं ज्ञानं भवति । किम्भूतमित्याह—"सत्त्व-

---

टि० (१) अतीताऽनागतवर्त्तमानवस्तुरूपेण परिणतानां गुणानाम्, अक्रमोपारूढम्=युगपदुत्पन्नं विवेकजज्ञानं=यथार्थसाक्षात्कारो भवतीति भावः । (२) अपिशब्दो भिन्नक्रमः, कैवल्यमित्यतोऽग्रे द्रष्टव्यः । न केवलं विवेकख्यातेः सर्वभावाऽधिष्ठातृत्वाद्येव भवति, किन्तर्हि तद्वैराग्यादसम्प्रज्ञातसमाधिलाभे सति कैवल्यमपि सर्वफलमूर्द्धाऽभिषिक्तं फलं भवतीत्यर्थः ।

(३) सत्त्वस्येत्यादिना, सत्त्वादितीत्यन्तेन सौत्रतद्वैराग्यादिति पदस्य विवरणम् । एवमस्येत्यादिना, न भुङ्क्त इत्यन्तेन दोषबीजक्षय इत्यस्य विवरणम् । शेषेण च भाष्येण कैवल्यशब्दार्थविवरणमिति विवेकः ।

भा० तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते । तदैतेषां * गुणानां मनसि कर्मक्लेशविपाकस्वरूपेणाऽभिव्यक्तानां चरितार्थानां प्रतिप्रसवे पुरुषस्यात्यन्तिको गुणवियोगः कैवल्यं, तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति ॥ ५० ॥

सू० स्थान्युपनिमन्त्रणे सङ्गस्मयाऽकरणं पुनरनिष्टप्रसङ्गात् ॥ ५१ ॥

भा० चत्वारः खल्वमी योगिनः—प्रथमकल्पिकः, मधुभूमिकः, प्रज्ञाज्योतिः, अतिक्रान्तभावनीयश्चेति । तत्राऽभ्यासी प्रवृत्तमात्रज्योतिः

---

टी० स्याऽयं विवेकप्रत्ययो धर्म" इति । शेषं तत्र तत्र व्याख्यातत्वात्सुगमम् ॥५०॥ सम्प्रति कैवल्यसाधने प्रवृत्तस्य योगिनः प्रत्यूहसम्भवे तन्निराकरणकारणमुपदिशति—सू० "स्थान्युप—गात्" ॥ स्थानानि(१) येषां सन्ति ते स्थानिनो महेन्द्रादयः, तैरुपनिमन्त्रणं(२) तस्मिन् सङ्गश्च स्मयश्च न कर्त्तव्यः पुनरनिष्टप्रसङ्गात् । तत्र यं देवाः स्थानैरुपमन्त्रयन्ते तं योगिनमेकं निर्धारयितुं यावन्तो योगिनस्सम्भवन्ति तावत एवाऽऽह—"चत्वार" इति । तत्र प्रथमकल्पिकस्य स्वरूपमाह—"तत्राऽभ्यासी" इति । प्रवृत्तमात्रं न पुनर्वशीकृतंज्योतिः = ज्ञानं परचित्तादिविषयं यस्य स तथा । द्वितीयमाह—

---

* तदेतेषामिति पाठेऽपि तच्छब्दस्तदेत्यर्थको बोध्यः। यदाऽस्यैवं भवतीति भाष्येणाऽऽकाङ्क्षितत्वात् । यदाऽस्यैवं भवति तदा कैवल्यं भवतीत्यन्वयः । कैवल्यस्वरूपमाह "एतेषाम्" इत्यादिना । अविवेकदशायां क्लेशादिरूपेण मनस्यभिव्यक्तानां तदनु विवेकख्यात्युपजननेन चरितार्थानां=समाप्तपुरुषार्थानां गुणानां यः प्रतिप्रसवः=सहैव मनसा लयः, तस्मिन् सति यः पुरुषस्याऽऽत्यन्तिको गुणवियोगस्तत्कैवल्यमित्यर्थः। कैवल्ये सति किम्भवतीत्यत्राऽऽह "तदा" इति । टि० (१) स्थानानि=स्वर्गलोकादीनि स्थानानीत्यर्थः ।

(२) तैरुपनिमन्त्रणं = तैः महेन्द्रादिभिः स्वलोके नयनाय योगिनं प्रति क्रियमाणं प्रार्थनापूर्वकं प्रवर्त्तनमित्यर्थः ।

भा० प्रथमः । ऋतम्भरप्रज्ञो द्वितीयः । भूतेन्द्रियजयी तृतीयः, सर्वेषु भावितेषु भावनीयेषु कृतरक्षाबन्धः कृतकर्तव्यसाधनादिमान् । चतुर्थो यस्त्वतिक्रान्तभावनीयस्तस्य चित्तप्रतिसर्ग एकोऽर्थः(१) सप्तविधाऽस्य प्रान्तभूमिप्रज्ञा।तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो = देवाः सत्त्वशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते(२) भोरिहाऽऽस्यतामिह रम्यतां,कमनीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं जरामृत्युं बाधते, वैहायसमिदं

---

टी० "ऋतम्भरप्रज्ञ" इति। यत्रेदमुक्तम् ऋतम्भरातत्र प्रज्ञा इति । सहि भूतेन्द्रियाणिजिगीषुः । तृतीयमाह—"भूतेन्द्रियजयी" इति । तेन हि स्थूलादिसंयमेन ग्रहणादिसंयमेन च भूतेन्द्रियाणि जितानि । तमेवाह—"सर्वेषु"इति। सर्वेषु भावितेषु = निष्पादितेषु भूतेन्द्रियजयात्परचित्तादिज्ञानादिषु कृतरक्षाबन्धः ।यतस्तेभ्यो न च्यवते । भावनीयेषु = निष्पादनीयेषु विशोकादिषु परवैराग्यपर्य्यन्तेषु कर्त्तव्यसाधनवान्, पुरुषप्रयत्नस्य साधनाविषयस्यैव साध्यनिष्पादकत्वात् । चतुर्थमाह--"चतुर्थ" इति ।तस्य हि भगवतो जीवन्मुक्तस्य चरमदेहस्य चित्तप्रतिसर्ग एकोऽर्थः। तदेतेषु योगिषु उपनिमन्त्रणविषयं योगिनमवधारयति--"तत्र मधुमतीम्" इति। प्रथमकल्पिके तावन्महेन्द्रादीनां तत्प्राप्तिशङ्कैव नास्ति, तृतीयोऽपि तैर्नोपनिमन्त्रणीयः भूतेन्द्रियवशित्वेनैव तत्प्राप्तेः ।चतुर्थेऽपि परवैराग्यसम्पत्तेरासङ्गाऽऽशङ्का दूरोत्सारितैव, इति+पारिशेष्याद् द्वितीय एव ऋतम्भरप्रज्ञस्तदुपनिमन्त्रणविषय इति।

---

टि० (१) तस्य सम्प्रज्ञातसमाधिनिष्ठस्य चित्तप्रतिसर्गः = असम्प्रज्ञातसमाधिना चित्तविलयरूप एकोऽर्थः कर्त्तव्योऽवशिष्यते, नाऽपर इत्यर्थः । अन्यत् कर्त्तव्यं नास्तीत्यत्र हेतुमाह- "सप्तविधा" इति ।यतः 'परिज्ञातं हेयं नाऽस्य पुनः परिज्ञेयमस्ति' इत्याद्या द्वितीयपादोक्ता सप्तविधा प्रान्तभूमिप्रज्ञा अनेन निष्पादिता । अतो नान्यत् किञ्चित् कर्त्तव्यमस्तीति भावः ।

(२) स्थानैः = स्वर्गस्थानोपलक्षितैर्विमानाऽप्सरःकल्पद्रुमादिभिः प्रलोभ्य उपमन्त्रयन्ते = स्वाभीष्टकर्त्तव्यकरणाय प्रार्थयन्त इत्यर्थः । उपनिमन्त्रणप्रकारमाह—"भोरिहेत्यादिना, देवानां प्रियमिति" इत्यन्तेन । + स्वर्गादिप्राप्ति० ।

भा० यानम्, अमी कल्पद्रुमाः(१), पुण्या मन्दाकिनी, सिद्धा महर्षयः, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्रचक्षुषी *वज्रोपमः कायः, स्वगुणैः सर्वमिदमुपार्ज्जितमायुष्मता, प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियमिति । एवमभिधीयमानः सङ्गदोषान् भावयेत्—घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणाऽन्धकारे विपरिवर्त्तमानेन कथञ्चिदासादितः क्लेशतिमिरविनाशो योगप्रदीपः, तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः, स खल्वहं लब्धाऽऽलोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्य्यामिति । स्वस्ति वः स्वप्नोपमेभ्यःकृपणजनप्रार्थनीयेभ्योविषयेभ्यइत्येवन्निश्चितमतिःसमाधिम्भावयेत्। सङ्गमकृत्वा स्मयमपि न कुर्य्याद् एवमहं देवानामपि प्रार्थनीय इति। स्मयादयं सुस्थितम्मन्यतया मृत्युना केशेषु गृहीतमिवाऽऽत्मानं न भावयिष्यति । तथा चाऽस्य छिद्रान्तरप्रेक्षी नित्यं यत्नोपचर्य्यः(२) प्रमादो लब्धविवरः क्लेशानुत्तम्भयिष्यति+ततः पुनरनिष्टप्रसङ्गः। एवमस्य सङ्गस्मयावकुर्वतो भावितोऽर्थो दृढीभविष्यति, भावनीयश्चाऽर्थोऽभिमुखीभविष्यतीति ॥ ५१ ॥

---

टी० वैहायसम् आकाशगामि, अक्षयम्=अविनाशि, अजरं=सदाऽभिनवम्। स्मयकरणे दोषमाह—"स्मयादयम्" इति। स्मयात्सुस्थितम्मन्यो नाऽनित्यताम्भावयिष्यति, न तस्यां प्रणिधास्यतीत्यर्थः। सुगममन्यत् ॥ ५१ ॥

---

टि० (१) अमी कल्पद्रुमास्त्वद्भोगार्थमुपस्थिता इत्यर्थः। एवमियं मन्दाकिनी=स्वर्गङ्गा त्वदवगाहनार्थमुपस्थितेति, एवमग्रेऽपि । *दिव्ये श्रोत्रचक्षुषी भवतो भविष्यत इत्यर्थः । यद्वा अमी इत्यारभ्य, सर्वमिदमुपार्ज्जितमित्यन्तमेकं वाक्यम् । सङ्गस्मयाकरणं व्याचष्टे—"एवम्" इति। सङ्गदोषः=विषयप्रीतिजो दोषः। घोरेष्वित्यादिना, कुर्य्यामित्यन्तेन सङ्गदोषचिन्तनप्रकारकथनम्। सङ्गं त्यक्त्वा यत्कर्त्तव्यं तदाह-'स्वस्ति' इत्यादिना, भावयेदित्यन्तेन।
(२) यत्नेन प्रतीकार्य्यः । +प्रज्वलीकरिष्यति, उज्जीवयिष्यति, इति वा ।

**सू०क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥५२॥**

भा०यथाऽपकर्षपर्य्यन्तं द्रव्यं परमाणुरेवम्परमाऽपकर्षपर्य्यन्तः कालःक्षणः, यावता वा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसम्पद्येत स कालः क्षणः । तत्प्रवाहाऽविच्छेदस्तु क्रमः[१], क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्त्ताऽहोरात्रादयः।स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानाऽनुपाती लौकिकानां व्युत्थितदर्शनानांवस्तुस्वरूपइवा-

---

टी० उक्ता क्वचित्क्वचित्संयमात्सर्वज्ञता । सा च न निःशेषज्ञता, अपि तु प्रकारमात्रविवक्षया । यथा सर्वैर्व्यञ्जनैर्भुक्तमिति । अत्र हि यावन्तो व्यञ्जनप्रकारास्तैर्भुक्तमिति गम्यते, न तु निःशेषैरिति । अस्ति च निःशेषवचनः सर्व-शब्दः । यथोपनीतमन्नं सर्वमाशितं प्राशकेनेति । तत्र हि निःशेषमिति गम्यते। तादिह निःशेषज्ञतालक्षणस्य विवेकजज्ञानस्य साधनं संयममाह—"सू० क्षण-ज्ञानम्" ॥५२॥ क्षणपदार्थं निदर्शनपूर्वकमाह—"यथा" इति । लोष्ठस्य हि प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पत्वतारतम्यं व्यवतिष्ठते सोऽपकर्षपर्य्यन्तः परमाणुर्यथा यथाऽपकर्षपर्य्यन्तः कालः क्षणः, पूर्वाऽपरभागविकलकालकलेति यावत् । तमेव क्षणं प्रकारान्तरेण दर्शयति—"यावता वा" इति । परमाणुमात्रं देशमतिक्रामेदित्यर्थः । क्रमपदार्थमाह "तत्प्रवाह" इति । तत्-पदेन क्षणः परामृश्यते । न चेदृशः क्रमो वास्तवः, किन्तु काल्पनिकः । तस्य समाहाररूपस्याऽयुगपदुपस्थितेषु वास्तवत्वेन विचाराऽसहत्वाद् इत्याह—"क्षणतत्क्रमयोः" इति । अयुगपद्भाविक्षणधर्मत्वात्क्रमस्य क्षणसमाहारस्याऽवास्तवत्वात् क्षणतत्क्रमयोरप्यवास्तवत्वं समाहारस्य । नैःसर्गिकवैतण्डिकबुद्ध्यतिशयरहिता लौकिकाः । प्रतिक्षणमेव व्युत्थितदर्शना भ्रान्ता ये कालमीदृशं

---

टि० (१) तेषां क्षणानां यः प्रवाहः=उत्तरोत्तरभाविनाऽवस्थानं, तस्य योऽविच्छेदः=अविरलता नैरन्तर्य्यं वा स क्रम इति । क्षण एव विकल्पवृत्त्या मुहूर्त्ताऽहोरात्रादिपदव्यपदेश्यो भवति परमार्थतस्तु न क्षणातिरिक्तः कश्चिन्मुहूर्त्तादिकालोऽस्तीतिस्वशास्त्रसिद्धान्तमवधारयति—"क्षणतत्क्रमयोः" इत्यादिना ।

भा० ऽवभासते । क्षणस्तु वस्तुपतितः क्रमावलम्बी[१], क्रमश्च क्षणाऽऽनन्तर्य्यात्मा, तं कालविदः काल इत्याचक्षते योगिनः । न च द्वौ क्षणौ सह भवतः, क्रमश्च न द्वयोः सहभुवोरसम्भवात् । पूर्वस्मादुत्तरभाविनो यदाऽऽनन्तर्य्यं क्षणस्य स क्रमः, तस्माद् वर्त्तमान एवैकः क्षणो न पूर्वोत्तरक्षणाः सन्तीति । तस्मान्नास्ति तत्समाहारः । ये तु भूतभाविनः[२] क्षणास्ते परिणामाऽन्विता व्याख्येयाः, तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति, तत्क्षणोपारूढाः खल्वमी धर्माः । तयोः क्षणतत्क्रमयोः संयमात् तयोः साक्षात्करणम् । ततश्च विवेकजं ज्ञानं प्रादुर्भवति ॥ ५२ ॥

तस्य विषयविशेष उपक्षिप्यते[३]—

**सू० जातिलक्षणदेशैरन्यताऽनवच्छेदात्तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥**

---

टी० वास्तवमभिमन्यन्त इति । तत्किं क्षणोऽप्यवास्तवः, नेत्याह-"क्षणस्तु" इति । वस्तुपतितः=वास्तव इत्यर्थः । क्रमस्याऽवलम्बनमवलम्बः सोऽस्याऽस्तीति, क्रमेणाऽवलम्ब्यते वैकल्पिकेनेत्यर्थः । क्रमस्य क्षणाऽवलम्बनत्वे हेतुमाह "क्रमश्च" इति । क्रमस्याऽवास्तवत्वे हेतुमाह—"न च" इति । चो-हेत्वर्थे । यस्तु वैजात्यात्सहभावमुपेयात्तं प्रत्याह-"क्रमश्च न द्वयोः" इति । कस्मादसम्भव इत्यत आह-"पूर्वस्माद्"इति । उपसंहरति-"तस्माद्"इति । तत्किमिदानीं शशविषाणायमाना एव पूर्वोत्तरक्षणाः, नेत्याह—"ये तु" इति । अन्विताः=सामान्येन समन्वागता इत्यर्थः । उपसंहरति "तेन" इति । वर्त्तमानस्यैवाऽर्थक्रियासु स्वोचितासु सामर्थ्यादिति ॥५२॥ यद्यप्येतद्विवेकजं ज्ञानं निःशेषभावविषयमित्यग्रे वक्ष्यते तथाऽप्यतिसूक्ष्मत्वात् प्रथमं तस्य विषयविशेष उपक्षिप्यते-"सू०"जाति—पत्तिः" ॥५३॥ लौकिकानां

---

टि० (१) विज्ञानभिक्षुस्तु "क्रमाऽवलक्षा" इति पाठं परिकल्प्य क्षणाख्यस्तु कालः क्रमेण लक्ष्यते=आश्रीयते क्षणरूपप्रतियोग्यनुयोग्यघटितत्वात् क्रमस्येत्यर्थ इत्येवं व्याचक्षते ।

(२) ये पुनर्भूतभाविनः क्षणास्ते सर्वेऽपि सर्ववस्तुपरिणामाधाराः, एकदैव वार्द्धकाद्यदर्शनात् क्षणपर्य्यायकालत्वेनैव परिणामहेतुत्वादित्युत्तरपादे "क्षणप्रतियोगी" इत्याद्युत्तरसूत्रेषु व्याख्येया इत्यर्थ इति विज्ञानः । (३) तस्य=विवेकजज्ञानस्योदाहरणं प्रदर्श्यतेऽग्रिमसूत्रेण सूत्रकृतेत्यर्थः । (४) जात्यादिभिस्तुल्ययोर्वस्तुनोर्जातिलक्षणदेशैरन्यताऽनवच्छेदाद्=भेदाऽवधारणस्याऽसम्भवात् तत्र भेदप्रतिपत्तिस्ततो विवेकजज्ञानाद् भवति इत्यर्थः ।

भा०तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यताया हेतुः[१], गौरियं वड़वेयमिति । तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरं, कालाक्षी गौःस्वस्तिमती गौरिति। द्वयोरामलकयोर्जातिलक्षणसारूप्याद् देशभेदोऽन्यत्वकर इदम्पूर्वमिदमुत्तरमिति।यदा तु पूर्वमामलकमन्यव्यग्रस्य ज्ञातुरुत्तरदेश उपावर्त्यते तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः,असन्दिग्धेन च तत्त्वज्ञानेन भवितव्यमित्यत इदमुक्तं-ततःप्रतिपत्तिः,=विवेकजज्ञानाद् इति । कथम् । पूर्वाऽऽमलकसहक्षणो देश उत्तरामलकसहक्षणाद्देशाद्भिन्नः । ते चाऽऽमलके स्वदेशक्षणानुभवभिन्ने,अन्यदेशक्षणानु-

टी०जातिभेदोऽन्यताया ज्ञापकहेतुः,तुल्या जातिर्गोत्वं,तुल्यश्च देशः पूर्वत्वादिः । कालाक्षीस्वस्तिमत्योर्लक्षणभेदः परमिति । द्वयोरामलकयोस्तुल्या आमलकत्वजातिः, वर्त्तुलादिलक्षणं तुल्यं, देशभेदः परमिति । यदा तु योगिज्ञानं जिज्ञासुना केनचित् पूर्वाऽमलकमन्यव्यग्रस्य योगिनो ज्ञातुरुत्तरदेश उपावर्त्यते उत्तरदेशमामलकं ततोऽपसार्य्य पिधाय वा तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतादितिप्रविभागाऽनुपपत्तिः प्राज्ञस्य लौकिकस्य त्रिप्रमाणीनिपुणस्य । असन्दिग्धेन च तत्त्वज्ञानेन भवितव्यं,विवेकजज्ञानवतो योगिनः[२] सन्दिग्धत्वानुपपत्तेः।अतउक्तंसूत्रकृता-'ततः प्रतिपत्तिः' इति । तत इति व्याचष्टे-"विवेकजज्ञानाद्" इति । क्षणतत्क्रमसंयमाज्जातं ज्ञानं कथमामलकं तुल्यजातिलक्षणदेशादामलकाऽन्तराद्विवेचयतीति पृच्छति-"कथम्" इति । उत्तरमाह पूर्वामलकसहक्षणो देशः=पूर्वामलकैकक्षणो देशः । तेन सह निरन्तरपरिणाम इति यावद् । उत्तरामलकसहक्षणाद् देशाद्=उत्तराऽऽमलकनिरन्तरपरिणामाद् भिन्नः । भवतु देशयोर्भेदः । किमायातमाऽऽमलकभेदस्येत्यत आह—" ते चामलके स्वदेशक्षणाऽनुभवभिन्ने "

टि० (१) समानदेशस्थयोः समानवर्णयोर्गोवड़वयोर्देशलक्षणसारूप्ये सति या अन्यता=भेदप्रतीतिः, तस्या हेतुर्गोत्वादिर्जातिभेद इत्यर्थः । (२) उभयान्वयीदम् ।

भा० भवस्तु तयोरन्यत्वे हेतुरिति। एतेन दृष्टान्तेन[1] परमाणोस्तुल्य-जातिलक्षणदेशस्य पूर्वपरमाणुदेशसहक्षणसाक्षात्करणादुत्तरस्य परमाणोस्तद्देशाऽनुपपत्तावुत्तरस्य तद्देशाऽनुभवो भिन्नः सहक्षण-भेदात्तयोरीश्वरस्य योगिनोऽन्यत्वप्रत्ययो भवतीति । अपरे तु वर्णयन्ति—येऽन्त्या विशेषास्तेऽन्यताप्रत्ययं कुर्वन्तीति । तत्राऽपि[2] देशलक्षणभेदो मूर्त्तिव्यवधिजातिभेदश्चाऽन्यत्वहेतुः। क्षण-

---

टी० इति। स्वदेशसहितो यः क्षणः = तस्याऽऽमलकस्य कालकला स्वदेशेन सहौत्तराऽधर्य्यरूपपरिणामलक्षिता सा स्वदेशक्षणः। तस्याऽनुभवः = प्राप्तिर्वा ज्ञानं वा, तेन भिन्ने आमलके। ययोरामलकयोः पूर्वोत्तराभ्यां देशाभ्यामौत्तराधर्य्यपरिणामक्षण आसीत्तयोर्देशान्तरौत्तराधर्य्यपरिणाम-क्षणविशिष्टत्वमनुभवन् संयमी ते भिन्ने एव प्रत्येति, सम्प्रति तद्देशप-रिणामेऽपि पूर्वं भिन्नदेशपरिणामाद्विशिष्टस्य चैतद्देशपरिणामक्षणस्य संय-मतः साक्षात्करणात्। तदिदमुक्तम्—“अन्यदेशक्षणानुभवस्तु तयोरन्यत्वे हेतुः” इति । अनेनैव निदर्शनेन लौकिकपरीक्षकसंवादादिना परमाणोर-पीदृशस्य भेदो योगीश्वरबुद्धिगम्यः श्रद्धेय इत्याह—“एतेन” इति। ‘अपरे तु वर्णयन्ति’ = वर्णनमुदाहरति “ये” इति । वैशेषिका हि नित्यद्रव्य-वृत्तयोऽन्त्या विशेषा इत्याहुः। तथाहि—योगिनो मुक्तान् तुल्यजातिदेश-कालान् व्यवधिरहितान् परस्परतो भेदेन प्रत्येकं तत्त्वेन प्रतिपद्यन्ते तस्मा-दस्ति कश्चिदन्त्यो विशेष इति । तथाच स एव नित्यानां परमाण्वादीनां द्रव्याणां भेदक इति । तदेतद् दूषयति—“तत्राऽपि” इति। जातिदेशल-क्षणान्युदाहृतानि। मूर्त्तिः = संस्थानं, यथैकं विशुद्धाऽवयवसंस्थानोपप-

---

टि० (१) एतेनैव स्थूलदृष्टान्तेन तुल्यजातिलक्षणदेशस्य परमसूक्ष्मस्य परमाणोरपि अन्यताप्रत्ययो योगिनः पूर्वपरमाणुदेशसहक्षणयोः साक्षात्करणाद् भवतीत्यन्वयः। तत्र हेतुमाह—“सहक्षणभेदाद्” इति। कुतः सहक्षणयोर्भेद इत्यत आह “उत्तरस्य” इति । यत उत्तरस्य परमाणोः पूर्वदेशाऽनुपपत्त्योत्तरस्य स्वदेशप्राप्तिः पूर्वस्य स्वदेशप्राप्तितो भिन्ना ततः सहक्षणयोर्भेद इत्यर्थः। (२) तत्राऽपि=वैशेषिकमतेऽपि, देशादिभेदनाऽन्यताप्रत्ययसंभवा-दलं विशेषपदार्थकल्पनयेति भावः।

भा० भेदस्तु योगिबुद्धिगम्य एवेति । अत उक्तं मूर्त्तिव्यवधिजातिभेदाऽभावान्नास्ति मूलपृथक्त्वम्" इति वार्षगण्यः ॥ ५३ ॥

सू० तारकं सर्वविषयं सर्वथा विषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥

भा० तारकमिति=स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः। सर्वविषयं=

टी० न्नमपसार्य्य तस्मिन्नेव देशेऽन्यव्यग्रस्य द्रष्टुः कुत्सिताऽवयवसन्निवेश उपावर्त्यते तदा तस्य संस्थानभेदेन भेदप्रत्ययः। शरीरं वा मूर्त्तिः, तत्तत्संबन्धेनाऽऽत्मनां संसारिणां मुक्तात्मनां वा भूतचरेण यादृशतादृशेन भेद, इति सर्वत्र भेदप्रत्ययस्याऽन्यथासिद्धिर्नान्त्यविशेषकल्पना। व्यवधिर्भेदकारणं, यथा कुशपुष्करद्वीपयोर्देशस्वरूपयोरिति। यतो जातिदेशादिभेदा लोकबुद्धिगम्याः। अतउक्तं-"क्षणभेदस्तुयोगिबुद्धिगम्य एव" इति। एवकारः क्षणभेदमवधारयति, न योगिबुद्धिगम्यत्वं, तेन भूतचरेण देहसंबन्धेन मुक्तात्मनामपि भेदो योगिबुद्धिगम्य उन्नेय इति। यस्य तूक्ता भेदहेतवो न सन्ति तस्य प्रधानस्य प्रभेदा नास्तीत्याचार्य्यो मेने, यस्मादूचे—"कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वाद्" इति। तदाह "मूर्त्तिव्यवधि" इति। उक्तभेदहेतूपलक्षणमेतद्। जगन्मूलस्य प्रधानस्य पृथक्त्वं भेदो[१] नास्तीत्यर्थः ॥५३॥ ॥ तदेवं विषयैकदेशं विवेकजज्ञानस्य दर्शयित्वा विवेकजं ज्ञानं लक्षयति—"सू० तारकं—ज्ञानम्" ॥ ५४ ॥ विवेकजं ज्ञानमितिलक्ष्यनिर्देशः, शेषं लक्षणम्। संसारसागरात्तारयतीति तारकम्। पूर्वस्मात्[२] प्रातिभाद्विशेषयति "सर्वथा विषयम्" इति। पर्य्यायाः=अवान्तरविशेषाः। अत एव[३] विवेकजं ज्ञानं परिपूर्णं=नाऽस्य क्वचित्कि-

टि० (१) यतो मूर्त्यादिर्नित्यद्रव्येष्वस्ति भेदकोऽतः परैरुक्तं मूलपृथक्त्वं = मूलेषु नित्यद्रव्येषु विशेषपदार्थो, नास्ति। मूर्त्यादिभेदेभ्योऽतिरिक्तस्य भेदकस्याऽभावादित्यर्थ इति विज्ञानभिक्षुः। अत्र युक्ताऽयुक्तत्वे प्रकरणमेव नियामकम्।

(२) "प्रातिभाद्वा सर्वम्" इति पूर्वसूत्रोक्ताद्विवेकजज्ञानस्य पूर्वरूपात् प्रातिभादित्यर्थः।

(३) अतएव = विवेकज्ञानस्य साऽवान्तरविशेषत्रैकालिकपदार्थसाक्षात्कारहेतुत्वादेवेत्यर्थः।

भा० नाऽस्य किञ्चिदविषयीभूतमित्यर्थः, सर्वथा विषयम् = अतीताऽनागतप्रत्युत्पन्नं सर्वं पर्य्यायैः सर्वथा जानातीत्यर्थः। अक्रममिति = एकक्षणोपारूढं सर्वं सर्वथा गृह्णातीत्यर्थः। एतद्विवेकजं ज्ञानं परिपूर्णम्। अस्यैवांऽशो योगप्रदीपः, मधुमतीं भूमिमुपादाय यावदस्य परिसमाप्तिरिति ॥ ५४ ॥

प्राप्तविवेकजज्ञानस्याऽप्राप्तविवेकजज्ञानस्य वा—

## सू० सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५५ ॥

भा० यदा[१] निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्याऽन्यताप्रत्ययमात्रा[२] धिकारं दग्धक्लेशबीजं[३] भवति तदा पुरुषस्य शुद्धिसा-

---

टी० ञ्चित्कथञ्चित्कदाचिदगोचर इत्यर्थः। आस्तां तावज्ज्ञानान्तरं, सम्प्रज्ञातोऽपि तावदस्यांऽशः। तस्मादतः परं किम्परिपूर्णमित्याह—"अस्यैवांशो योगप्रदीप" इति। योगप्रदीपः=सम्प्रज्ञातः। किमुपक्रमः किमवसानश्चासावित्याह—"मधुमतीम्" इति। ऋतम्भरा प्रज्ञैव मधु, मोदकारणत्वाद्। यथोक्तं 'प्रज्ञाप्रासादमारुह्य' इति तद्वती मधुमती तामुपादाय, यावदस्य परिसमाप्तिः = सप्तधा प्रान्तभूमिः प्रज्ञा, अत एव विवेकजं ज्ञानं तारकं भवति तदंशस्य योगप्रदीपस्य तारकत्वादिति ॥ ५४ ॥

तदेवम्परम्परया कैवल्यस्य हेतून् सविभूतीन् संयमानुक्त्वा सत्त्वपुरुषाऽन्यताज्ञानं साक्षात्कैवल्यसाधनमित्यत्र सूत्रमवतारयति—"प्राप्त" इति। विवेकजं ज्ञानं भवतु मा वा भूत, सत्त्वपुरुषाऽन्यताख्यातिस्तु कैवल्यप्रयोजिकेत्यर्थः। सू० "सत्त्व—मिति"॥५५॥इतिः—सूत्रसमाप्तौ॥ईश्वरस्य = पूर्वोक्तैः संयमैर्ज्ञानक्रियाशक्तिमतः, अनीश्वरस्य वा=समनन्तरोक्तेन संय-

---

टि० (१) साक्षान्मोक्षफलिका या बुद्धिसत्त्वस्य पुरुषेण समाना शुद्धिस्तां प्रदर्शयति, "यदा" इत्यादिना। (२) मात्रपदेन सिद्धयधिकारव्युदासः।

(३) दग्धानि अनागतक्लेशरूपाणि विपाकाख्यसंसारबीजानि यत्र तत्तथा।

भा०रूप्यमिवाऽऽपन्नं भवति, तदा[1] पुरुषस्योपचरितभोगाऽभावः शुद्धिः। एतस्यामवस्थायां[2] कैवल्यं भवतीश्वरस्यानीश्वरस्य वा, विवेकजज्ञानभागिन, इतरस्य वा। न हि दग्धक्लेशबीजस्य ज्ञाने[3] पुनरपेक्षा का चिदस्ति। सत्त्वशुद्धिद्वारेणैतत्समाधिजमैश्वर्यं च ज्ञानञ्चोपक्रान्तम् । परमार्थतस्तु ज्ञानाददर्शनं निवर्त्तते। तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशा। क्लेशाऽभावात्कर्मविपाकाऽभावः। चरिताऽधिकाराश्चैतस्यामवस्थायां गुणा न पुरुषस्य पुनर्दृश्यत्वेनोपतिष्ठन्ते । तत्पुरुषस्य कैवल्यम् । तदा पुरुषः स्वरूपमात्रज्योतिरमलः केवली भवति ॥ ५५ ॥

इति श्रीपातञ्जलभाष्यप्रवचने विभूतिपादस्तृतीयः ॥ ३ ॥

---

टी०मेन विवेकजज्ञानभागिनः, इतरस्य वाऽनुत्पन्नज्ञानस्य, न विभूतिषु काचिदपेक्षाऽस्तीत्याह—"नहि" इति। ननु यद्यनपेक्षिता विभूतयः कैवल्ये, व्यर्थस्तर्हि तासामुपदेश इत्यत आह—"सत्त्वशुद्धिद्वारेण" इति। इत्थम्भूतलक्षणे तृतीया। नाऽत्यन्तमहेतवः कैवल्ये विभूतयः किन्तु न साक्षादित्यर्थः। ज्ञानं विवेकजमुपक्रान्तं यच्च पारम्पर्य्येण कारणं तदौपचारिकं न मुख्यं, परमार्थतस्तु ख्यातिरेव मुख्येत्यर्थः। ज्ञानादिति = प्रसङ्ख्यानादित्यर्थः ॥

अत्राऽन्तरङ्गान्यङ्गानि परिणामाः प्रपञ्चिताः ।

संयमाद् भूतिसंयोगस्तासु ज्ञानं विवेकजम् ॥ इति*पादार्थसंग्रहः श्लोकः ॥५५॥ इति श्रीमद्वाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां तत्त्ववैशारद्यां विभूतिपादस्तृतीयः समाप्तः ॥ ३ ॥

---

टि० (१) बुद्धेः शुद्धिमुक्त्वा पुरुषशुद्धिमाह "तदा" इति । परमार्थतो बुद्धिधर्मोऽपि भोगोऽविवेकदशायाम्पुरुष उपचर्य्यते । तद् यदोपचर्य्यमाणस्याऽपि भोगस्य पुरुषेऽभावो भवति तदा पुरुषः शुद्ध इत्युच्यते । * क्वाचित्कः ।

(२) एतस्यां=पूर्वोक्तबुद्धिपुरुषशुद्धिसाम्यरूपायामवस्थायाम् ।

(३) ज्ञाने सति मोक्षं प्रति विभूतिषु न काचिदपेक्षाऽस्तीत्यर्थः ।

इति श्रीमदुदासीनबालरामस्वामिकृतं टिप्पणम् ॥ ३ ॥

ॐम् ।

# पातञ्जलदर्शने कैवल्यपादः ॥ ४ ॥

## सू० जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥

भा० देहान्तरिता जन्मना सिद्धिः, औषधिभिः। असुरभवनेषु रसा-

टी० तदेवं प्रथमद्वितीयतृतीयपादैः समाधितत्साधनतद्विभूतयः प्राधान्येन व्युत्पादिताः, इतरच्चु प्रासङ्गिकमौपोद्घातिकं[१] चोक्तम् इदानीं तद्धेतुकं[२] कैवल्यं व्युत्पादनीयम् । न चैत[३]त्कैवल्यभागीयं चित्तं परलोकं च पारलौकिकं विज्ञानाऽतिरिक्तं चित्तकरणकसुखाद्यात्मकशब्दाद्युपभोक्तारमात्मानं च प्रसंख्यानपरमकाष्ठां च विना व्युत्पाद्य शक्यं वक्तुमिति* तदेतत्सर्वमत्रपादे व्युत्पादनीयम्, इतरच्च[४] प्रसङ्गादुपोद्घाताद्वा। तत्र प्रथमं सिद्धचित्तेषु कैवल्यभागीयं चित्तं निर्धारयितुकामः पञ्चतयीं सिद्धिमाह—"जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥

व्याचष्टे—"देहान्तरिता" इति। स्वर्गोपभोगभागीयात् कर्मणो मनुष्यजातीयाऽऽचरितात्कुतश्चिन्निमित्ताल्लब्धपरिपाकात्क्वचिद् देवनिकाये जातमात्रस्यैव दिव्यदेहान्तरिता सिद्धिरणिमाद्या भवतीति। ओषधिसिद्धिमाह—"असुरभवनेषु" इति। मनुष्यो हि कुतश्चिन्निमित्तादसुरभवनमुपसम्प्राप्तः कमनीयाभिरसुरकन्याभिरुपनीतं रसायनमुपयुज्याऽजराऽमरणत्वमन्याश्च सिद्धीरासादयति, इहैव वा रसायनोपयोगेन। यथा माण्डव्यो मुनिः, रसोपयोगाद्विन्ध्यवासी इति ।

टि० (१) प्रासङ्गिकं=प्रसङ्गादापतितं परमाणुपुञ्जक्षणिकमतनिराकरणादि । औपोद्घातिकं = प्रकृतशास्त्रप्रतिपाद्योपयोगिविचार उपोद्घातः, तस्मादागतं वृत्तिभेदनिरूपणादीत्यर्थः ।

(२) सः समाधिर्हेतुर्यस्य तत्तद्धेतुकम् । 	† इहेदानीमित्यपि सुसहम् ।

(३) एतत् = कैवल्यं, कैवल्ययोग्यं चित्तं विना न च व्युत्पाद्य शक्यं वक्तुमित्यन्वयः। परलोकमित्यादिद्वितीयान्तानां विनेत्यनेनाऽन्वयः । विज्ञानातिरिक्तमित्यात्मनो विशेषणम् ।

(४) इतरत् = पूर्वजन्मसद्भावचित्तपरीक्षादि प्रसङ्गाद् वक्ष्यते । प्रकृत्याऽऽपूरादि चोपोद्घाताद् व्युत्पादयिष्यत इत्यर्थः । * इति = यतः, तत् = तस्माद् ।

भा० यनेत्येवमादि, मन्त्रैः—आकाशगमनाऽणिमादिलाभः, तपसा सङ्कल्पसिद्धिः, कामरूपी यत्र तत्र कामग इत्येवमादि, समाधिजाः सिद्धयो व्याख्याताः ॥ १ ॥

तत्र कायेन्द्रियाणामन्यजातीयपरिणतानाम्—

सू० जात्यन्तरपरिणामः प्रकृत्याऽऽपूरात् ॥ २ ॥

भा० पूर्वपरिणामाऽपाय उत्तरपरिणामोपजनस्तेषा[१]मपूर्वाऽवयवाऽनुप्रवेशाद् भवति । कायेन्द्रियप्रकृतयश्च स्वं स्वं विकारमनुगृह्णन्त्याऽऽपूरेण धर्मादिनिमित्तमपेक्षमाणा इति ॥ २ ॥

---

टी० मन्त्रसिद्धिमाह—"मन्त्रैः" इति।तपःसिद्धिमाह—"तपसा" इति। सङ्कल्पसिद्धिमाह—"कामरूपी" इति। यदेव कामयतेऽणिमादि तदेकपदेऽस्य भवतीति। यत्र कामयते श्रोतुं वा मन्तुं वा तत्र तदेव शृणोति मनुते चेति। आदिशब्दाद् दर्शनादयः संगृहीता इति। समाधिजाः सिद्धयो व्याख्याताः—अधस्तने[२] पादे ॥ १ ॥ अथ चतसृषु सिद्धिष्वाषधादिसाधनासु तेषामेव कायेन्द्रियाणां जात्यन्तरपरिणतिरिष्यते। सा पुनर्नतावदुपादानमात्राद्। नहि तावन्मात्रमुपादानं न्यूनाऽधिकदिव्याऽदिव्यभावेऽस्य भवति, ना खल्वविलक्षणं कारणं कार्य्यवैलक्षण्यायाऽलम्। माऽस्याऽऽकस्मिकत्वं[३] भूदित्याशङ्क्य पूरयित्वा सूत्रं पठति "तत्र कायेन्द्रियाणामन्यजातीयपरिणतानां जात्यन्तरपरिणामः प्रकृत्याऽऽपूराद्" ॥ २ ॥ मनुष्यजातिपरिणतानां कायेन्द्रियाणां यो देवतिर्य्यग्जातिपरिणामः स खलु प्रकृत्याऽऽपूरात्। कायस्य हि प्रकृतिः पृथिव्यादीनि भूतानि, इन्द्रियाणां च प्रकृतिरस्मिता, तदवयवाऽनुप्रवेश आपूरस्तस्माद् भवति। तदिदमाह—"पूर्वपरिणाम" इति। ननु यद्याऽऽपूरणाऽनुग्रहः, कस्मात्पुनरसौ न सदातन इत्यत आह—"धर्मादि" इति।

---

टि०(१)तेषां=मनुष्यादिजातिरूपेण पूर्वं परिणतानां कायेन्द्रियाणां यः पूर्वगृहीतजातिपरिणामापाये सति उत्तरजात्यन्तरपरिणामो भवति स तत्प्रकृतानां नूतनाऽवयवानुप्रवेशाद् भवतीत्यर्थः। उपलक्षणं चैतद्,अणिमादिरूपः परिणामविशेषश्च प्रकृत्यवयवाऽपगमाद् भवतीत्यस्याऽपि। (२) कुत्र व्याख्यातेत्याकाङ्क्षां शमयति "अधस्तने" इति।पूर्वे पाद इत्यर्थः।

(३) कारणवैलक्षण्यमन्तरा कार्य्यवैलक्षण्येऽभ्युपगम्यमानेऽस्य कार्य्यवैलक्षण्यस्याऽऽकस्मिकत्वं निर्हेतुकत्वं स्यात्। तच्चाऽनिष्टं स्वभाववादाऽऽपत्तेरित्यर्थः।

सू० निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवद् ॥ ३ ॥

भा० न हि धर्मादि निमित्तं प्रयोजकं* प्रकृतीनां भवति, न कार्य्येण कारणं प्रवर्त्त्यत इति। कथन्तर्हि, 'वरणभेदस्तु ततः क्षेत्रिकवद्'। यथा क्षेत्रिकः केदारादपाम्पूरणात्[१] केदारान्तरं पिप्लावयिषुः[२] समं निम्नं निम्नतरं वा नाऽपः पाणिनाऽपकर्षति, आवरणं त्वासां भिनत्ति। तस्मिन् भिन्ने स्वयमेवाऽऽपः केदारान्तरमाप्लावयन्ति[३] तथा धर्मः प्रकृतीनामावरणमधर्मं भिनत्ति तस्मिन् भिन्ने स्वयमेव प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति। यथा वा स एव क्षेत्रिकस्त-

टी० तदनेन[४] तस्यैव शरीरस्य बाल्यकौमारयौवनवार्द्धकादीनि च, न्यग्रोधधानाया न्यग्रोधतरुभावश्च, वह्निकणिकायास्तृणराशिनिवेशितायाः प्रोद्भवज्वालासहस्रसमालिङ्गितगगनमण्डलत्वं च व्याख्यातम्[५] ॥ २ ॥

प्रकृत्याऽऽपूरादित्युक्तं, तत्रेदं संदिह्यते, किमापूरः प्रकृतीनां स्वाभाविकः, धर्मादिनिमित्तो वेति, किं प्राप्तं, सतीष्वपि प्रकृतिषु कदाचिदाऽऽपूराद् धर्मादिनिमित्तश्रवणाच्च तन्निमित्त एवेति प्राप्तम्, एवम्प्राप्त आह— "निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवद्" ॥३॥ सत्यं धर्मादयो निमित्तं, न तु प्रयोजकाः, तेषामपि प्रकृतिकार्य्यत्वाद्, न च कार्य्यं कारणं प्रयोजयति, तस्य तदधीनोत्पत्तितया कारणपरतन्त्रत्वात्, स्वतन्त्रस्य च प्रयोजकत्वाद्, न खलु कुलालमन्तरेण मृद्दण्डचक्रसलिलादय उत्पित्सितेनोत्पन्नेन वा घटेन प्रयुज्यन्ते, किन्तु स्वतन्त्रेण कुलालेन। न च पुरुषार्थोऽपि प्रवर्त्तकः, किन्तु तदुद्देशेनेश्वरः। उद्देशतामात्रेण पुरुषार्थः प्रवर्त्तक इत्युच्यते। उत्पित्सोस्त्वस्य पुरुषार्थस्याऽव्यक्तस्य स्थितिकारणत्वं युक्तम्। न चैतावता धर्मादीनामनिमित्तता। प्रतिबन्धाऽपनयन-

टि० (१) अपामिति करणत्वस्य शेषत्वविवक्षया षष्ठी। जलेन पूरणादित्यर्थः। (२) पिप्लावयिषुः=जलं निनीषुः। आवरणम्=आलवालम्। सममित्यादि त्रिकं केदारान्तरस्य विशेषणम्। *तत्प्रयोजकमिति पाठे तु तच्छब्दार्थ आपूरः। (३) आप्लावयन्ति = स्वाऽवयवाऽनुप्रवेशेनाऽनुगृह्णन्तीत्यर्थः (४) तदनेन = प्रकृत्यवयवाऽनुप्रवेशापगमाभ्यां महत्त्वादिपरिणामकथनेनेत्यर्थः।

(५) उपलक्षणं चेदं वामनाद्यवताराणां क्षणादेव त्रिभुवनव्यापित्वं, विश्वरूपत्वादिकं च प्रकृत्याऽऽपूरेणैव। अगस्त्यादीनां च समुद्रपानादिकं तोयादिप्रकृत्यपसरणेनैवेत्यपि बोध्यम्।

भा०स्मिन्नेव केदारे न प्रभवत्यौदकान् भौमान् वा रसान् धान्यमूलान्यनुप्रवेशयितुं, किन्तर्हि मुद्गगवेधुकश्यामाकादींस्ततोऽपकर्षति, अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति, तथा धर्मो निवृत्तिमात्रे कारणमधर्मस्य, शुद्ध्यशुद्ध्योरत्यन्तविरोधाद्, न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति । अत्र[१] नन्दीश्वरादय उदाहार्य्याः । विपर्ययेणाप्यधर्मोधर्मं बाधते, ततश्चाऽशुद्धिपरिणाम इति ।तत्राऽपि[२] नहुषाऽजगरादय उदाहार्य्याः ॥ ३ ॥

यदा तु योगी बहून् कायान् निर्मिमीते तदाकिमेकमनस्कास्ते[३] भवन्त्यथाऽनेकमनस्का इति,—

सू० निर्माणचित्तान्यस्मितामात्राद्[४] ॥ ४ ॥

भा०अस्मितामात्रं चित्तकारणमुपादाय निर्माणचित्तानि करोति, ततः सचित्तानि भवन्ति ॥ ४ ॥

---

टी० मात्रेण क्षेत्रिकवदुपपत्तेः । ईश्वरस्यापि धर्माऽधिष्ठानार्थं प्रतिबन्धाऽपनय एव व्यापारो वेदितव्यः । तदेतन्निगदव्याख्यातेन भाष्येणोक्तम् ॥ ३ ॥

प्रकृत्याऽऽपूरेण सिद्धीः समर्थ्य सिद्धिविनिर्मितनानाकायवर्त्तिचित्तैकत्वनानात्वे विचारयति—"यदा तु" इति।तत्र नानामनस्त्वे कायानां प्रतिचित्तमभिप्रायभेदाद् एकाऽभिप्रायाऽनुरोधश्च परस्परं प्रतिसन्धानं च न स्यातां पुरुषान्तरवत् । तस्मादेकमेव चित्तं प्रदीपवद्विसारितया बहूनपि निर्माणकायान् व्याप्नोतीति प्राप्त आह-"निर्माणचित्तान्यस्मितामात्राद्" ॥ ४ ॥ यद् यावज्जीवच्छरीरं तत्सर्वमेकैकाऽसाधारणचित्तान्वितं दृष्टं, तद्यथा चैत्रमैत्रादिशरीरम् । तथाच निर्माणकायाः, इति सिद्धं तेषामपि प्रातिस्विकं मन इत्यभिप्रायेणाऽऽह—"अस्मितामात्रम्" इति ॥ ४ ॥

---

टि० (१) अत्र = धर्मस्याऽधर्मरूपप्रतिबन्धापसारणद्वारा सत्त्वबहुलकायेन्द्रियपरिणामनिमित्तत्व इत्यर्थः।नन्दी नामा अश्ववर्षो मनुष्य ईश्वरो जात इत्यर्थः।(२)तत्रापि = अधर्मस्य धर्मापसारणद्वारा तमोबहुलकायेन्द्रियपरिणामनिमित्तत्व इत्यर्थः। नहुषनामा राजा अजगरो जात इत्यर्थः । (३) एकमनस्काः=निर्मातृयोगिमनोमात्रेण व्यवहारभाजः । अनेकमनस्काः=निर्मातृयोगिमनोऽतिरिक्तप्रातिस्विकमनोभाजः ।

(४) स्वसङ्कल्पेन निर्मितानि चित्तानि निर्माणचित्तानीत्युच्यन्ते । यावन्ति शरीराणि निर्मिमीते तावन्त्येव चित्तानीत्यर्थः । चित्तानां कारणमाह—"अस्मितामात्राद्" अहङ्कारमात्रादित्यर्थः। स्थूलेऽपि प्रञ्चम्येषा इत्याशयेनाऽऽह—"अस्मितामात्रम्" इत्यादि ।

सू० प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

भा० बहूनां चित्तानां कथमेकचित्ताऽभिप्रायपुरस्सरा प्रवृत्तिरिति[१] सर्वचित्तानां प्रयोजकं चित्तमेकं निर्मिमीते, ततः[२] प्रवृत्तिभेदः॥५॥

सू० तत्र* ध्यानजमनाशयम् ॥ ६ ॥

भा० पञ्चविधं निर्माणचित्तं जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धय इति[३]। तत्र यदेव ध्यानजं चित्तं तदेवाऽनाशयं = तस्यैव नास्त्याशयो

---

टी० यदुक्तमनेकचित्तत्व एकाऽभिप्रायाऽनुरोधश्च प्रतिसन्धानं च न स्याता-मिति, तत्रोत्तरं सूत्रम्—"प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्" ॥५॥ अभविष्यदेष दोषो यदि चित्तमेकं नानाकायवर्त्तिमनोनायकं न निरमा-स्यत, तन्निर्माणे त्वदोषः। नचैकं गृहीत्वा कृतं, प्रातिस्विकैर्मनोभिः कृतं वा नायकनिर्माणेन, निजस्यैव मनसो नायकत्वादितिवाच्यम्। प्रमाण-सिद्धस्य नियोगपर्य्यनुयोगाऽनुपपत्तेरिति। अत्र पुराणं भवति—'एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः। भूत्वा यस्मात्तु बहुधा भवत्येकः पुन-स्ततः। तस्माच्च मनसो भेदा जायन्ते चैत एव हि। एकधा स द्विधा चैव त्रिधा च बहुधा पुनः। योगीश्वरः शरीराणि करोति विकरोति च। प्राप्नुया-द्विषयान् कैश्चित्कैश्चिदुग्रं तपश्चरेत्। संहरेच्च पुनस्तानि सूर्य्यो रश्मिगणा-निव" इति। तदेतेनाऽभिप्रायेणाह—"बहूनां चित्तानाम्" इति ॥ ५ ॥

तदेवमुदितेषु पञ्चसु सिद्धचित्तेष्वपवर्गभागीयं चित्तं निर्धारयति—"तत्र ध्यानजमनाशयम् ॥ ६ ॥ आशेरत इत्याशयाः = कर्मवासनाः क्ले-शवासनाश्च। त एते न विद्यन्ते यस्मिन् तदनाशयं चित्तमपवर्गभागीयं भवतीत्यर्थः। यतो रागादिनिबन्धना प्रवृत्तिर्नास्त्यतो नास्ति पुण्यपापा-

---

* तत्र = पञ्चविधसिद्धचित्तानां मध्ये।

टि० (१) इति = इत्यालोच्य योगी पूर्वसिद्धं यच्चित्तं तदेवैकं चित्तं स्वनिर्मितानां चित्ता-न्तराणां प्रयोजकं = नियामकं, निर्मिमीते = करोतीत्यर्थः। (२) ततः = नायक-चित्ताऽभिप्रायादेवेतरेषां निर्मितानां चित्तानां प्रवृत्तिरित्यर्थः। (३) इति—शब्दो यत इत्यर्थे। यतो जन्मादिजाः पञ्च सिद्धयोऽतश्चित्तमपि पञ्चविधमित्यर्थः।

भा०रागादिप्रवृत्तिर्ना[१]ऽतः पुण्यपापाभिसंबन्धः, क्षीणक्लेशत्वाद् योगिन इति । इतरेषान्तु विद्यते कर्माशयः ॥ ६ ॥ यतः—

सू० कर्माऽशुक्लाऽकृष्णं योगिनस्त्रिविधमितरेषाम् ॥७॥

भा०चतुष्पात् खल्वियं कर्मजातिः—कृष्णा, शुक्लकृष्णा, शुक्ला, अशुक्लाऽकृष्णा चेति[२], तत्र कृष्णा दुरात्मनां, शुक्लकृष्णा बहिःसाधनसाध्या, तत्र परपीडाऽनुग्रहद्वारेण कर्माशयप्रचयः शुक्ला तपःस्वाध्यायध्यानवताम्।सा हि केवले मनस्यायतत्वा[३]द्बहिःसाधनाऽधीना न परान् पीडयित्वा भवति।अशुक्लाऽकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति ।

---

टी०ऽभिसबन्धः । कस्मात् पुनः, रागादिजनिता प्रवृत्तिर्नास्तीत्यत आह—"क्षीणक्लेशत्वाद्" इति । ध्यानजस्यानाशयस्य मनोऽन्तरेभ्यो विशेषं दर्शयितुमितरेषामाशयवत्तामाह—"इतरेषान्तु" इति ॥६॥ तत्रैव च हेतुपरं सूत्रमवतारयति—"यत" इति । सू० कर्माऽशुक्लाऽकृष्णं योगिनस्त्रिविधमितरेषाम् ॥७॥ पदं = स्थानं, चतुर्षु समवेता चतुष्पदा, यद् यावद् बहिःसाधनसाध्यं तत्र सर्वत्राऽस्ति कस्य चित्पीडा, न हि व्रीह्यादिसाधनेऽपि कर्मणि परपीडा नास्ति। अवघातादिसमये पिपीलिकादिवधसम्भवाद्, अन्ततो बीजादिवधेन स्तम्बादिभेदोत्पत्तिप्रतिबन्धाद्, अनुग्रहश्च दक्षिणादिना ब्राह्मणादेरिति।शुक्लातपःस्वाध्यायध्यानवतामसंन्यासिनाम् । शुक्लत्वमुपपादयति—"सा हि" इति । 'अशुक्लाऽकृष्णा संन्यासिनां'—संन्यासिनो दर्शयति"क्षीण"इति।कर्मसंन्यासिनो+हि न क्वचिद् बहिःसाधनसाध्ये कर्मणि प्रवृत्ता इति न चैषामस्ति कृष्णः कर्माशयः । योगाऽनुष्ठानसाध्यस्य कर्माशयफलस्येश्वरे समर्पणान्न शुक्लः कर्माशयः । निरत्ययफलो हि शुक्ल उच्यते।यस्य फलमेव नास्ति कुतस्तस्य निरत्ययफलमित्यर्थः ।

---

टि० (१) रागादेः प्रवृत्तिर्यस्मात्संस्कारात् स रागादिप्रवृत्तिः, आशयविशेषणमिदम् ।

(२) तमोमूला दुःखफलिका हिंसादिः कृष्णा, रजोमूला दुःखोपसर्जनसुखफलिका यागादिः शुक्लकृष्णा, सत्त्वमूला सुखमात्रफलिका स्वाध्यायादिः शुक्ला, गुणाहेतुका सुखदुःखफलशून्या सम्प्रज्ञातसमाध्यादिः अशुक्लाऽकृष्णेति बोध्यम् ।

(३) मनोमात्राऽधीनत्वाद् इत्यर्थः । +कर्माऽसंम्भवात् संन्यासिनो हि इति क्व० ।

भा०तत्राऽशुक्लं[1] योगिन एव फलसंन्यासाद् अकृष्णं चानुपादानाद्, इतरेषां तु भूतानां पूर्वमेव त्रिविधमिति ॥ ७ ॥

सू० ततस्तद्विपाकाऽनुगुणानामेवाऽभिव्यक्तिर्वासनानाम् ॥ ८ ॥

भा० तत इति=त्रिविधात्कर्मणः, तद्विपाकाऽनुगुणानामेवेति=यज्जातीयस्य कर्मणो यो विपाकस्तस्याऽनुगुणा या वासनाः कर्मविपाकमनुशेरते तासामेवाऽभिव्यक्तिः, न हि दैवं कर्म विपच्यमानं[2] नारकतिर्य्यङ्मनुष्यवासनाऽभिव्यक्तिनिमित्तं भवति, किन्तु दैवाऽनुगुणा एवाऽस्य वासना व्यज्यन्ते, नारकतिर्य्यङ्मनुष्येषु चैवं समानश्चर्चः[3] ॥ ८ ॥

सू० जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वाद् ॥ ९ ॥

---

टी०तदेवं चतुष्टयीं कर्मजातिमुक्त्वा, कतमा कस्येत्यवधारयति-"तत्राऽशुक्लम्" इति ॥७॥ कर्माशयं विविच्य क्लेशाशयगतिमाह-ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥८॥ यज्जातीयस्य=पुण्यजातीयस्यापुण्यजातीयस्य वा,कर्मणो यो विपाकः=दिव्यो वा नारको वा जात्यायुर्भोगः,तस्य विपाकस्याऽनुगुणाः। ता एवाऽऽह- "या वासनाः कर्मविपाकमनुशेरते" इति । अनुशेरते=अनुकुर्वन्ति।दिव्यभोगजनिता हि दिव्यकर्मविपाकानुगुणा वासना। न हि मनुष्यभोगवासनाऽभिव्यक्तौ दिव्यकर्मफलोपभोगसम्भवः। तस्मात् स्वविपाकाऽनुगुणा एव वासनाः कर्माऽभिव्यञ्जनीया इति भाष्यार्थः ॥८॥ स्यादेतद् मनुष्यस्य प्रायणाऽनन्तरमधिगतमार्जारभावस्याऽनन्तरतया मनुष्यवासनाया एवाऽभिव्यक्त्या भवितव्यम्। न खल्वस्ति सम्भवो, यदनन्तरदिवसाऽनुभूतं न स्मर्य्यते, व्यवहितदिवसाऽनुभूतं च स्मर्य्यत इत्यत आह—"जातिदेशकालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वाद् ॥९॥

---

टि० (१) तत्र=चतुर्विधकर्ममध्येऽशुक्लमकृष्णं कर्म योगिन एव, नेतरस्येत्यर्थः। अशुक्लत्वे हेतुः-"फलसंन्यासाद्" इति। शुभकर्माऽनुष्ठानेऽपि फलकामनाया अभावादशुक्लत्वम्। अकृष्णत्वे हेतुः-"अनुपादानाद्" = निषिद्धकर्मत्यागादित्यर्थः।

(२) विपच्यमानं = फलोन्मुखम्। (३) चर्चः = विचारः।

भा०वृषदंशविपाकोदयः[१]स्वव्यञ्जकाञ्जनाऽभिव्यक्तः स यदि जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितः पुनश्च स्वव्यञ्जकाञ्जन एवोदियाद् द्रागित्येव पूर्वाऽनुभूतवृषदंशविपाकाऽभिसंस्कृता वासना उपादाय व्यज्येत्। कस्माद्, यतो व्यवहितानामप्यासां सदृशं कर्माऽभिव्यञ्जकं निमित्तीभूतमित्यानन्तर्य्यमेव कुतश्च, स्मृतिसंस्कारयोरेकरूपत्वाद्, यथाऽनुभवास्तथा संस्काराः। ते च कर्मवासनाऽनुरूपाः, यथा च वासनास्तथा स्मृतिः, इति जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतिः, स्मृतेश्च पुनः संस्कारा इत्येते स्मृतिसंस्काराः कर्माशयवृत्तिलाभवशाद् व्यज्यन्ते। अतश्च

टी०भवतु वृषदंशवासनाया जात्यादिव्यवधिस्तथाऽपि तस्याः फलत आनन्तर्य्यम्। वृषदंशविपाकेन कर्मणा तस्या एव स्वविपाकानुगुणाया अभिव्यक्तौ तत्स्मरणसमुत्पादाद् इत्याह-"वृषदंशविपाकोदय" इति । उदेत्यस्मादित्युदयः=कर्माशयः, 'पुनश्च स्वव्यञ्जकाञ्जन एवोदियाद्'=अभिव्यज्येत विपाकारम्भाऽभिमुखः क्रियेतेत्यर्थः । अभिसंस्कारः=क्रिया, उपादाय=गृहीत्वा, व्यज्येत। यदि व्यज्येत स्वविपाकाऽनुगुणा एव वासना गृहीत्वा, व्यज्येतेत्यर्थः।आनन्तर्य्यमेव फलतः कारणद्वारकमुपपाद्य कार्य्यद्वारकमुपपादयति-"कुतश्च स्मृति"इति। एकरूपतया सादृश्यम्।तदेवाऽऽह-"यथा" इति। नन्वनुभवस्वरूपाश्चेत्संस्कारास्तथा सत्यनुभवा विशरारव इत्येतेऽपि विशरारवः कथं चिरभाविनेऽनुभवाय कल्पेरन्नित्यत आह-ते च कर्मवासनाऽनुरूपा"इति । यथा अपूर्वं स्थायि क्षणिककर्मनिमित्तमपि, एवं क्षणिकाऽनुभवनिमित्तोऽपि संस्कारः स्थायी। किञ्चिद्भेदाधिष्ठानं च सारूप्यम्। अन्यथाऽभेदे तत्त्वेन सादृश्याऽनुपपत्तेरित्यर्थः । सुगममन्यद् ॥ ९ ॥

टि० (१) वृषदंशविपाकोदयः=मार्जारयोनिप्रापककर्मफलाऽऽरम्भः। स्वव्यञ्जकं यदञ्जनं कारणं तेनैवाऽभिव्यक्तो=वर्त्तमानाऽवस्थो भवति, न तु देहत्यागमात्रेणाऽऽकस्मिकः । अतः स यदि जातिशतादिव्यवधानेनाऽपि स्वव्यञ्जकं प्राप्य उदियात्=फलोन्मुखीभवेत् तदा शीघ्रमेव पूर्वानुभूतवृषदंशविपाकजनिता वासना गृहीत्वैवाभिव्यक्तो भवति, न त्वनुपादायेति भाष्यार्थः। नन्वेवं मनुष्यजन्मन्येवाऽव्यवहिते कुतो न वृषदंशवासना तत्राह— "यथाऽनुभवा" इति । मनुष्यवासनानां वृषदंशविपाकहेतुत्वं वारयति "ते च" इति। कर्माशयाऽनुरूपा एव संस्कारा अपेक्षिता इत्यर्थः ।

भा॰ व्यवहितानामपि निमित्तनैमित्तिकभावाऽनुच्छेदादाऽऽनन्तर्यमेव सिद्धमिति. ॥ ९ ॥

सू॰ तासामनादित्वं चाऽऽशिषो नित्यत्वाद ॥१०॥

भा॰ तासां वासनानामाशिषो नित्यत्वादनादित्वं, येयमात्माऽऽशीर्मा न भूवं भूयासमिति सर्वस्य दृश्यते। सा न स्वाभाविकी। कस्माद्, जातमात्रस्य जन्तोरननुभूतमरणधर्मकस्य द्वेषदुःखाऽनुस्मृतिनिमित्तो मरणत्रासः कथं भवेद्,* न च स्वाभाविकं वस्तु निमित्तमु-

टी॰ स्यादेतद्, व्यज्येरन् पूर्वपूर्वतरजन्माऽभिसंस्कृता वासना यदि पूर्वपूर्वतरजन्मसद्भावे प्रमाणं स्यात्। तदेव तु नास्ति। न च जातमात्रस्य जन्तोर्हर्षशोकदर्शनमात्रं प्रमाणं भवितुमर्हति । पद्मादिसङ्कोचविकाशवत्स्वाभाविकत्वेन तदुपपत्तेरित्यत आह—"तासामनादित्वं चाऽऽशिषो नित्यत्वाद्" ॥ १० ॥ तासां वासनानामनादित्वं च न केवलमानन्तर्यमिति चाऽर्थः । आशिषोनित्यत्वाद् = आत्माऽऽशिषो वासनानामनादित्वेन नित्यत्वाऽव्यभिचारादिति। ननु स्वाभाविकत्वेनाऽऽप्युपपत्तेरसिद्धमाशिषो नित्यत्वमित्यत आह—"येयम्" इति। नास्तिकः पृच्छति—"कस्माद्" इति। उत्तरं—"जातमात्रस्य जन्तोः" इति। अत [1] एवैतस्मिन् जन्मन्यननुभूतमरणधर्मकस्य = मरणमेव धर्मः सोऽननुभूतो येन स तथोक्तः तस्य। मातुरङ्कात्प्रस्खलतः कम्पमानस्य माङ्गल्यचक्रादिलाञ्छितं तदुरःसूत्रमतिगाढं[2] पाणिग्राहमवलम्बमानस्य बालकस्य कम्पभेदानुमिता द्वेषाऽनुषक्ते दुःखे या स्मृतिस्तन्निमित्तो मरणत्रासः कथं भवेदिति। ननूक्तं स्वभावादित्यत आह—"न च" इति। न च स्वाभाविकं वस्तु निमित्तमुपादत्ते=गृह्णाति स्वोत्पत्तौ[3]। एतदुक्तं भवति—बालकस्येदृशो दृश्यमानः कम्पो भयनिबन्धनः ईदृशकम्पत्वाद् अस्मदादिकम्पवद्। बालकस्य भयं द्वेषदुःखस्मृतिनिमित्तं

* भवेदित्यस्याग्रे यदि पूर्वपूर्वभवीयमरणदुःखत्रासना न स्वी क्रियेरन्निति शेषो बोध्यः ।

टि॰ (१) अत एव=जातमात्रस्य मरणत्रासदर्शनादेव ।

(२) तदुरःसूत्रं=मातृवक्षःस्थलपरिहितं माङ्गल्यचक्रादिलाञ्छितं सूत्रमतिगाढं यथा स्यात्तथा पाणिनाऽवलम्बमानस्येत्यर्थः ।

(३) कुत्र निमित्तं न गृह्णातीत्याकाङ्क्षितं पूरयति—"स्वोत्पत्तौ" इति ।

भा॰ पादत्ते। तस्मादनादिवासनाऽनुविद्धमिदं चित्तं निमित्तवशात्काश्चिदेव वासना प्रतिलभ्य पुरुषस्य भोगायोपावर्त्तत इति । घटप्रासादप्रदीपकल्पं* सङ्कोचविकाशि चित्तं शरीरपरिमाणाकार-

टी॰ भयत्वादस्मदादिभयवद्। आगामिप्रत्यवायोत्प्रेक्षालक्षणं च भयं न दुःखस्मृतिमात्राद् भवत्यपितु यतो बिभेति तस्य प्रत्यवायहेतुभावमनुमाय सम्प्रत्यपि प्रत्यवायभयं विदध्यादितिशङ्कते। तस्माद् यज्जातीयादनुभूतचराद्[1] द्वेषाऽनुषक्तं दुःखमुपपादितं तस्य स्मरणात्तज्जातीयस्याऽनुभूयमानस्य तद्दुःखहेतुत्वमनुमाय ततो बिभेति। न च बालकेनाऽस्मिन् जन्मनि स्खलनस्याऽन्यत्र दुःखहेतुत्वमवगतं, न च तादृशं दुःखमुपलब्धम्। तस्मात्प्राग्भवीयोऽनुभवः परिशिष्यते। तच्चैतदेवं प्रयोगमारोहति—जातमात्रस्य बालकस्य स्मृतिः पूर्वाऽनुभवनिबन्धना, स्मृतित्वादस्मदादिस्मृतिवदिति । न च पद्मसङ्कोचविकाशावपि स्वाभाविकौ। न हि स्वाभाविकं कारणान्तरमपेक्षते। बह्नेरौष्ण्यं प्रत्यपि कारणान्तराऽपेक्षाप्रसङ्गात् । तस्मादागन्तुकमरुणकरसम्पर्कमात्रमेव कमलिनीविकाशकारणं, सङ्कोचकारणं च संस्कारः स्थितिस्थापक इति । एवं स्मिताद्यनुमितहर्षादयोऽपि प्राचि भवे हेतवो वेदितव्याः, तदास्तां तावत्। प्रकृतमुपसंहरति—"तस्माद्" इति। निमित्तम् = लब्धविपाककालं कर्म, प्रतिलम्भः = अभिव्यक्तिः। प्रसङ्गतश्चित्तपरिमाणविप्रतिपत्तिं निराचिकीर्षुर्विप्रतिपत्तिमाह—"घटप्रासाद" इति । देहप्रदेशवर्त्ति[2]कार्य्यदर्शनाद् देहाद् बहिःसद्भावे चित्तस्य न प्रमाणमस्ति

* यथा घटप्रासादरूपस्वल्पमहदाऽऽश्रयभेदेन प्रदीपप्रकाशः सङ्कोचविकाशशीलः, तथा पिपीलिकागजरूपस्वल्पमहदाश्रयभेदेन चित्तमपि स्वल्पपरिमाणं महत्परिमाणं च भवत्यत एव तत्तच्छरीरपरिमाणतुल्यपरिमाणं मन, इति मध्यमपरिमाणवादिनः साङ्ख्यस्याऽऽशयः ।

टि॰ (१) पूर्वजन्मन्यनुभूताद् इत्यर्थः ।

(२) "न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा" इति साङ्ख्यसूत्राऽनुसारेण मनसो विभुत्वं निषेधति मध्यमपरिमाणवादी—"देहप्रदेशवर्त्ति" इति ।

भा० मात्रमित्यपरे प्रतिपन्नाः। तथाचाऽन्तराभावः, संसारश्चयुक्त इति।

टी० नचैतदणुपरिमाणं,[१] दीर्घशष्कुलीभक्षणादावपर्य्यायेण ज्ञानपञ्चकाऽनुत्पादप्रसङ्गाद्। नचाऽननुभूयमानक्रमकल्पनायां प्रमाणमस्ति। नचैकमणु मनो नानादेशैरिन्द्रियैरपर्य्यायेण संबन्धुमर्हति। तत्पारिशेष्यात् कायपरिमाणं चित्तं, घटप्रासादवर्त्तिप्रदीपवत् सङ्कोचविकाशौ[२] पुत्तिकाहस्तिदेहयोरस्योत्पत्स्येते। शरीरपरिमाणमेवा ऽऽकारः = परिमाणं यस्येत्यपरे प्रतिपन्नाः। नन्वेवं कथमस्यक्षेत्रबीजसंयोगः। न खल्वेतदनाश्रयं मृतशरीरान्मातृपितृदेहवर्त्तिनी लोहितरेतसी प्राप्नोति, परतन्त्रत्वाद्। नहि स्थाण्वादिष्वगच्छत्सु तच्छाया गच्छति, नचाऽगच्छति पटे तदाऽऽश्रयं चित्रं गच्छति। तथाच न संसारः स्यादित्यत आह—"तथाचान्तराऽभावः संसारश्च युक्त" इति। तथाच = शरिरपरिमाणत्वे, देहान्तरप्राप्तये पूर्व्वदेहत्यागश्च देहान्तरप्राप्तिश्चाऽन्तराऽस्याऽऽतिवाहिकशरीरसंयोगाद् भवतः। तेन खल्वयं देहान्तरे सञ्चरेत्। तथाचपुराणम्—"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलाद्" इति। सोऽयमन्तराभावः। अत एव संसारश्च युक्त इति। तदेतदमृष्यमाणः स्वमतमाह "वृत्तिः" इति। वृत्तिरेवाऽस्य विभुनश्चित्तस्य सङ्कोचविकाशिनीत्याचार्य्यः स्वयम्भूः प्रतिपेदे। इदमत्राकूतम्। यद्यनाश्रयं चित्तं न देहान्तरसञ्चारि कथमेतदाऽऽतिवाहिकमाश्रयते। तत्राऽपि देहान्तरकल्पनायामनवस्था। न चाऽस्य देहान्निष्कर्ष आतिवाहिकस्य सम्भवति। निष्कृष्टस्य चेतसस्तत्संबन्धाद्। अस्तु तर्हि सूक्ष्मशरीरमेवाऽऽसर्गाद् आ च महाप्रलयान्नियतं चित्तानामधिष्ठानं षाट्कौशिकशरीरमध्यवर्त्ति। तेन हि चित्तमासत्यलोकादाऽऽचाऽवीचेस्तत्र तत्र शरीरे सञ्चरति। निष्कर्षश्चास्योपपन्नः षाट्कौशिककायात्। तत्र हि तदन्तराभावस्तस्य नियतत्वाद्। नचाऽस्याऽपि[३]

टि० (१) "ज्ञानाऽयौगपद्यादेकं मनः" "यथोक्तहेतुत्वाच्चाऽणु" न्या०. अ० ३। आह्नि० २। ६३। इत्यक्षपादोक्तमणुपरिमाणं खण्डयति—"न चैतदणुपरिमाणम्" इति। ननु यथाऽऽशु सञ्चारादलातस्य सम्भ्रमतो विद्यमानोऽपि क्रमो न गृह्यते, तथा बुद्धीनामप्याशुसञ्चाराद्विद्यमानक्रमस्याऽग्रहणाद् युगपदुपलब्धिरित्यभिमानः। तथाच न्या० सू०—"अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चाराद्" इति चेदत्राह—"न चाऽननुभूयमान" इति।

(२) पुत्तिकादेहे सङ्कोचः, हस्तिदेहे च विकाश इत्यर्थः।

(३) अस्याऽपि=सूक्ष्मशरीरस्याऽपि इत्यर्थः।

भा० वृत्तिरेवाऽस्य विभुनः सङ्कोचविकाशिनीत्याचार्य्यः । तच्च धर्मादिनिमित्ताऽपेक्षं, निमित्तं च द्विविधं— बाह्यमाध्यात्मिकं च। शरीरादिसाधनाऽपेक्षं बाह्यं = स्तुतिदानाऽभिवादनादि, चित्त-

टी० सद्भावे प्रमाणमस्ति। न खल्वेतदध्यक्षगोचरः, न च संसारोऽस्याऽनुमानम्, आचार्य्यमतेनाप्युपपत्तेः। आगमस्तु पुरुषस्य निष्कर्षमाह। न च चित्तं वा सूक्ष्मशरीरं वा पुरुषः, किन्तु चितिशक्तिरप्रतिसंक्रमा, न चास्या निष्कर्षः सम्भवति, इत्यौपचारिको व्याख्येयः। तथाच[१]चितेश्चित्तस्य च तत्र तत्रवृत्त्यभावएवनिष्कर्षार्थः।यच्चस्मृतीतिहासपुराणेषुमरणानन्तरंप्रेतशरीरप्राप्तिस्तद्विमोकश्च सपिण्डीकरणादिरिभित्युक्तं तदनुजानीमः, आतिवाहिकत्वं तस्य न मृष्यामहे। नचात्रास्ति कश्चिदागमः। लब्धशरीर एव च यमपुरुषैरपि पाशबद्धो नीयेत, नत्वातिवाहिकशरीरः। तस्मादाहङ्कारिकत्वाच्चेतसोऽहङ्कारस्य गगनमण्डलवत्त्रैलोक्यव्यापित्वाद्विभुत्वं मनसः[२]एवञ्चेदस्य

टि० (१) औपचारिकव्याख्यानप्रकारमाह "तथाच" इति।

(२) एतच्च मनसो विभुत्वाऽऽख्यानमाचार्य्यमनोपपादनपरत्वेन प्रौढिवादेनैव, न तु वास्तवमेव मनसो विभुत्वमेतत्तन्त्रसिद्धान्तः। प्रकृत्यतिरिक्तस्य सर्वस्यैव कार्य्यत्वेन परिच्छिन्नत्वाद्। न हि विभुः कश्चित् क्रियावानुत्पत्तिमान् वा सम्भवति। अत एव "न व्यापकत्वं मनसः करणत्वादिन्द्रियत्वाद्वा" "सक्रियत्वाद् गतिश्रुतेः" इति सूत्राभ्यां मनसो विभुत्वं निराकृत्य "न निर्भागत्वं तद्योगाद् घटवद्" इति सूत्रेणाक्षपादादिसम्मतमणुत्वं प्रतिक्षिपता कापिलाचार्य्येण मनसो मध्यमपरिमाणत्वं सिद्धान्तितम्। समानतन्त्रत्वाच्च स एवाऽभ्युपगमोऽत्राऽऽस्थातुं योग्यः। एवं च सति क्रियावत्त्वादिकमपि स्वरसत उपपद्येत। नाऽपि अन्तःकरणं विभुर्नित्येन्द्रियत्वाच्छ्रोत्रवदिति प्राभाकरसम्मतमनुमानं विभुत्वे प्रमाणम्। "एतस्मात्प्रजायन्ते मनः सर्वेन्द्रियाणि च" इत्यादिश्रुत्या उभयोरप्यस्मन्मते नित्यत्वाऽभावादनुमानस्याभासमात्रत्वाद्। यत्तूक्तं सूक्ष्मदेहे प्रमाणाभावाद् आतिवाहिकत्वाऽनङ्गीकाराच्च मनसो निराश्रयगमनाऽसम्भवान्न मध्यमपरिमाणत्वम्। तदपि न। "भूतेन्द्रियमनोबुद्धिवासनाकार्य्यवायवः। अविद्या चाष्टकं प्रोक्तं पुर्य्यष्टकामिदं पुनः" इति सनन्दनाचार्य्योक्तेः। "पुर्य्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन वै" इति ब्रह्मपुराणाच्च। "सप्तदशैकं लिङ्गम्" इति सां० सूत्राच्च, सूक्ष्मशरीरस्य सद्भावाद्। "तत्क्षणादेव गृह्णाति शरीरमातिवाहिकम्। ऊर्ध्वं व्रजन्ति भूतानि त्रीण्यस्मात्तस्य विग्रहाद्"। "आतिवाहिकसञ्ज्ञोऽसौ देहो भवति भार्गव। केवलं तन्मनुष्याणां नाऽन्येषां प्राणिनां क्वचिद्" इत्यादिस्मृतिभ्य आतिवाहिकशरीरस्य प्रमाणसिद्धत्वाच्च। एवञ्च मनसो मध्यमपरिमाणत्वे न कोऽपि दोषः प्रसरतीत्यस्तु तदेव, समानतन्त्रानुमतत्वात्। अत एव भाष्यकारैर्मध्यमपरिमाणत्वखण्डने, न कापि युक्तिरुपन्यस्ता। अत एव चाऽस्वरसप्रबोधकमाचार्य्यपदोपादानमित्यलं बहुना।

भा॰मात्राधीनं श्रद्धाद्याध्यात्मिकम्। तथाचोक्तं-"ये चैते मैत्र्यादयो ध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहाऽऽत्मानः प्रकृष्टं धर्म्ममभिनिर्वर्त्तयन्ति"(१)। तयोर्मानसं बलीयः। कथं, ज्ञानवैराग्ये केनाऽतिशय्येते। दण्डकारण्यं चित्तबलव्यतिरेकेण कः शारीरेण कर्मणा शून्यं कर्त्तुमुत्सहेत। समुद्रमगस्त्यवद्वा पिबेद्॥ १०॥

सू॰ हेतुफलाऽऽश्रयाऽऽलम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः॥ ११॥

भा॰हेतुः(२) = धर्मात्सुखमधर्माद् दुःखं, सुखाद् रागो, दुःखाद् द्वेष, ततश्च प्रयत्नः। तेन मनसा वाचा कायेन वा परिस्पन्दमानः परः

---

टी॰वृत्तिरपि विभ्वीति सर्वज्ञतापत्तिरित्यत उक्तं-"वृत्तिरेवाऽस्य" इति। स्यादेतत्। चित्तमात्राऽधीनाया वृत्तेः सङ्कोचविकाशौ कुतः कादाचित्काविल्यत आह"तच्च"इति। तच्च चित्तं धर्माद्यपेक्षं वृत्तौ निमित्तं, विभजते-"निमित्तं च" इति। आदिशब्देनेन्द्रियधनादयो गृह्यन्ते। श्रद्धादीस्त्राऽपि वीर्य्यस्मृत्यादयो गृह्यन्ते। आन्तरत्वे सम्मतिमाचार्य्याणामाह-"तथाचोक्तम्"इति। विहारो = व्यापारः, प्रकृष्टं = शुक्लं, तयोः = बाह्याऽऽभ्यन्तरयोर्मध्ये, ज्ञानवैराग्ये = तज्जनितौ धर्मौ, केन बाह्यसाधनधर्मेण अतिशय्येते = अभिभूयेते, ज्ञानवैराग्यजावेव धर्मौ तमभिभवतः = बीजभावादपनयत इत्यर्थः। अत्रैव सुप्रसिद्धमुदाहरणमाह—"दण्डकारण्यम्" इति॥ १०॥

अथैताश्चित्तवृत्तयो वासनाश्चाऽनादयश्चेत्कथमासामुच्छेदो, न खलु चितिशक्तिरनादिरुच्छिद्यत इत्यत आह-"हेतुफलाऽऽश्रयाऽऽलम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः" इति॥ ११॥ अनादेरपि(३) समुच्छेदो दृष्टः। तद् यथा-

---

टि॰ (१) ध्यायिनां = योगिनां, ये एते मैत्रीकरुणादयो विहाराः = क्रीडावदयत्नसाध्या व्यापारास्ते बाह्यव्रीहिपशुहिंसादिसाधननिरपेक्षस्वभावा, अतस्ते प्रकृष्टं = शुक्लमेव धर्मं निष्पादयन्ति न कृष्णशुक्लमित्यर्थः।

(२) हेतुशब्दार्थमाह—"हेतुरित्यादिना" इत्येष हेतुरित्यन्तेन।

(३) वासना नोच्छिद्यन्तेऽनादित्वादाऽऽत्मवदित्यनुमानममानमित्याह-"अनादेरपि"इति।

भा० मनुगृह्णन्त्युपहन्ति वा। ततः पुनर्धर्माऽधर्मौ सुखदुःखे रागद्वेषौ इति प्रवृत्तमिदं षडरं[1] संसारचक्रम्। अस्य च प्रतिक्षणमावर्त्तमानस्याऽविद्या नेत्री मूलं सर्वक्लेशानाम्, इत्येष हेतुः। फलन्तु[2]=यमाश्रित्य यस्य प्रत्युत्पन्नता धर्मादेः। न ह्यपूर्वोपजनः। मनस्तु साऽधिकारमाश्रयो वासनानाम्। न ह्यवसिताधिकारे मनसि निराश्रया वासनाः स्थातुमुत्सहन्ते। यदभिमुखीभूतं वस्तु यां वासनां व्यनक्ति तस्यास्तदालम्बनम्। एवं हेतुफलाऽऽश्रयाऽऽलम्बनैरेतैः सङ्गृहीताः सर्वा वासनाः। एषामभावे तत्संश्रयाणामपि वासनानामभावः। ११।

नास्त्यसतः सम्भवो, न चाऽस्ति सतो विनाश इति द्रव्यत्वेन सम्भवन्त्यः[3] कथं निवर्त्तिष्यन्ते वासना इति—

---

टी० ऽनागतत्वस्येति। सव्यभिचारित्वादसाधनं, चितिशक्तिस्तु विनाशकारणाऽभावान्न विनश्यति, नत्वनादित्वाद्। उक्तं च वासनानामनादीनामपि समुच्छेदे कारणं सूत्रेणेति। अनुग्रहोपघातावपि धर्माधर्मादिनिमित्तमुपलक्ष्यतः। तेन सुरापानादयोऽपि सङ्गृहीता भवन्ति। नेत्री=नायिका। अत्रैव हेतुमाह—"मूलम्" इति। प्रत्युत्पन्नता=वर्त्तमानता, न तु धर्मस्वरूपोत्पादः, अत्रैव हेतुः—"नहि" इति। यदभिमुखीभूतं वस्तु=कामिनीसम्पर्कादि। व्यापकाभावे व्याप्यस्याभाव इति सूत्राऽर्थः॥ ११॥

---

टि० (१) षडरम् = अरः = रथचक्रशलाका, कुलालचक्रशलाका वा, धर्माधर्मसुखदुःखरागद्वेषरूपाः षडरा यस्य तत्तथेत्यर्थः। वासनाया हेतुः संसारचक्रं तस्याऽपि हेतुरविद्येत्याह "अस्य च" इति यथा कुलालचक्रस्य दण्डेन शलाकाप्रेरणे कृते वेगाख्यसंस्कारो भवति। येन कियत्कालं स्वयमपि भ्राम्यति। एवमविद्यादण्डभ्रामितं संसारचक्रं वासनाहेतुरिति भावः।

(२) हेतुमुक्त्वा फलशब्दार्थमाह—"यमाश्रित्य" इति। यं पुरुषार्थमुद्दिश्य धर्माद्युत्पन्नं तद् वासनानां फलमित्यर्थः। आश्रयमाह "मनः" इति।

(३) इति = यतोऽतो द्रव्यत्वेन सम्भवन्त्यः = वस्तुत्वेन विद्यमाना इत्यर्थः।

सू० अतीताऽनागतं स्वरूपतोऽस्त्यध्वभेदाद् धर्माणाम्[१] ॥ १२ ॥

भा० भविष्यद्व्यक्तिकमनागतम्, अनुभूतव्यक्तिकमतीतम्, स्वव्यापारोपारूढं वर्त्तमानं, त्रयं चैतद्वस्तु ज्ञानस्य[२] ज्ञेयं, यदि चैतत्स्वरूपतो नाऽभविष्यन्नेदं निर्विषयं ज्ञानमुदपत्स्यत । तस्मादतीताऽनागतं स्वरूपतोऽस्तीति । किञ्च भोगभागीयस्य वाऽपवर्गभागीयस्य वा कर्मणः फलमुत्पित्सु यदि निरुपाख्यमिति तदुद्देशेन

---

टी० उत्तरसूत्रमवतारयितुं शङ्कते—"नास्ति" इति । असत इति सम्पाताऽऽयातं,[३] निदर्शनाय वा । सू० "अतीत—धर्माणाम्" ॥ १२ ॥ नाऽसतामुत्पादो, न सतां विनाशः, किन्तु सतामेव धर्माणामध्वभेदपरिणाम एवोदयव्ययाविति सूत्रार्थः । अनुभूता=प्राप्ता येन व्यक्तिस्तत्तथा, सम्प्रति व्यक्तिर्नास्तीति यावद् । इतश्च त्रैकाल्येऽपि धर्मः सन्नित्याह—"यदि च" इति । न ह्यसज्ज्ञानविषयः सम्भवति निरुपाख्यत्वाद् । विषयाऽवभासं हि विज्ञानं नाऽसति विषये भवति । त्रैकाल्यविषयं च विज्ञानं योगिनां, अस्मदादीनां च विज्ञानमसति विषये नोत्पन्नं स्याद्, उपपद्यते च । तस्मादतीताऽनागते सामान्यरूपेण समनुगते स्त इति । एवमनुभवतो ज्ञानं विषयसत्त्वे हेतुरुक्तम् । उद्देश्यत्वादप्यनागतस्य विषयत्वेन सत्त्वमेवेत्याह—"किञ्च भोगभागीयस्य" इति । कुशलः = निपुणः, अनुष्ठेयेऽपि च यद् यन्निमित्तं तत्सर्वं नैमित्तिके सत्येव विशेषमाधत्ते, यथा काण्डलाववेदाऽध्यायादयः । न खल्वेते काण्डलावादयोऽसन्तमुत्पादयन्ति । सत एव तत्प्रा-

---

टि० (१) यतोऽतीतादि वस्तु स्वरूपतोऽस्त्येवाऽतो वासनोच्छेदो न वासनास्वरूपाऽपायोऽपि तु वासनानामत्यन्ताऽतीततामात्रसम्पादनमित्यर्थः । नन्वेकस्मिन् धर्मिण्येकदा कथं विरुद्धधर्मसत्ताऽत आह—"अध्वभेदाद्" इति । भिन्नाऽध्वकत्वान्न विरोध इत्यर्थः । वर्त्तमानलक्षणानामेव धर्माणामेकदा विरोध इति भावः ।

(२) ज्ञानस्य=योगिप्रत्यक्षस्य, ज्ञेयं=विषयः ।

(३) संपाताऽऽयातं=प्रसङ्गादुक्तम् । प्रकृतोपयुक्तं तु, न चाऽस्ति सतो विनाश इत्येतावन्मात्रमेवेत्यर्थः ।

भा० तेन निमित्तेन कुशलाऽनुष्ठानं न युज्येत । सतश्च[१] फलस्य निमित्तं वर्त्तमानीकरणे समर्थं, नाऽपूर्वोपजनने । सिद्धं निमित्तं नैमित्तिकस्य विशेषाऽनुग्रहणं कुरुते, नाऽपूर्वमुत्पादयति । धर्मी चाऽनेकधर्मस्वभावः । तस्य चाऽध्वभेदेन धर्माः प्रत्यवस्थिताः । न च यथा वर्त्तमानं व्यक्तिविशेषाऽऽपन्नं द्रव्यतोऽस्त्येवमतीतमनागतं वा। कथन्तर्हि, स्वेनैव व्यङ्ग्येन[२] स्वरूपेणाऽनागतमस्ति, स्वेन चाऽनुभूतव्यक्तिकेन स्वरूपेणाऽतीतमिति, वर्त्तमानस्यैवाऽध्वनः[३] स्वरूपव्यक्तिरिति न सा भवति अतीताऽनागतयोरध्वनोः।एकस्य चाऽध्वनः समये द्वावध्वानौ धर्मिसमन्वाऽऽगतौ भवत एवेति नाऽभूत्वा भावस्त्रयाणामध्वनामिति ॥ १२ ॥

---

टी० तित्रिकारौ कुर्वन्ति। एवं कुलालादयोऽपि सत एव घटस्य वर्त्तमानभावहेतव इत्याह—"सतश्च" इति। यदि तु वर्त्तमानत्वाऽभावादतीताऽनागतयोरसत्त्वं हन्त भो वर्त्तमानस्याऽप्यभावोऽतीताऽनागतत्वाऽभावाद्। अध्वधर्म्यऽविशिष्टतया तु सत्त्वं त्रयाणामप्यविशिष्टमित्याभिप्रायेणाह—"धर्मी च" इति । प्रत्येकमवस्थानं प्रत्यवस्थितिरिति । 'द्रव्यत' इति—द्रव्ये धर्मिणि, सार्वविभक्तिकस्तसिः। यद्यतीताऽनागतावतीताऽनागतत्वेन स्तस्तर्हि वर्त्तमानसमये तत्त्वाऽभावान्न स्यातामित्यत आह—"एकस्य च" इति । प्रकृतमुपसंहरति—"नाऽभूत्वा भाव" इति ॥ १२ ॥

---

टि० (१) सतश्च=अव्यक्तावस्थया कारणे विद्यमानमानस्यैव, फलस्य=कार्य्यस्य घटादेः, वर्त्तमानताकरणे निमित्तं=दण्डादि समर्थं, नात्यन्ताऽसतो, नरविषाणाद्युत्पत्तिप्रसङ्गाद् इत्यर्थः। नन्वेवं कारणस्यापि सदातनत्वाद् अतीताऽवस्थादपि कारणात्सदैव कार्य्योत्पत्तिप्रसङ्ग इत्यत आह—"सिद्धम्" इति। सिद्धं = वर्त्तमानाऽवस्थमेव कारणं कार्य्यस्य विशेषाऽनुग्रहणं = व्यक्तावस्थापादनं कुरुते, नातीताद्यवस्थमित्यर्थः। उपसंहरति "न" इति। अतो नाऽपूर्वम् = अत्यन्तासन्तमवोत्पादयतीत्यर्थः ।

(२) स्वेन व्यङ्ग्येन = भाविव्यक्तिकेन ।

(३) वर्त्तमाने काले इत्यर्थः। सप्तम्यर्थेऽत्र षष्ठी ।

सू० ते व्यक्तसूक्ष्मा गुणाऽऽत्मानः ॥ १३ ॥

भा० ते खल्वमी त्र्यध्वानो धर्मा वर्त्तमाना [1] व्यक्तात्मानो अतीताऽनागताः सूक्ष्मात्मानः षडविशेषरूपाः । सर्वमिदं गुणानां सन्निवेशविशेषमात्रमिति*परमार्थतो गुणात्मानः । तथाच शास्त्राऽनुशासनं—"गुणानां परमं रूपं न दृष्टिपथमृच्छति । यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्" इति ॥ १३ ॥

टी० स्यादेतद्, अयन्तु नानाप्रकारो धर्मिधर्माऽवस्थापरिणामरूपो विश्वभेदप्रपञ्चो न प्रधानादेकस्माद् भवितुमर्हति, न ह्यविलक्षणात्कारणात्कार्य्यभेदसम्भव इत्यत आह—"ते व्यक्तसूक्ष्मा गुणाऽऽत्मानः" ॥ १३ ॥ ते = त्र्यध्वानो धर्मा व्यक्ताश्च सूक्ष्माश्च गुणा ऽऽत्मानो, न त्रैगुण्या ऽतिरिक्तमेषामस्ति कारणम् । वैचित्र्यन्तु तदा ऽऽहिता ऽनादिक्लेशवासना ऽनुगताद्वैचित्र्याद् । यथोक्तं वायुपुराणे—"वैश्वरूप्यात् प्रधानस्य परिणामोऽयमद्भुत" इति । व्यक्तानां पृथिव्यादिनामेकादशेन्द्रियाणां च वर्त्तमानानामतीता ऽनागतत्वं षडविशेषा यथायोगं[2] भवन्ति । सम्प्रति विश्वस्य नित्याऽनित्यरूपे विभजन् नित्यरूपमाह—"सर्वमिदम्" इति । इदं = दृश्यमानं, सन्निवेशः = संस्थानभेदवान् परिणाम इत्यर्थः । अत्रैव षष्टितन्त्रशास्त्रस्यानुशिष्टिः* —मायेव तु—न माया, सुतुच्छकं = विनाशि । यथा हि माया ऽह्नायैवान्यथा भवति एवं विकारा अपि आविर्भावतिरोभावधर्माणः प्रतिक्षणमन्यथा प्रकृतिर्नित्यतया मायाविधर्मेण परमार्था इति ॥ १३ ॥

---

टि० (१) व्यक्तात्मान इत्यस्य विवरणं— वर्त्तमाना इति । सूक्ष्मात्मान इत्यस्य विवरणम्—"अतीताऽनागता" इति ।* इति = यतः, अतो वस्तुतो गुणस्वरूपाः ।

(२) यथायोगं = पृथिव्यादयः पञ्च पञ्चतन्मात्ररूपाः, एकादशेन्द्रियाणि चाहङ्कारमात्रारूपाणीत्यर्थः । "षडविशेषा इति पाठः क्वाचित्कः प्रामादिकत्वादुपेक्षणीय" इति भिक्षूक्तिरुपेक्षणीया । तथा सति, सर्वमिदमिति भाष्येणाऽसम्बद्धत्वात्पूर्वभाष्यस्याऽनन्वितत्वापत्तेः। यत्तूक्तं सर्वेषां गुणात्मकत्वेन षडविशेषमात्रनिर्देशाऽनौचित्यं, तदपि न । न हि साक्षादेव सर्वेषां गुणात्मकत्वं, किन्तर्हि स्वस्वकारणपरम्परयेति प्रामाणिकाऽभ्युपगमाद् । एवञ्च पृथिव्यादयः षोडशविकाराः षडविशेषरूपास्ते च गुणात्मान इत्येवं बोध्यम् । * = वार्षगण्याचार्य्यप्रणीतस्य षष्टिपदार्थप्रतिपादकस्य सांख्यशास्त्रस्य ।

भा० यदा तु सर्वे गुणाः कथमेकः शब्द एकमिन्द्रियमिति—

सू० परिणामैकत्वाद् वस्तुतत्त्वम् ॥ १४ ॥

भा० प्रख्याक्रियास्थितिशीलानां गुणानां ग्रहणात्मकानां करणभावेनैकः परिणामः श्रोत्रमिन्द्रियं, ग्राह्यात्मकानां शब्दभावेनैकः परिणामः शब्दो विषय इति, शब्दादीनां[१] मूर्त्तिसमानजातीयानामेकः परिणामः पृथिवीपरमाणुस्तन्मात्रावयवः। तेषां चैकः

---

टी० भवतु त्रैगुण्यस्येत्थं परिणामवैचित्र्यमेकस्तु परिणामः पृथिवीयमिति वा, तोयमिति वा। कुतः, त्र्यात्मन एकत्वविरोधादित्याशङ्क्य सूत्रमवतारयति— "यदा तु सर्वे गुणा" इति॥सू० "परिणामैकत्वाद् वस्तुतत्त्वम्"॥१४॥ बहूनामप्येकः परिणामो दृष्टः। तद् यथा, गवाऽश्वमहिषमातङ्गानां रुमानिक्षिप्तानामेको लवणत्वजातीयलक्षणः परिणामः, वर्त्तितैलाऽनलानां च प्रदीप इति। एवं बहुत्वेऽपि गुणानां परिणामैकत्वं, ततस्तन्मात्रभूतभौतिकानां प्रत्येकं तत्त्वमेकत्वम्। ग्रहणात्मकानां = सत्त्वप्रधानतया प्रकाशात्मनामहङ्काराऽवान्तरकार्य्याणां करणभावेनैकः परिणामः श्रोत्रमिन्द्रियम्। तेषामेव गुणानां तमःप्रधानतया जडत्वेन ग्राह्यात्मकानां शब्दतन्मात्रभावेनैकः परिणामः शब्दो विषयः। शब्द इति = शब्दतन्मात्रं, विषय इति जडत्वमाह, न तु तन्मात्रस्य श्रोत्रविषयत्वसम्भव इति। शेषं सुगमम्। अथ विज्ञानवादिनं वैनाशिकमुत्थापयति—"नास्त्यर्थो विज्ञानविसहचर" इति। यदि हि भूतभौतिकानि विज्ञानमात्राद् भिन्नानि भवेयुस्ततस्तदुत्पत्तिकारणमीदृशं प्रधानं कल्पेत, न तु तानि विज्ञानातिरिक्तानि सन्ति परमार्थतः। तत्कथंप्रधान कल्पनं, कथंचग्रहणानामिन्द्रियाणामहङ्कारविकाराणांकल्पना इति। तथाहि

---

टि० (१) मूर्त्तिः = काठिन्यं पृथिवीत्वमिति यावत्। मूर्त्त्या सजातीयानां शब्दादिपञ्चतन्मात्राणामेकः परिणामः पृथिवीपरमाणुः = स्थूलपृथिव्याः परमसूक्ष्माऽवस्थेत्यर्थः। नेयं सूक्ष्माऽवस्थापन्ना पृथिवी निरवयवाऽपि तु पञ्चतन्मात्राऽवयवा इत्याह "तन्मात्राऽवयवः" बहुव्रीहिरत्र। एवं पञ्चतन्मात्राणामेकं सूक्ष्मपरिणाममुक्त्वा स्थूलमेकं परिणाममाह—तेषामिति।

भा० परिणामः पृथिवी-"गौर्वृक्षः पर्वत इत्येवमादिः। भूतान्तरेष्वपि[१] स्नेहौष्ण्यप्रणामित्वाऽवकाशदानान्युपादाय सामान्यमेकविकाराऽऽरम्भः समाधेयः । नास्त्यर्थो विज्ञानविसहचरोऽस्ति तु ज्ञानमर्थविसहचरं स्वप्नादौ कल्पितमित्यनया दिशा[२] ये वस्तु-

टी० जडस्याऽर्थस्य स्वयमप्रकाशत्वान्नास्त्यर्थो विज्ञानविसहचरः=साहचर्य्यं=सम्बन्धः, तदभावो विसहचरः। विरभावार्थः। विज्ञानाऽसम्बन्धी नास्तीतिव्यवहारयोग्य इत्यर्थः। अस्ति तु विज्ञानमर्थविसहचरं, तस्य स्वयंप्रकाशत्वेन स्वगोचराऽस्तितव्यवहारे कर्त्तव्ये जडमर्थम्प्रत्यपेक्षाऽभावात्, तदनेन वेद्यत्वसहोपलम्भनियमौ सूचितौ विज्ञानवादिना। तौ चैवं प्रयोगमारोहतः-यद्वेद्यते येनवेदनेन तत्ततो न भिद्यते यथा ज्ञानस्यात्मा। वेद्यन्ते च भूतभौतिकानीति विरुद्धव्याप्तोपलब्धिः। निषेध्यभेदविरुद्धेन व्याप्तं वेद्यत्वं दृश्यमानं स्वव्यापकमभेदमुपस्थापयत्तद्विरुद्धं भेदं प्रतिक्षिपतीति। तथा यद्येन नियतसहोपलम्भं तत् ततो न भिद्यते यथैकस्माच्चन्द्राद् द्वितीयश्चन्द्रः। नियतसहोपलम्भश्चाऽर्थो ज्ञानेनेतिव्यापकविरुद्धोपलब्धिः[३] निषेध्यभेदव्यापकाऽनियमविरुद्धो नियमोऽनियमं निवर्त्तयंस्तद्व्याप्तं भेदं प्रतिक्षिप-

टि० (१) भूतान्तरेषु=जलादिषु, स्नेहादिजातीयानि=जलत्वतेजस्त्ववायुत्वाऽऽकाशत्वजातीयानि तन्मात्राणि गृहीत्वा, सामान्यं=सजातीयानामनेकेषां धर्मभूत एकविकाराऽऽरम्भ उपपादनीयः। तद्यथा—गन्धतन्मात्रं विना चतुस्तन्मात्राणां स्नेहजातीयानामेकः परिणामः जलपरमाणुः, तेषां च महाजलादिः। एवमग्नावपि।

(२) विज्ञानाऽभावकालिकोऽर्थो नास्ति। ज्ञानन्त्वर्थाऽभावकालिकं स्वप्नादौ कल्पितमस्तीत्यनया दिशा=एतद्युक्तिमार्गेण ये वस्तुस्वरूपमन्त्यन्तमपह्नुवते=निराकुर्वते ते योगाचाराः कथं श्रद्धेयवचनाः स्युरित्यन्वयः। ये इत्यादि, अपह्नुव इत्यन्तं स्वोक्तं स्पष्टयति 'ज्ञानेत्यादिनाऽऽहुरित्यन्तेन'। स्वप्नविषयोपममित्यनेन योः यः प्रत्ययः स सर्वो बाह्यानालम्बनः यथा स्वप्नमायादिप्रत्ययस्तथा चैष विवादाध्यासितः प्रत्यय इत्यनुमानं मानमुक्तमिति बोध्यम्।

(३) यौ मिथो भिन्नौ तौ न नियतसहोपलम्भौ। यथाऽश्विन्याख्ये नक्षत्रे, कदाचिन्मेघपिधानेनाऽन्यतरस्योपलब्धेरित्येवं यो भेदव्यापकोऽनियतसहोपलम्भस्तस्य व्यापकस्याऽत्राऽभावाद् व्याप्यभेदस्याऽभावोऽनुमीयत इत्यर्थः। तदेव स्पष्टयति "निषेध्यभेद" इत्यादिना।

भा०स्वरूपमपह्नुवते-ज्ञानपरिकल्पनामात्रं वस्तु स्वप्नविषयोपमं, न परमार्थतोऽस्तीति ये आहुः, ते तथेति प्रत्युपस्थितमिदं स्वमाहात्म्येन वस्तु कथमप्रमाणात्मकेन विकल्पज्ञानबलेन वस्तुस्वरूपमुत्सृज्य तदेवाऽपलपन्तः श्रद्धेयवचनाः स्युः ॥ १४ ॥

टी०तीति। स्यादेतद्। अर्थश्चेन्न भिन्नो ज्ञानात्कथं भिन्नवत्प्रतिभासत इत्यत आह-"कल्पितम्"इति।यथाहुर्वैनाशिकाः-"सहोपलम्भनियमादभेदो नीलतद्धियोः।भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये"इति।कल्पितत्वं विशदयति-"ज्ञानपरिकल्पना"इति।निराकरोति-"ते"इति।ते कथं श्रद्धेयवचनाः स्युरितिसम्बन्धः।प्रतिज्ञानमुपस्थितं प्रत्युपस्थितम्।कथं, "तथा"इति। यथा यथाऽवभासत इदङ्कारास्पदत्वेन तथा तथा स्वयमुपस्थितं,नतुकल्पनोपकल्पितं विज्ञानविषयतापन्नम्। स्वमाहात्म्येनेति कारणत्वं विज्ञानं प्रत्यर्थस्य दर्शयति।यस्मादर्थेन स्वकीयया ग्राह्यशक्त्या विज्ञानमजनि तस्मादर्थस्य ग्राहकं, तदेवम्भूतं वस्तु कथमप्रमाणात्मकेन विकल्पज्ञानबलेन विकल्पस्याऽप्रमाणात्मकत्वात्तद्बलस्यापि तदात्मनोऽप्रमाणात्मकत्वम्। तेन वस्तुस्वरूपमुत्सृज्य-उपप्लुतं कृत्वा।उपगृह्येति क्वाचित्कः पाठः। तत्रापि स एवार्थः।तदेवापलपन्तः श्रद्धातव्यवचनाः स्युरिति। इदमत्राकूतं-सहोपलम्भनियमश्च वेद्यत्वं च हेतू सन्दिग्धव्यतिरेकतयाऽनैकान्तिकौ।तथाहि,[1] ज्ञानाऽऽकारस्य भूतभौतिकादेर्यदेतद् बाह्यत्वं स्थूलत्वं च भासेते,न ते ज्ञाने सम्भवतः। तथाहि[2]—नानादेशव्यापिता स्थौल्यं, विच्छिन्नदेशता च बाह्यत्वं,

टि०(१)ग्राह्यग्राहकाऽभेदसाधकयोर्वेद्यत्वसहोपलम्भनियमरूपयोर्हेत्वोः।साध्याऽभेदविपक्षभेदवृत्तित्वेनाऽनैकान्तिकत्वं वक्तुमुपक्रमते "तथाहि" इत्यादिना ।

(२) ये त्वाहुः-घटपटादयो हि बाह्याऽर्थाः,न परमसूक्ष्मा,अपि तु स्थूला इति सर्वसम्मतम्। तत्र स्थौल्यं नानादिग्देशव्यापित्वमेव वक्तव्यमन्यस्याऽसम्भवाद्। एवञ्च ज्ञानार्थयोर्भेदे सति एकदिग्देशे ज्ञानेन प्रकाशितत्वादर्थस्याऽनावरणमन्यदिग्देशे चाप्रकाशितत्वादाऽऽवरणमित्येवं विरुद्धधर्माध्यासादेकस्याप्यर्थस्य भेदः स्याद्। ज्ञानाऽभेदे तु ज्ञानाऽवच्छेदकस्याऽर्थस्य ज्ञायमानस्य तदभिन्नस्याऽनावृतत्वाद् आवृतस्य ज्ञानात्मत्वाऽभावेन विरोधाऽभावाद्दर्शनाऽदर्शनाभ्यामेकस्यैव स्थौल्यवस्तुन आवृतत्वाऽनावृतत्वसम्भवात्तस्य चान्तरत्वान्नायं दोष इति। तेषां मते ज्ञानोपाधेरनावृतत्वादज्ञानाऽऽकारत्वेनाऽऽवरणाऽनावरणत्वलक्षणेन विरुद्धधर्मसंसर्गेण नानादिग्देशव्यापित्वं स्थौल्यं यद्यपि युज्यते, तथाऽपि तद्देशत्वाऽतद्देशत्वकम्पाऽकम्पत्वरक्ताऽरक्तत्वलक्षणविरुद्धधर्मसंसर्गैः प्रसज्यमानं नानात्वं ज्ञानाकारत्वेऽपि न शक्यं शक्रेण वारयि-

टी० नचैकविज्ञानस्य नानादेशव्यापिता विच्छिन्नदेशता चोपपद्यते। तद्देशत्वाऽतद्देशत्वलक्षणविरुद्धधर्मसंसर्गस्यैकत्रासम्भवात्, सम्भवे वा त्रैलोक्यस्यैकत्वप्रसङ्गाद्। अत [1] एवाऽस्तु विज्ञानभेद इति चेद्, हन्त भोः, परमसूक्ष्मगोचराणां प्रत्ययानां परस्परवार्त्ताऽनभिज्ञानां स्वगोचरमात्रजागरूकाणां कुतस्त्योऽयं स्थूलावभासः। न च विकल्पगोचराऽभिलापः, संसर्गाऽभावाद्, विशदप्रतिभासत्वाच्च। न च स्थूलमालोचितं यतस्तदुपाधिकस्य विशदताभवेत् तत्पृष्ठभाविनः। न चाविकल्पवद् विकल्पोऽपि स्वाऽऽकारमात्रगोचरः, तस्य चाऽस्थूलत्वाद् न स्थूलगोचरो भवितुमर्हति। तस्माद् बाह्ये च प्रत्यये स्थूलस्य बाह्यस्य चाऽसम्भवादलीकमेव तदाऽऽस्थातव्यम्। न चाऽलीकं विज्ञानादभिन्नं, विज्ञानस्य तद्वत् तुच्छत्वप्रसङ्गात्। तथाच वेद्यत्वस्याऽभेदव्याप्यत्वाऽभावात् कुतो भेदप्रतिपक्षत्वं, सहोपलम्भनियमश्च सदसतोरिव विज्ञानस्थौल्ययोः सतोरपि स्वभावाद्वा कुतश्चित्प्रतिबन्धाद्वोपपत्स्येते [2], तस्मादनैकान्तिकत्वादेतौ हेत्वाऽऽभासौ विकल्पमात्रमेव बाह्याभावे प्रसुवाते। न च प्रत्यक्षमाहात्म्यं विकल्पमात्रेणापोद्यते। तस्मात्साधूक्तं—'कथमप्रमाणात्मकेन विकल्पज्ञानबलेन' इति। एतेन [3] प्रत्ययत्वमपि स्वप्नादिप्रत्ययदृष्टान्तेन निरालम्बनत्वसाधनमपास्तम्। प्रमेयविकल्पास्त्ववयविव्यवस्थापनेन प्रत्युक्ताः। विस्तरस्तु न्यायकणिकायामनुसरणीय [4] इति। तदिह कृतं विस्तरेणेति ॥ १४ ॥

---

तुमित्याशयेनाऽऽह "तथा हि। नानादेशव्यापिता" इत्यादिना।

टि० (१) यावन्त आकारास्तावन्त्येव ज्ञानानीत्याशङ्कते "अत एव" इति। न च तत्पृष्ठभाविसमस्तज्ञानाऽऽकारसङ्कलनात्मक एकः स्थूलविकल्पो विजृम्भमाणोऽस्तीति युक्तम्, तस्याऽपि साकारतया स्थौल्याऽयोगाद्। यथाह धर्मकीर्त्तिः—तस्मान्नार्थे न च ज्ञाने स्थूलाऽऽभासस्तदात्मनः। एकत्र प्रतिषिद्धत्वाद् बहुष्वपि न सम्भवः, इति। तदेवाह "न च स्थूलमालोचितम्" इति। (२) यथा सर्वं चाक्षुषं प्रभारूपाऽनुविद्धं बुद्धिबोध्यं नियमेन मनुजैरुपलभ्यते, न तावता घटादिरूपं प्रभात्मकं भवत्यपि तु प्रभोपायत्वान्नियम एवमिहाऽपि प्रत्ययविषययोरुपायोपेयभावहेतुकः सहोपलम्भनियमो नाऽभेदहेतुक इति भावः। 'उपसंहरति'—"तस्माद्" इति। हेत्वाऽऽभासतया वेद्यत्वसहोपलम्भनियमौ भ्रमज्ञानप्रणाडचैव बाह्याभावं बोधयतो, न याथार्थ्येनेत्यर्थः। अस्तु तर्हि विकल्पात्मकज्ञानेनैव बाह्याऽभाव इत्यत आह—"न च प्रत्यक्ष" इति। (३) बाह्यपदार्थसद्भावोपपादनेनेत्यर्थः। (४) ननु न वयं विकल्पमात्रेणैव बाह्याऽभावं व्यासेधामाऽपि तु युक्त्या, तथाहि—

विज्ञानाऽऽलम्बनत्वेनाऽभिमतो यो बाह्यार्थः स किं परमाणुरूपः, तत्समूहरूपो वा । नै तावदाद्यः । एकस्थूलनीलाऽऽभासज्ञानस्य परमसूक्ष्मपरमाणुगोचरत्वाऽसम्भवाद् । न ह्यन्याऽऽभासज्ञानमन्यं गोचरयितुमर्हति । अतिप्रसङ्गेन सर्वगोचरतया सर्वसर्वज्ञत्वप्रसङ्गाद् । न च प्रतिभासधर्मः स्थौल्यमितियुक्तं, विकल्पाऽसहत्वात् । तथाहि—किमयं प्रतिभासस्य ज्ञानस्य धर्मः, आहो प्रतिभासकालेऽर्थस्य स धर्मः । यदि पूर्वः कल्पस्तुष्यतामेवं सति न कोऽपि तत्र प्रतिकूलमाचरेन्मदनुकूलमाचरतः । द्वितीयश्चेत् कीदृगितिविवियताम् । एकविज्ञानोपारोहिणो रूपपरमाणव एव निरन्तरमुत्पन्नाः स्थौल्यमिति चेद्, न । गन्धरसस्पर्शपरमाण्वन्तरितेषु रूपपमाणुषु नैरन्तर्याऽवभासस्याऽऽरात्सान्तरेषु वृक्षेष्वेकघनवनप्रत्ययवद् भ्रान्तत्वात्, तस्मान्न घटादिप्रत्ययानां परमाणुगोचरत्वाऽभ्युगमेन निर्वाहः । अस्तुतर्हि परमाणुसमूहारब्ध एकोऽवयवीति चेद्, अवयविनः परमाणुभ्योऽभेदे परमाणव एव । तत्र चोक्तमेव दूषणम् । भेदे तु गोमहिषवदत्यन्तवैलक्षण्यमिति न तादात्म्यम् । समवायस्तु, संबद्धोऽसंबद्धो वा प्रत्ययमुत्पादयतीत्यादिविकल्पदूषितः । तस्माद्विज्ञानमेवाऽनादिविचित्रवासनया तत्तद्रूपेण भासत इति साम्प्रतमियत आह "प्रमेयविकल्पाश्च" इति । प्रयुक्ताः=नैकान्ततः परमाणुभ्यां भिन्नो घटादिरभिन्नो वेत्यादिना 'स्मृतिपरिशुद्धौ' पा० प्र० सू० ४३ इत्यत्राऽवयविव्यवस्थापनेन प्रत्युक्ता इत्यर्थः । किञ्च यश्च सहोपलम्भनियमो भवतां भ्रान्तिकारकः सोऽपि विकल्पं न सहते । तथाहि । यदि ज्ञानार्थयोः साहित्येनोपलम्भस्ततो हेतुरेव विरुद्धः सन्नाभेदं साधयितुं पारयेत् । साहित्यस्य तद्विरुद्धभेदव्याप्तत्वादभेदे तदनुपपत्तेः । अथैकोपलम्भनियम इतिचेन्न, सह—शब्दस्यैकत्ववाचकत्वाऽभावाद् । अस्तु वा एकत्ववाचकत्वं, तथाऽपि किमेकत्वेनोपलम्भ, आहो एक उपलम्भो ज्ञानार्थयोरिति । न तावदाद्यः । विषयस्य बाह्यतया ज्ञानस्य चान्तरतया एकत्वेनोपलम्भाऽसम्भवाद् । न द्वितीयः । एकोपलम्भनियमस्योपायोपेयभावहेतुकत्वेनाऽभेदाऽसाधकत्वात् । किञ्च नीलाद्यर्थस्य ज्ञानाकारत्वेऽहमित्येव प्रतिभासः स्यान्नत्विदन्तया । न च ज्ञानस्वरूपोऽपि नीलाकारो भ्रान्त्या बहिर्वद्भेदेनावभासते इति, न तत्राऽऽमुल्लेखः । यदाहुः "यदन्तर्ज्ञेयतत्त्वं तद् बहिर्वदवभासते" इति युक्तम् । बाह्याऽर्थाऽभावे बहिर्वदित्युपमानोक्तेरयुक्तत्वात् । न हि चैत्रोः वन्ध्यापुत्रवदवभासत इति कश्चित्प्रेक्षावानाचक्षीत । अपि च यत्रैकविज्ञानगोचरौ घटपटौ भासेते घटज्ञानं पटज्ञानमिति तत्राऽप्यर्थभेदं विज्ञानाऽभेदं चाऽध्यवस्यन्ति प्रतिपत्तारः । नचैतदुभयोरैकात्म्येऽवकल्प्येत । यत्तूक्तम् । स्वप्नोपममिति । तदपि न विचारसहम् । बाधाऽबाधाभ्यां वैधर्म्यात्स्वप्नप्रत्ययदृष्टान्तेन जाग्रत्प्रत्ययस्य निरालम्बनत्वाऽसम्भवात् त्वयाऽपि हि जाग्रत्प्रत्ययस्याऽबाधितत्वमवश्यमास्थेयमन्यथा कथं स्वप्नप्रत्ययो निरालम्बन इति ज्ञायेत । जाग्रत्प्रत्ययेन बाधितत्वाद् हि स्वप्नप्रत्ययो मिथ्येत्यवगम्यते । यदि च जाग्रत्प्रत्ययोऽपि बाधित एवेति ब्रूयात् तदा स्वप्नप्रत्ययस्यासौ बाधको न भवेद् । न हि बाध्यमेव बाधकं भवितुमर्हति । एवञ्च स्वप्नप्रत्ययोऽपि न मिथ्येति साध्यविकलोऽसौ दृष्टान्त इति वृद्धिमिष्टवतो मूलमपि ते नष्टमिति अहो ते दुराशा इत्याशयेनाह—"विस्तरस्तु न्यायकणिकायाम्" इति एतच्च "किन्ते ग्राह्यग्राहकयोः परमार्थसतोरेवाऽभेदो विवक्षित इत्यादिना, "न ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्रीः । नोचेदनिन्द्यमिदमीदृशमेव विश्वं तथ्यं तथागतमतस्य तु कोऽवकाशः" इत्यन्तेनात्मतत्त्वविवेकेऽपि स्पष्टमित्यलं लिखितलेखनेन ॥

भा० कुतश्चैतदन्याय्यम्,

## सू० वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥१५॥

भा० बहुचित्ताऽवलम्बनीभूतमेकं वस्तु साधारणं, तत्खलु नैकचित्तपरिकल्पितं, नाप्यनेकचित्तपरिकल्पितं, किन्तु स्वप्रतिष्ठम्। कथं, वस्तुसाम्ये चित्तभेदात् = धर्माऽपेक्षं चित्तस्य वस्तुसाम्येऽपि सुखज्ञानं भवति, अधर्मापेक्षं तत एव दुःखज्ञानम्, अविद्यापेक्षं तत एव मूढज्ञानं, सम्यग्दर्शनाऽपेक्षं तत एव माध्यस्थ्यज्ञानमिति, कस्य तच्चित्तेन परिकल्पितम्। न चाऽन्यचित्तपरिकल्पितेनार्थेनाऽन्यस्य चित्तोपरागो युक्तः[१]। तस्माद् वस्तुज्ञानयोर्ग्राह्यग्रहणभेदभिन्नयो[२] र्विभक्तः पन्था = नाऽनयोः सङ्करगन्धोऽप्यस्तीति-

---

टी० तदेवमुत्सूत्रं *भाष्यकृद्विज्ञानातिरिक्तस्थापने युक्तिमुक्त्वा सौत्रीं युक्तिमवतारयति—"कुतश्चैतद्" इति। सू० "वस्तु—पन्थाः" ॥१५॥ यन्नानात्वे यस्यैकत्वं तत्ततोऽत्यन्तं भिद्यते। यथा चैत्रस्य ज्ञानमेकं भिन्नेभ्यो देवदत्तविष्णुमित्रमैत्रप्रत्ययेभ्यो भिद्यते। ज्ञाननानात्वेऽपि चाऽर्थो न भिद्यत इति भवति विज्ञानेभ्योऽन्यः। अभेदश्चाऽर्थस्य ज्ञानभेदेऽपि प्रमातॄणां परस्परप्रतिसन्धानादवसीयते। अस्ति हि रक्तद्विष्टविमूढमध्यस्थानामेकस्यां योषिति प्रतीयमानायां प्रतिसन्धानं—या त्वया दृश्यते सैव मयाऽपीति। तस्माद् वस्तुसाम्ये चित्तभेदात् = ज्ञानभेदात्, तयोः = अर्थज्ञानयोः, विभक्तः पन्थाः = स्वरूपभेदोपायः। सुखज्ञानं कान्तायां कान्तस्य, सपत्नीनां दुःखज्ञानं, चैत्रस्य तु तामविन्दतो मूढज्ञानं, विषादः। स्यादेतद्, य एकस्य चित्तेन परिकल्पितः कामिनीलक्षणोऽर्थः, तेनैवाऽन्येषामपि चित्तमुपरज्यत इति साधारणमुपपद्यत इत्यत आह—"नचाऽन्य" इति। तथासत्येकस्मिन्नीलज्ञानवति सर्वे एव नीलज्ञानवन्तः स्युरिति। नन्वर्थवादिनामप्येकोऽर्थः कथं

---

टि० (१) अन्यस्वप्नज्ञानविषयीभूतस्य वस्तुनोऽन्येनाज्ञानादिति भावः ।
(२) ग्राह्यग्रहणरूपवैधर्म्येण भिन्नयोरित्यर्थः ।

* सूत्राद् बहिः ।

भा॰ साङ्ख्यपक्षे पुनर्वस्तु त्रिगुणं चलं च गुणवृत्तमिति धर्मादिनिमित्ताऽपेक्षं चित्तैरभिसंबध्यते, निमित्ताऽनुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनाऽऽत्मना हेतुर्भवति ॥ १५ ॥

केचिदाहुः—ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवद् इति, त एतया द्वारा साधारणत्वं बाधमानाः पूर्वोत्तरेषु क्षणेषु वस्तुरूपमेवाऽपह्नुवते[१]—

टी॰ सुखादिभेदभिन्नविज्ञानहेतुः। न ह्यविलक्षणात्कारणात् कार्य्यभेदो युक्त इत्यत आह—"साङ्ख्यपक्षे" इति। एकस्यैव बाह्यस्य वस्तुनस्त्रैगुण्यपरिणामस्य त्रैरूप्यमुपपन्नम्। एवमपि सर्वेषामविशेषेण सुखदुःखमोहात्मकं विज्ञानं स्यादित्यत आह—"धर्मादिनिमित्ताऽपेक्षम्[२]" इति। रजःसहितं सत्त्वं धर्मापेक्षं सुखज्ञानं जनयति। सत्त्वमेव तु विगलितरजस्कं विद्यापेक्षं माध्यस्थ्यज्ञानमिति। ते च धर्मादयो न सर्वे सर्वत्र पुरुषे सन्ति, किन्तु कश्चित्क्वचिदित्यभ्युपपन्ना व्यवस्थेति॥ १५॥ अत्र केचिदाहुः प्रवादुकाः—ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवद् इति। एतदुक्तं भवति[३] भवत्वर्थो ज्ञानाद् व्यतिरिक्तः, तथाऽप्यसौ जड़त्वाद् न ज्ञानमन्तरेण शक्यः प्रतिपत्तुम्, ज्ञानेन तु भासनीयः। तथाच ज्ञानसमय एवाऽस्ति, नाऽन्यदा प्रमाणाऽभावाद् इति। तदेतदुत्सूत्रं तावद् दूषयति भाष्यकारः—"त एतया द्वारा" इति। वस्तु खलु सर्वचित्तसाधारणमनेकक्षणपरम्परोह्यमानं परिणामाऽऽत्मकमनुभूयते लौकिकपरीक्षकैः। तच्चेद्विज्ञानेन सह भवेन्नूनमेवंविधम्[४] एवं चेदिदमंशस्योपरि कोऽयमनुरोधो येन सोऽपि नाऽपह्नूयेतेत्यर्थः। मा वा भूदिदमंशस्याऽपह्नवो ज्ञानसहभू-

टि॰ (१) ते बौद्धभेदा एतया द्वारा = एतेनाऽनुमानेन विषयस्य पुरुषान्तरसाधारण्यं बाधमानाः सर्वप्रत्यक्षसिद्धं ज्ञानपूर्वोत्तरक्षणेषु विषयमपलपन्तीत्यर्थः।

(२) धर्मादिनिमित्ताऽनुरूपं सुखाद्यात्मकप्रत्ययं प्रति सुखाद्यात्मकत्वेनैव वस्तु हेतुर्भवतीति कारणतावच्छेदकभेदान्न सर्वेषामविशेषज्ञानोत्पाद इति भावः।

(३) पूर्वोन्मूलितमतात्कोऽस्य विशेष इत्यत्राऽऽह "एतदुक्तं भवति" इति।

(४) एवंविधम् = विज्ञानाधीनोत्पत्तिनिधनम्।

सू० न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्याद्[१] ॥ १६ ॥

भा० एकचित्ततन्त्रं चेद् वस्तु स्यात् तदा चित्ते व्यग्रे निरुद्धे वा स्वरूपमेव[२] तेनाऽपरामृष्टमन्याऽविषयी भूतमप्रमाणकमगृहीतस्वभावकं केन चित् तदानीं किन्तत्स्यात्। संबध्यमानं च पुन-

टी० रेवाऽस्त्वर्थः। तत्राऽऽप्याह—सू० "न चैक—किं स्याद्" ॥१६॥ यद्धि घटग्राहि चित्तं तद्यदा पटद्रव्यव्यग्रतया न घटे वर्त्तते यद्वा विवेकविषयमासीत् तदैव च निरोधं समापद्यते तदा घटज्ञानस्य वा विवेकज्ञानस्य वाऽभावाद् विवेको वा घटो वा ज्ञानभेदमात्रजीवनस्तन्नाशान्नष्ट एव स्यादित्याह—"एकचित्ततन्त्रम्" इति। किन्तत्स्यात् = न स्यादित्यर्थः। संबध्यमानं च चित्तेन तद्वस्तु विवेको वा घटो वा कुत उत्पद्येत। नियतकारणाऽन्वयव्यतिरेकाऽनुविधायिभावानि हि कार्य्याणि न स्वकारणमतिवर्त्य कारणान्तराद् भवितुमीशते। मा भूदकारणत्वे तेषां कादाचित्कत्वव्याघातः। न च तज्ज्ञानकारणत्वमेव तत्कारणमिति युक्तम्। आशामोदकस्य मोदकस्य चोपयुज्यमानस्य रसवीर्य्यविपाकादिसाम्यप्रसङ्गात्। तस्मात्साधूक्तं—'संबध्यमानं वा पुनश्चित्तेन कुत उत्पद्येत' इति। अपि च यो याऽर्वाग्भागः स सर्वो मध्यपरभागव्याप्तः। ज्ञानाधीने सद्भावे त्वस्यानानुभूयमानत्वान्मध्यपरभागौ न स्त इति व्यापकाऽभावादर्वाग्भागोऽपि न स्यादित्यर्थोऽभावात्कुतो

टि० (१) शङ्करनये वृत्त्याख्यज्ञानातिरिक्तचित्तस्याभावादत्र चित्तपदं ज्ञानार्थकम्। तथाच न वस्त्वेकज्ञानाऽधीनमित्यर्थः। तत्र हेतुमाह—"तदप्रमाणकम्" इति। तद् ज्ञानं न प्रमाणं यस्मिन् तत्तदप्रमाणकम्। यदेत्यस्याऽध्याहारः। ज्ञानैकनियतं चेद् वस्तु स्यात्तर्हि यदा ज्ञानेन न विषयीकृतं वस्तु तदा किं स्यादित्यर्थः। तत्प्रमाणकमिति स्वपपाठः।

(२) तेन निरुद्धचित्तेन वस्तुनः स्वरूपमपरामृष्टम्, अन्येनापि केनचिदगृहीदस्वभावकमत एवान्यस्याऽविषयीभूतमप्रमाणकं सत्तदानीं तद्वस्तु किं स्यादित्यर्थः। चित्ते निरुद्धे सति अस्वरूपमेव तद्वस्तु। अतस्तदानीं किन्तत्स्यादित्यर्थ इति भिक्षुः।

भा० भिन्नेन कुत उत्पद्येत। ये चास्याऽनुपस्थिता भागास्ते चास्य न स्युः। एवं नास्ति पृष्ठमित्युदरमपि न गृह्येत। तस्मात् स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः, स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्त्तन्ते। तयोः संबन्धादुपलब्धिः पुरुषस्य भोग इति ॥ १६ ॥

सू० तदुपरागाऽपेक्षित्वाच्चित्तस्य वस्तु ज्ञाताऽज्ञातम् ॥ १७ ॥

भा० अयस्कान्तमणिकल्पा विषया अयःसधर्मकं चित्तमभिसंबध्योपरञ्जयन्ति[१]। येन च विषयेणोपरक्तं चित्तं स विषयो ज्ञात-

---

टी० ज्ञानसहभूरर्थ इत्याह—"ये चास्य" इति। अनुपस्थिता = अज्ञाताः, उपसंहराति—"तस्माद्" इति। शेषं सुगमम् ॥ १६ ॥

स्यादेतद्, अर्थश्चेत्स्वतन्त्रः स च जड़स्वभाव इति न कदाचित्प्रकाशेत प्रकाशेनवाजड़त्वमप्यस्यापगतामिति भावोऽप्यपगच्छेत्। न जातु स्वभावमपहाय भावो वर्त्तितुमर्हति। न चेन्द्रियाद्याधेयो जड़स्वभावस्यार्थस्य धर्मः प्रकाश इति साम्प्रतम्। अर्थधर्मत्वे नीलत्वादिवत्सर्वपुरुषसाधारण इत्येकः शास्त्रार्थज्ञ इति सर्वे विद्वांसः प्रसज्ज्येरन्, न जाल्मः[२] कश्चिदस्ति। नचाऽतीताऽनागतयोर्धर्मः प्रत्युत्पन्नो युक्तः। तस्मात्स्वतन्त्रोऽर्थ उपलम्भविषय इति मनोरथमात्रमेतदित्यत आह—सू० "तदु—ज्ञातम्" इति। जड़स्वभावोऽप्यर्थ इन्द्रियप्रनाड़िकयाचित्तमुपरञ्जयति। तदेवंभूतं चित्तदर्पणमुपसंक्रान्तप्रतिबिम्बा चितिशक्तिश्चित्तमर्थोपरक्तं चेतयमानाऽर्थमनुभवति, नत्वर्थे किञ्चित्प्राकटयादिकमाधत्ते। नाऽप्यसंबद्धा चित्तेन। तत्प्रतिबिम्बसंक्रान्ते-

---

टि० (१) अयस्कान्तवत्क्रियाशून्या अपि विषया अयोवत्क्रियाशीलं चित्तमभिसम्बध्य = इन्द्रियद्वारा स्वस्मिन् संयोज्योपरञ्जयन्ति = स्वसमानाकारं कुर्वन्ति। अतो येन विषयेण स्वाकाराऽऽकारितं चित्तं स विषयस्तस्य ज्ञातोऽन्यश्चाऽज्ञातः। एवं च वस्तुनो ज्ञाताऽज्ञातत्वाऽन्यथाऽनुपपत्त्या चित्तस्योपरागाख्यपरिणामः सिद्धः। सदा ज्ञातविषयात्पुरुषाद्वैधर्म्यं च सिद्धम् इति बोध्यम्।

(२) असमीक्ष्यकारी, वेदाद्यध्ययनविधुरो वा।

भा० स्ततोऽन्यः पुनरज्ञातः। वस्तुतो ज्ञाताऽज्ञातस्वरूपत्वात्परिणामि चित्तम् ॥ १७ ॥ यस्य तु तदेव चित्तं विषयस्तस्य(१)—

सू० **सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्याऽपरिणामित्वात् ॥ १८ ॥**

भा० यदि चित्तवत्प्रभुरपि पुरुषः परिणमेत ततस्तद्विषयाश्चित्तवृत्तयः शब्दादिविषयवज्ज्ञाताऽज्ञाताः स्युः। सदा ज्ञातत्वं तु मनसस्तत्प्रभोः पुरुषस्याऽपरिणामित्वमनुमापयति ॥ १८ ॥

---

टी० रुक्तत्वादिति। यद्यपि च सर्वगतत्वाच्चित्तस्य चेन्द्रियस्य चाऽऽहङ्कारिकस्य विषयेणाऽस्ति सम्बन्धः तथाऽपि यत्र शरीरे वृत्तिमच्चित्तं तेन सह सम्बन्धो विषयाणामित्ययस्कान्तमणिकल्पा इत्युक्तम्। अयःसधर्मकं चित्तमिति = इन्द्रियप्रनाडिकयाऽभिसम्बन्ध्योपरञ्जयन्ति। अत एव चित्तं परिणामीत्याह-"वस्तुनः" इति॥ १७॥ तदेवं चित्तव्यतिरेकिणमर्थमवस्थाप्य तेभ्यः परिणातिधर्मकेभ्यो व्यतिरिक्तमात्मानमादर्शयितुं तद्वैधर्म्याऽपरिणामित्वमस्य वक्तुं पूरयित्वा सूत्रं पठति,—"यस्य तु तदेव चित्तं विषयस्तस्य सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्याऽपरिणामित्वाद्" ॥ १८॥ क्षिप्तमूढविक्षिप्तैकाग्रताऽवस्थितं चित्तमा निरोधात्सर्वदा पुरुषेणानुभयते वृत्तिमत्। तत्कस्य हेतोः। यतः पुरुषोऽपरिणामी, परिणामित्वे चित्तवत्पुरुषोऽपि ज्ञाताज्ञातविषयो भवेद्। ज्ञातविषय एव त्वयं, तस्मादपरिणामी। ततश्च परिणामिभ्योऽतिरिच्यतेइति। तदेतदाऽऽह—"यदि चित्तवद्" इति। सदा ज्ञातत्वं तु मनसः = सवृत्तिकस्य(२) तस्य यः प्रभुः = स्वामी, भोक्तेतियावत्, तस्य प्रभोः पुरुषस्यापरिणामित्वमनुमापयति = तथा चापरिणामिनस्तस्य परिणामिनश्चित्तात् पुरुषस्य भेद इति भावः॥ १८ ॥

---

टि० (१) यस्य पुरुषस्य तत्तदर्थोपरक्तं चित्तं विषयस्तस्य तत्प्रभोः = चित्तस्वामिनः चित्तसाक्षिणः पुरुषस्य विषयीभूता याश्चित्तवृत्तयस्ताः सदा ज्ञाता एव, न तु कदाप्यज्ञाताः। कुतः, पुरुषस्याऽपरिणामित्वाद्। पुरुषस्यापि परिणामित्वे कदाचिद्विद्यमानाऽऽपि चित्तवृत्तिर्न ज्ञायेत। एवं चाहं सुखी न वेत्यादिसंशयः स्यादिति भावः। एतेन पुरुषोऽपरिणामी, सदा ज्ञातविषयत्वात् यत्परिणामी, न तत्सदा ज्ञातविषयो यथा चक्षुरादीत्यनुमानं सूचितम्।

(२) निरोधावस्थायां चित्तं न ज्ञायते तत्कथं सदा ज्ञातत्वमित्यत आह—"सवृत्तिकस्य"।

भा० स्यादाशङ्का—चित्तमेव स्वाऽऽभासं विषयाऽऽभासं च भविष्यति अग्निवद्,

## सू० न तत् स्वाऽऽभासं दृश्यत्वाद् ॥ १९ ॥

भा० यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाऽऽभासानि तथा मनोऽपि प्रत्येतव्यं, न चाऽग्निरत्र दृष्टान्तः, न ह्यग्निरात्मस्वरूपमप्रकाशं प्रकाशयति, प्रकाशश्चाऽयं प्रकाश्यप्रकाशकसंयोगे दृष्टः

टी० अत्र वैनाशिकमुत्थापयति—"स्यादाशङ्का" इति । अयमर्थः = स्यादेवं यदि चित्तमात्मनोविषयः स्यात्। नत्वेतदस्ति, अपि तु स्वप्रकाशमेतद्विषयाऽऽभासं पूर्वंचित्तं प्रतीत्य समुत्पन्नं, तत्कुतः पुरुषस्य सदा ज्ञातविषयत्वं, कुतस्तरां च परिणामिनश्चित्ताद्भेद इति। सू० "न—त्वाद्" ॥ १९॥ भवेदेतदेवं यदि स्वसंवेदनं चित्तं स्यान्नत्वेतदस्ति। तद्धि परिणामितया नीलादिवदनुभवव्याप्यं, यच्चानुभवव्याप्यं न तत्स्वाभासं भवितुमर्हति। स्वात्मनि वृत्तिविरोधाद्। न हि तदेव क्रिया च कर्म च कारकं च। न हि पाकः पच्यते, छिदा वा छिद्यते। पुरुषस्त्वपरिणामी नानुभवकर्म इति(१) नास्मिन् स्वयम्प्रकाशता न युज्यते । अपराधीनप्रकाशतो ह्यस्य स्वयम्प्रकाशता, नानुभवकर्मतः । तस्माद् दृश्यत्वाद् दर्शनकर्म चित्तं न स्वाभासम् । आत्मप्रकाशप्रतिबिम्बितस्यैव चित्तस्य तद्वृत्तिविषयाः प्रकाशन्त इति भावः। ननु दृश्योऽग्निः स्वयम्प्रकाशश्च न हि यथा घटादयोऽग्निना व्यज्यन्ते एवमग्निरग्न्यन्तरेणेत्यत आह—"नचाग्निरत्र" इति । कस्माद्—"नह्यग्निः" इति । मा नामाग्निरग्न्यन्तरात् प्रकाशिष्ट, विज्ञानात्तु प्रकाशत इति न स्वयम्प्रकाश इति न व्यभिचार इत्यर्थः । 'प्रकाशश्चायम्' इति । अयमिति पुरुषस्वभावात्प्रकाशाद् व्यवच्छिनत्ति, क्रियारूपः प्रकाश इति यावद् ।

एतदुक्तं भवति—या या क्रिया सा सा सर्वा कर्तृकरणकर्मसम्बन्धेन दृष्टा, यथा पाको दृष्टश्चैत्राऽग्नितण्डुलसम्बन्धेन, तथा प्रकाशोऽपि क्रिया इति,

टि० (१) इति = शब्दो हेत्वर्थे । यतः पुरुषोऽपरिणामित्वेन नाऽनुभवकर्माऽतोऽस्मिन् पुरुषे स्वयम्प्रकाशता न युज्यत इति न, अपि तु युज्यत एवेत्यर्थः ।

भा०न च स्वरूपमात्रेऽस्ति संयोगः[१] । किञ्च स्वाऽऽभासं चित्तमित्यग्राह्यमेव कस्य चिदिति शब्दार्थः[२] तद्यथा स्वात्मप्रतिष्ठमाकाशं, न परप्रतिष्ठमित्यर्थः, स्वबुद्धिप्रचारप्रतिसंवेदनात् सत्त्वानां प्रवृत्तिर्दृश्यते—क्रुद्धोऽहं भीतोऽहममुत्र मे रागोऽमुत्र मे क्रोध इति । एतत् स्वबुद्धेरग्रहणे न युक्तमिति ॥ १९ ॥

सू० एकसमये चोभयाऽनवधारणम् ॥ २० ॥

भा०न चैकस्मिन् क्षणे स्वपररूपाऽवधारणं युक्तं[३], क्षणिकवादिनो यद् भवनं सैव क्रिया, तदेव च कारकमित्यभ्युपगमः ॥२०॥

टी० तयाऽपि तथा भवितव्यम् । सम्बन्धश्च भेदाश्रयो नाऽभेदे सम्भवतीत्यर्थः । 'किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्य चिदिति शब्दार्थः' = स्यादेतद्—मा भूद् ग्राह्यं चित्तं, न हि ग्रहणस्याकारणस्याऽव्यापकस्य च निवृत्तौ चित्तनिवृत्तिः[४], इत्यत आह "स्वबुद्धि" इति । बुद्धिः = चित्तम्, प्रचाराः = व्यापाराः, सत्त्वाः = प्राणिनः । चित्तस्य वृत्तिभेदाः क्रोधलोभादयः स्वाश्रयेण चित्तेन स्वविषयेण च सह प्रत्याऽऽत्ममनुभूयमानाश्चित्तस्याऽग्राह्यतां विघटयन्तीत्यर्थः । स्वबुद्धिप्रचारप्रतिसंवेदनमेव विशदयति—"क्रुद्धोऽहम्" इति ॥ १९ ॥

सू० "एकसमये चोभयाऽनवधारणम्" ॥२०॥ स्वाभासं विषयाभासं चित्तमिति ब्रुवाणो न तावद्येनैव व्यापारेणात्मानमवधारयति तेनैव विषयमपीति वक्तुमर्हति । न ह्यविलक्षणो व्यापारः कार्य्यभेदाय पर्य्याप्तः, तस्माद् व्यापारभेदोऽङ्गीकर्त्तव्यः । न च वैनाशिकानामुत्पत्तिभेदातिरिक्तो-

टि० (१) कर्मकर्तृविरोधादित्यर्थः ।

(२) स्वाभासं चित्तमितिशब्दस्य केन चिदग्राह्यं चित्तमित्यर्थो दृष्टान्तबलेन भाति, एवं च सति दूषणमापततीत्यर्थः । किन्तद् दूषणमित्याह—"स्वबुद्धि" इति ।

(३) पूर्वं विद्यमानस्यैव प्रत्यक्षगोचरत्वात् स्वस्य च प्रागसत्त्वादित्यर्थः । ननु स्वोत्पत्त्यनन्तरं स्वग्रहणमस्तु तत्राऽऽह—"क्षणिकवादि" इति ।

(४) न हि मृद्घटयोरिव वह्निधूमयोरिव वा ग्रहणचित्तयोः कार्य्यकारणभावो व्याप्यव्यापकभावो वा, येन मृदग्निनिवृत्तौ घटधूमनिवृत्तिवद् ग्रहणनिवृत्तौ चित्तनिवृत्तिः स्यादितिभावः

भा०स्यान्मतिः—स्वरसनिरुद्धं चित्तं चित्तान्तरेण समनन्तरेण गृह्यत इति(१),

सू० चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः(२) स्मृतिसङ्करश्च ॥ २१ ॥

भा०अथ चित्तं चेच्चित्तान्तरेण गृह्येत बुद्धिबुद्धिः(३) केन गृह्यते, साऽप्यन्यया साऽप्यन्ययेत्यतिप्रसङ्गः, स्मृतिसङ्करश्च—यावन्तो(४) बुद्धि-

टी० ऽस्ति व्यापारः। नचैकस्या एवोत्पत्तेरविलक्षणायाः कार्य्यवैलक्षण्यसम्भवः। तस्याऽऽकस्मिकत्वप्रसङ्गाद्, नचैकस्योत्पत्तिद्वयसम्भवः। तस्मादर्थस्य च ज्ञानरूपस्य चाऽवधारणं नैकस्मिन् समय इति। तदेतद् भाष्येणोच्यते—"नचैकस्मिन् क्षणे" इति। तथा चोक्तं वैनाशिकैः—"भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" इति। तस्माद् दृश्यत्वमेतच्चित्तस्य सदातनं स्वाभासत्वमपनयद् द्रष्टारं चद्रष्टुरपरिणामित्वं चदर्शयतीति सिद्धम् २०॥

पुनर्वैनाशिकमुत्थापयति—"स्यान्मतिः" इति। मा भूद् दृश्यत्वेन स्वसंवेदनमेवमप्यात्मा न सिद्ध्यति। स्वसन्तानवर्त्तिना चरमचित्तक्षणेन स्वरसनिरुद्धस्वजनकचित्तक्षणग्रहणादित्यर्थः। समञ्च तज्ज्ञानत्वेन, अनन्तरं चाऽव्यवहितत्वेन, समनन्तरं, तेन ॥ सू० "चित्तान्तर—श्च" ॥ २१ ॥ बुद्धिः—इति—चित्तमित्यर्थः। नाऽगृहीता चरमा बुद्धिः पूर्वबुद्धिग्रहणसमर्था। न हि बुद्ध्याऽसम्बद्धा पूर्वा बुद्धिर्बुद्धा भावितुम्

टि० (१) न स्वाभासःमित्यस्य कनचिदग्राह्यमित्यर्थः, येन कर्तृकर्मविरोधादिदोषा आपद्येरन्। अपि तु स्वरसेन = विनाशस्वभावत्वेन निरुद्धं यच्चित्तं तदुत्तरोत्तरमुत्पन्नेनाचित्तान्तरेण ग्राह्यमित्यभ्युपगच्छाम इति चेन्मतिः स्याद्वैनाशिकानां तदपि न युक्तमित्यर्थः।

(२) चित्तान्तरेण चित्ते दृश्येऽभ्युपगम्यमाने सति बुद्धिबुद्धेः = चित्तगोचरचित्तस्य ग्रहणं न स्यात्। तदपि चेदन्येन गृह्येत तदाऽतिप्रसङ्गः = अनवस्था स्यादिति भावः।

(३) बुद्धिबुद्धिः = चित्तविषयं चित्तमित्यर्थः।

(४) सङ्करशब्दार्थमाह—"यावन्त" इति विषयाऽनुभवकाले ज्ञानधारा जातेति विषयस्मृतिकालेऽपि अनन्तानां तज्ज्ञानानां स्मृतिरेकदैव भविष्यति। घटो मया पुराज्ञातः, घटज्ञानं तज्ज्ञानं चेत्येवमनन्ताकारः। सोऽयं स्मृतिसङ्करः प्राप्त इत्यर्थः। संकरे को दोषस्तत्राह—"तत्सङ्कराच्च" इति। सङ्कराऽभ्युपगमे च घटो मया ज्ञात इत्येकमात्राकारस्मृत्य नभवो न स्यादिति भावः।

भा० बुद्धीनामनुभावास्तावन्त्यः स्मृतयः प्राप्नुवन्ति, तत्सङ्करश्चैकस्मृत्यनवधारणं च स्याद्, इत्येवं बुद्धिप्रतिसंवेदिनं पुरुषमपलपद्भिर्वैनाशिकैः सर्वमेवाऽऽकुलीकृतम्। ते तु भोक्तृस्वरूपं यत्र क्वचन कल्पयन्तो न न्यायेन सङ्गच्छन्ते। केचित्सत्त्वमात्रमपि परिकल्प्याऽस्ति स सत्त्वो य एतान् पञ्च स्कन्धान् निःक्षिप्याऽन्यांश्च प्रतिसन्दधातीत्युक्त्वा तत एव पुनस्त्रस्यन्ति[१], तथा स्कन्धानां महानिर्वेदाय विरागायाऽनुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्यं चरिष्यामीत्युक्त्वा सत्त्वस्य पुनः सत्त्वमेवापह्नुवते[२]। साङ्ख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्ति, इति ॥ २१ ॥

टी० अर्हति, न ह्यगृहीतदण्डो दण्डिनमवगन्तुमर्हति, तस्मादनवस्थेति। विज्ञानवेदनासञ्ज्ञारूपसंस्काराः स्कन्धाः[३]। 'साङ्ख्ययोगादयस्तु प्रवादाः' = सांख्याश्च योगाश्च त एवादयो येषां वैशेषिकादिप्रवादानां ते सांख्ययोगादयः प्रवादाः। सुगममन्यद् ॥ २१ ॥ स्यादेतद्, यदि चित्तं न स्वाभासं, नापि चित्तान्तरवेद्यम् आत्मनाऽपि कथं भोक्ष्यते चित्तम्। न खल्वात्मनः स्वयम्प्र-

टि० (१) केचिद्विज्ञानवादिनः क्षणिकंविज्ञानरूपं चित्तमात्रं परिकल्प्याऽस्ति स सत्त्वविशेषो य एतान् सांसारिकान् पञ्च स्कन्धान् हित्वाऽन्यांश्च पञ्च स्कन्धान् मुक्तोऽनुभवतीत्युक्त्वा तत एव=स्वाऽभ्युपगतक्षणिकमतादेव त्रस्यन्ति=चित्तस्थैर्य्यापत्त्या बिभ्यतीत्यर्थः। न हि कञ्चित्स्थायिपदार्थमन्तरा सोपप्लवपञ्चस्कन्धत्यागो निरुपप्लवपञ्चस्कन्धोपादानं च सम्भवति। बन्धमोक्षयोर्वैय्यधिकरण्यं चैतन्मते दुर्वारमिति भावः।

(२) अन्ये केचित् शून्यवादिनः स्कन्धानां महानिर्वेदाय = महानिर्वेदाख्यवैराग्यायाऽनुत्पादाय = अपुनर्जन्मरूपप्रशान्तये च जीवन्मुक्तस्य गुरोरन्तिके ब्रह्मचर्य्यं ब्रह्माभ्यासं साक्षात्कारपर्य्यन्तं करिष्यामीत्युक्त्वा शिष्यतामापन्ना नास्तिका गुरूपदेशात्सत्त्वस्याऽहंशब्दार्थस्याऽपि सत्तामपलपन्ति—शून्यवादिनो भवन्तीत्यर्थः। तेऽपि न्यायविरुद्धाः, भोक्तुः सत्त्वस्याऽपलापेन स्वाऽभिप्रेतस्य मोक्षस्याऽहंशब्दार्थस्य ब्रह्मचर्य्यादीनां वा सत्तास्वीकारात्। सेयमुद्देश्यविस्मृतिः कथं मूढान्न लज्जयतीत्यर्थ इति विज्ञानभिक्षुः।

(३) अहमहमित्याकार आलयविज्ञानप्रवाहो विज्ञानस्कन्धः, सुखाद्यनुभवो वेदनास्कन्धः, गौरः ब्राह्मणो गच्छतीत्येवं सविकल्पः प्रत्ययः सञ्ज्ञास्कन्धः, सविषयाणीन्द्रियाणि रूपस्कन्धः रागद्वेषमोहधर्माऽधर्मादयः संस्कारस्कन्धः।

कथम्,—

सू० चितेरप्रतिसंक्रमायास्तदाऽऽकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥

भा० अपरिणामिनी हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतति, तस्याश्च प्राप्तचैतन्योपग्रहस्वरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते । तथाचोक्तं—"न पातालं न च विवरं गिरीणां नैवाऽन्धकारं कुक्षयो नोदधीनाम् । गुहा यस्यां निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते(१)" इति ॥ २२ ॥

---

टी० काशस्याऽप्यस्ति काचित्क्रिया, न च तामन्तरेण कर्त्ता, न चाऽसम्बद्धश्चित्तेन कर्मणा तस्य भोक्ता, अतिप्रसङ्गाद् इत्याशयवान् पृच्छति—"कथम्" इति । सूत्रेणोत्तरमाह—सू० "चितेर—दनम्" ॥ २२ ॥ यत् तदवोचद् वृत्तिसारूप्यमितरत्र' इति, तदितः समुत्थितम् । चितेः स्वबुद्धिसंवेदनं बुद्धेस्तदाऽऽकाराऽऽपत्तौ = चितिप्रातिबिम्बाऽऽधारतया तद्रूपतापत्तौ सत्याम् । यथा हि चन्द्रमसः क्रियामन्तरेणाऽपि संक्रान्तचन्द्रप्रतिबिम्बममलं जलमचलं चलमिव चन्द्रमसमवभासयत्येवं विनाऽपि चितिव्यापारमुपसंक्रान्तचितिप्रतिबिम्बं चित्तं स्वगतया क्रियया क्रियावतीमसङ्गतामपि सङ्गतां चितिशक्तिमवभासयद् भोग्यभावमासादयद् भोक्तृभावमापादयति तस्या(२) इति सूत्रार्थः । भाष्यमप्येतदर्थमसकृत्तत्रतत्र व्याख्यातमिति न व्याख्यातमत्र । बुद्धिवृत्त्यविशिष्टत्वे ज्ञानवृत्तेरागममुदाहरति—"तथाचोक्तं—न पातालम्" इति । शाश्वतस्य शिवस्य ब्रह्मणो विशुद्धस्वभावस्य चितिछायामापन्नां मनोवृत्तिमेव चितिछायापन्नत्वाच्चितेरप्यऽविशिष्टां गुहां वेदयन्ते । तस्यामेव गुहायां तद् गुह्यं ब्रह्म, तदपनये तु स्वयम्प्रकाशमनावरणमनुपसर्गं(३) प्रद्योतते चरमदेहस्य भगवत इति ॥ २२ ॥

---

टि० (१) गुहाहितं गह्वरेष्ठं पुराणमित्यादिश्रुतिषु यस्यां गुहायां शाश्वतं ब्रह्म निहितमित्युक्तं सा गुहा न पातालादि । किन्तु अविशिष्टां बुद्धिवृत्तिमेव पाण्डिताः पश्यन्ति इति सङ्क्षेपार्थः । (२) स्वस्य भोग्यभावमासादयत्सत् चित्तं तस्याः = चितेः भोक्तृभावमापादयतीत्यर्थः । (३) उपसर्गाः = क्लेशकर्मविपाकाशयाः, ते निष्क्रान्ता यतस्तान्निरुपसर्गम् ।

अतश्चैतदभ्युपगम्यते—

सू० द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

भा० मनो हि[1] मन्तव्येनाऽर्थेनोपरक्तंतत्स्वयं च विषयत्वाद्विषयिणा पुरुषेणाऽऽत्मीयया वृत्त्याऽभिसंबद्धं तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं = विषयविषयिनिर्भासं चेतनाऽचेतनस्वरूपाऽऽपन्नं विषयात्मकमप्यविषयात्मकमिवाऽचेतनं चेतनमिव स्फटिकमणिकल्पं[2] स-

---

टी० तदेवं दृश्यत्वेन चित्तस्य परिणामिनस्तदतिरिक्तः पुमानपरिणतिधर्मोपपादितः। सम्प्रति लोकप्रत्यक्षमप्यत्र प्रमाणयति-"अतश्चैतद्"इति,-अवश्यं चैतदित्यर्थः। सू० "द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्"॥ २३॥ यथा हि नीलाद्यनुरक्तं चित्तं नीलाद्यर्थं प्रत्यक्षेणैवाऽवस्थापयति, एवं द्रष्टृच्छायाऽऽपत्त्या तदनुरक्तं चित्तं द्रष्टारमपि प्रत्यक्षेणाऽवस्थापयति, अस्ति हि[3] द्वयाऽऽकारं ज्ञानं नीलमहं सम्प्रत्येमि इति। तस्माद् ज्ञेयवद् ज्ञाताऽपि प्रत्यक्षसिद्धोऽपि न विविच्याऽवस्थापितो, यथा जले चन्द्रमसो बिम्बम्। नत्वेतावता तदप्रत्यक्षं, न चास्य जलगतत्वे तदप्रमाणमिति चन्द्ररूपेऽप्यप्रमाणं भवितुमर्हति, तस्माच्चित्तप्रतिबिम्बिततया चैतन्यगोचराऽपि चित्तवृत्तिर्न चैतन्यगोचरेति। तदिदं सर्वार्थत्वं चित्तस्येति। तदेतदाऽऽह-"मनो हि"इति। न केवलं तदाकारापत्त्या मन्तव्येनाऽर्थेनोपरक्तं मनोऽपि तु स्वयं चेति। चकारो भिन्नक्रमः, पुरुषेणेत्यस्याऽनन्तरं द्रष्टव्यः। तच्छायापत्तिः पुरुषस्य वृत्तिः। इयं च चैतन्यच्छायापत्तिश्चित्तस्य वैनाशिकैरभ्युपेतव्या कथमन्यथा चित्ते चैतन्यमेत आरोपयाम्बभूवुरित्याह—"तदनेन" इति। के-

---

टि० (१) हि = यतो मनो न केवलं मन्तव्यार्थेनोपरक्तं किन्तु विषयिणा पुरुषेणात्मीयया वृत्त्या स्वयमपि सम्बद्धम्, अत एतच्चित्तं द्रष्टृदृश्योपरक्तं सत् सर्वार्थमित्युच्यत इत्यर्थः।

(२) इव—शब्दार्थं दृष्टान्तेनाऽऽह—"स्फटिकमणिकल्पम्" इति। यथैक एव स्फटिकमणिः पार्श्वद्वयस्थजपेन्द्रनीलयोः प्रतिबिम्बनात्स्वीयरूपेण सह त्रिरूप इव भवति, एवं चित्तमपि विषयात्मनोः प्रतिबिम्बनाद् ग्रहीतृग्रहणग्राह्यात्मकरूपाऽवयववदिव भवत्यतः सर्वार्थमित्युच्यत इत्यर्थः।

(३) हि = यतो नीलमहं सम्प्रत्येमीति ज्ञानं द्वयाकारं = विषयविषयिनिर्भासकमतः नीलाद्यर्थवज्ज्ञातारमपि प्रत्यक्षेणाऽवस्थापयति।

भा०र्वार्थमित्युच्यते । तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः । अपरे चित्तमात्रमेवेदं सर्वं, नास्ति खल्वयं ग० वादिर्घटादिश्च सकारणोलोक[१] इति। अनुकम्पनीयास्ते।कस्माद् अस्ति हि[२] तेषां भ्रान्तिबीजं सर्वरूपाऽऽकारनिर्भासं चित्तमिति, समाधिप्रज्ञायां प्रज्ञेयोऽर्थः प्रतिबिम्बीभूतस्तस्याऽऽलम्बनीभूतत्वादन्यः । स चेदर्थश्चित्तमात्रं स्यात्कथं प्रज्ञयैव प्रज्ञारूपमवधार्येत, तस्मात्प्रतिबिम्बीभूतोऽर्थः प्रज्ञायां येनाऽवधार्यते स पुरुष इति । एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात् त्रयमप्येतद्[३]जातितः प्रविभजन्ते ते सम्यग्दर्शिनः तैरधिगतः पुरुष इति ॥ २३ ॥

टी० केद् = वैनाशिका बाह्यार्थवादिनः, अपरे = विज्ञानमात्रवादिनः।ननु यदि चित्तमेव द्रष्ट्राऽऽकारं दृश्याकारं चाऽनुभूयते हन्त चित्तादभिन्नावेवास्तां द्रष्टृदृश्यौ। यथाहुः—"अभिन्नोऽपि हि बुद्ध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति । तत्कथमेतेऽनुकम्पनीया इत्यत आह—"समाधिप्रज्ञायाम्" इति। ते खलूक्ताभिरुपपत्तिभिश्चित्ताऽतिरिक्तं पुरुषमभ्युपगमय्याऽप्यष्टाङ्गयोगोपदेशेन समाधिप्रज्ञायामात्मगोचरायामवतार्य्य बोधयितव्याः।तद्यथा—समाधिप्रज्ञायां प्रज्ञेयोऽर्थआत्मा प्रतिबिम्बीभूतोऽन्यः।कस्मात, तस्याऽऽत्मन[४] आलम्बनीभूतत्वाद्। अथ चित्तादभिन्नमेव कस्मान्नालम्बनं भवतीति । यदि युक्तिबोधितोऽपि वैजात्याद्वदेत।यत्र हेतुमाह[५]—"स चेद्" इति । स चेदात्मरूपोऽर्थश्चित्तमात्रं स्यान्न तु ततो व्यतिरिक्तः । ततः कथं प्रज्ञयैव प्रज्ञारूपमवधार्येत, स्वात्मनि वृत्तिविरोधाद् । उपसंहरति—"तस्माद्" इति ।समीचीनोपदेशेनाऽनुकम्पिता भवन्तीत्याह "एवम्"इति।जातितः = स्वभावत इत्यर्थः।।२३।।

टि० (१) लक्ष्यतेऽसौ लोकः, विषयः ।

(२) हि यतः सर्वरूपाऽऽकारनिर्भासं चित्तम् इति = अतः, एतत्सर्वार्थनिर्भासत्वमेव वैनाशिकानां चित्तस्याऽऽत्मत्वस्वीकारे भ्रान्तिकारणमित्यर्थः ।

(३) अत्र ये इति शेषः । ग्रहीत्रादित्रितयं ये परस्परविजातीयतया विभजन्ति = विवेचयन्ति त एव सम्यग्दर्शिनः । तैरेव च पुरुषो लब्धोऽन्ये सर्वे पुरुषार्थभ्रष्टा भ्रान्ताश्चेत्यर्थः ।

(४) आत्मनस्तस्य चित्तस्याऽऽलम्बनीभूतत्वादित्यर्थः ।

(५) तन्निरासाय हेतुमाहेत्यर्थः । "तत्राऽऽह" इति पाठन्तु सरलम्मन्ये ।

कुतश्चैतद्,

सू० तदसङ्ख्येयवासनाभिश्चित्रमपि*परार्थं संहत्यकारित्वाद् ॥ २४ ॥

भा० तदेतच्चित्तमसंख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं = परस्य भोगापवर्गार्थं, न स्वार्थम्। संहत्यकारित्वाद् गृहवत् संहतकारिणा चित्तेन न स्वार्थेन भवितव्यं, न सुखचित्तं सुखार्थं [१] न ज्ञानं ज्ञानार्थम् । उभयमप्येतत्परार्थम् यश्चभोगेना-

टी० चित्ताऽतिरिक्ताऽऽत्मसद्भावे हेत्वन्तरमवतारयति—"कुतश्चैतद्" इति । सू० "तद्–त्वाद्" ॥ २४ ॥ यद्यप्यसंख्येयाः कर्मवासनाः क्लेशवासनाश्च चित्तमेवाऽधिशेरते[२] न तु पुरुषं, तथाच वासनाऽधीना विपाकाश्चित्ताऽऽश्रयतया चित्तस्य भोक्तृतामावहन्ति, भोक्तुरर्थे च भोग्यमिति सर्वं चित्तार्थं प्राप्तं, तथाऽपि तच्चित्तमसंख्येयवासनाविचित्रमपि परार्थं, कस्मात्, संहत्यकारित्वादिति सूत्रार्थः । व्याचष्टे—"तदेतद्" इति । स्यादेतत् । चित्तं संहत्याऽपि करिष्यति स्वार्थं च भविष्यति। कः खलु विरोध इति यदि कश्चिद् ब्रूयात्तं प्रत्याह—"संहत्यकारिणा" इति । सुखचित्तमिति भोगमुपलक्षयति। तेन दुःखचित्तमपि द्रष्टव्यम्। ज्ञानमित्यपवर्ग उक्तः। एतदुक्तं भवति—सुखदुःखे चित्ते प्रतिकूलाऽनुकूलात्मके नात्मनि संभवतः, स्वात्मनि वृत्तिविरोधाद् । न चाऽन्योऽपि संहत्यकारी साक्षात्परम्परया वा सुखदुःखे विदधानस्ताभ्यामनुकूलनीयः, प्रतिकूलनीयो वा । तस्माद् यः साक्षात्परम्परया वा

* चित्तमिति पाठान्तरं तु भाष्ययननुगुणं प्रत्येमि । तदित्यनेनैव प्रकृतचित्तग्रहणलाभसम्भवादनुपयुक्तमपि तत् ।

टि० [१] सुखचित्तं = भोगचित्तं न सुखार्थं = न चित्तस्य भोगार्थम् । तथा तत्त्वज्ञानचित्तं = अपवर्गचित्तं न चित्तस्याऽपवर्गार्थम् । चित्तस्यभोगाऽपवर्गयोरपि कार्य्यतया सार्थकत्वनियमेनाऽनवस्थाप्रसङ्गाद् । यत्कार्य्यं तत्सार्थकमिति हि नियमः । अतश्चित्तस्यैतदुभयमपि परार्थमित्यर्थ इति विज्ञानभिक्षुः ।

[२] अधिशेरते = आश्रयन्त इत्यर्थः ।

भा० ऽपवर्गेण चार्थनार्थवान् पुरुषः स एव परो[१], न परः सामान्यमात्रं, यत्तु किञ्चित्परं सामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकस्तत्सर्वं संहत्यकारित्वात् परार्थमेव स्याद् । यस्त्वसौ परो विशेषः स न संहत्यकारी पुरुष इति ॥ २४ ॥

सू० विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥२५॥

भा० यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्ताऽनुमीयते तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्राऽप्यस्ति[२] विशेषदर्शनबीजमपवर्गभागीयं कर्माऽभिनिर्वर्त्तितमित्यनुमीयते तस्यात्मभावभावना स्वभाविकी प्रवर्त्तते, यस्याभावादिदमुक्तं[३]

टी० सुखदुःखयोर्न व्याप्रियेत स एवाभ्यामनुकूलनीयः प्रतिकूलनीयो वा, स च नित्योदासीनः पुरुषः । एवमपवृज्यते येन ज्ञानेन तस्यापि ज्ञेयतन्त्रत्वात् स्वात्मनि च वृत्तिविरोधान्न ज्ञानार्थत्वम्। न चान्यविषयादरमादपवर्गसम्भवो, विदेहप्रकृतिलयानामपवर्गासम्भवात् । तस्माज्ज्ञानमपि पुरुषार्थमेव, न तत्स्वार्थं, नाऽपि परमात्राऽर्थम् । संहतपरार्थत्वे चानवस्थाप्रसङ्गादसंहतपरार्थसिद्धिरिति ॥ २४ ॥ तदेवं कैवल्यमूलबीजं युक्तिमयमात्मदर्शनमुक्त्वा तदुपदेशाधिकृतं पुरुषमनाधिकृतपुरुषान्तराद् व्यावृत्तमाह—सू० "विशेष—वृत्तिः" ॥२५॥ यस्याऽऽत्मभावे भावनाऽस्ति तस्याऽष्टाङ्गयोगोपदेशादनुतिष्ठतो युञ्जानस्य तत्परिपाकाच्चित्तसत्त्वपुरुषयोर्विशेषदर्शनाद् आत्मभावभावना निवर्त्तते । यस्याऽऽत्मभावभावनैव नास्ति

---

टि० [१] भोगापवर्गार्थवानेवाऽत्र परोऽभिमतः, न सामान्यमात्रं यत्किञ्चिदेवेति नाऽर्थान्तरादिरित्यर्थः ।

[२] तत्र = तस्मिन् पुरुषे, रोमहर्षादिलिङ्गेन प्राग्जन्मन्यनेन यमनियमादयोऽनुष्ठिता इत्यनुमीयते इति भावः ।

[३] यस्य = प्राग्भवीयशुभकर्मानुष्ठानस्याऽभावादिदं वक्ष्यमाणं फलमुक्तं पूर्वाचार्यैरित्यर्थः । यदुक्तं तदाह—"स्वभावम्" इति । स्वभावम् = आत्मभावभावनां त्यक्त्वा एषां प्राग्भावीयशुभकर्मशून्यानां पूर्वपक्षेऽरुचिर्भवति, तत्त्वनिर्णये चाऽरुचिर्भवतीत्यर्थः ।

भा० "स्वभावं मुक्त्वा दोषाद्येषां पूर्वपक्षे रुचिर्भवति अरुचिश्च निर्णये भवति" तत्रात्मभावभावना—कोऽहमासं कथमहमासं किंस्विदिदं, कथं स्विदिदं, के भविष्यामः कथं वा भविष्याम इति। सा तु विशेषदर्शिनो निवर्त्तते। कुतः। चित्तस्यैष विचित्रः परिणामः, पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति। ततोऽस्याऽऽत्मभावभावना कुशलस्य निवर्त्तत इति ॥ २५ ॥

सू० तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥२६॥

भा० तदानीं[1] यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासीत्तदस्याऽन्यथा भवति, कैवल्यप्राग्भारं विवेकजज्ञाननिम्नमिति ॥२६॥

टी० नास्तिकस्य तस्योपदेशानधिकृतस्यापरिनिश्चितात्मतत्परलोकभावस्य नोपदेशो न विशेषदर्शनं नाऽऽत्मभावभावनानिवृत्तिरिति सूत्रार्थः। नन्वात्मभावभावनायाश्चित्तवर्त्तिन्याः कुतोऽवगम इत्यत आह-"यथा प्रावृषि" इति। प्राग्भवीयं तत्त्वदर्शनबीजमपवर्गभागीयं यत्कर्माष्टाङ्गयोगाऽनुष्ठानं तदेकदेशाऽनुष्ठानं वा तदभिनिर्वर्त्तितमस्तीत्यनुमीयते। तस्य चाऽऽत्मभावभावना अवश्यमेव स्वाभाविकी=वस्त्वभ्यासं विनाऽपि प्रवर्त्तते। अनधिकारिणमागमिनां वचनेन दर्शयति-"यस्याऽभावादिदम्" इति। पूर्वपक्षः=नास्ति कर्मफलं, परलोकिनोऽभावात् परलोकाऽभावात्। तत्र रुचिः, अरुचिश्च निर्णये =पञ्चविंशतितत्त्वविषये, आत्मभावभावना प्राग् व्याख्याता *। विशेषदर्शिनः परामर्शमाह-"चित्तस्यैव" इति। तस्य विशेषदर्शनकुशलस्याऽऽत्मभावभावना विनिवर्त्तत इति ॥ २५ ॥

अथ विशेषदर्शिनः कीदृशं चित्तमित्यत आह—सू० "तदा-चित्तम्" ॥२६॥ निगदव्याख्यातम् ॥ २६ ॥

टि० (१) तदानीं = विशेषदर्शनावस्थायामस्य विवेकिनो यच्चित्तं तदन्यथा भवतीत्यर्थः, अन्यथा—शब्दार्थमाह—"कैवल्यप्राग्भारम्" इति। कैवल्ये प्राग्भारः = आभिमुख्यं यस्येत्यर्थः। यच्चित्तमविवेकमार्गसञ्चरणशीलं सद्विषयाऽभिमुखमासीत् तच्चित्तमधुना विवेकमार्गसञ्चारि सत्कैवल्याभिमुखं जातं योगिन इति भावः। * प्रथमे पादे ३९ इति सूत्रे।

सू० तच्छिद्रेषु[१] प्रत्ययान्तराणि संस्कारेभ्यः ॥२७॥

भा०प्रत्ययविवेकनिम्नस्य सत्त्वपुरुषान्यताख्यातिमात्रप्रवाहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराणि=अस्मीति वा, ममेति वा जानामीति वा, न जानामीति वा । कुतः । क्षीयमाणबीजेभ्यः पूर्वसंस्कारेभ्य इति ॥ २७ ॥

सू० हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

भा०यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति तथा ज्ञाना-

टी०स्यादेतद्, विशेषदर्शनं चेद्विवेकनिष्ठं न जातु चित्तं व्युत्थितं स्याद्दृश्यते चाऽस्य भिक्षामटतो व्युत्थितमित्यत आह—सू० "तच्छि-भ्यः" ॥२७॥ प्रतीयते येन स प्रत्ययः,=चित्तसत्त्वं, तस्माद्विवेकाश्रितेः, तेन निम्नस्य । जानामीति साक्षान्मोक्षो विविच्य दर्शितः । न जानामीतिमोहः, तन्मूलावहङ्कारममकारावहमस्मीति वा ममेति वा दर्शितौ । क्षीयमाणानि च तानि बीजानि चेति समासः । पूर्वसंस्कारेभ्यः=व्युत्थानसंस्कारेभ्यः ॥२७॥

स्यादेतत्, सत्यपि विवेकज्ञाने व्युत्थानसंस्कारा यदि प्रत्ययान्तराणि प्रसुवते कस्तर्हि हानहेतुरेतेषां, यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्नित्यत आह-सू० "हानमेषां क्लेशवदुक्तम्" ॥ २८ ॥ अपरिपक्वविवेकज्ञानस्याक्षीयमाणा व्युत्थानसंस्काराः प्रत्ययान्तरं प्रसुवते, न तु परिपक्वविवेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुमर्हन्ति, यथा विवेकच्छिद्रसमुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते । तत्कस्य हेतोः । तदैते क्लेशा विवेकज्ञानवह्निदग्धबीजभावा इति । एवं व्युत्थानसंस्कारा अपीति ।

अथ व्युत्थानसंस्कारा विवेकज्ञानसंस्कारैर्निरोद्धव्याः । विवेक-

टि० [१] तस्मिन् विवेकवाहिनि चित्ते छिद्रेषु अन्तरालेषु, प्रत्ययान्तराणि व्युत्थानरूपाणि पूर्वव्युत्थानाऽनुभवजसंस्कारेभ्यो भवन्तीत्यर्थः । एतेन न केवलं सत्त्वपुरुषाऽन्यताख्यातिसहकृतसंप्रज्ञातयोग एवालंप्रत्ययः कर्त्तव्योऽपि तु प्रत्ययान्तरनिरोधाय परवैराग्यलब्धजन्माऽसम्प्रज्ञातलाभाय यतनीयमिति बोधितं भवति ।

भा०ग्निना दग्धबीजभावः पूर्वसंस्कारो न प्रत्ययप्रसूर्भवति, ज्ञानसंस्कारास्तु चित्ताऽधिकारसमाप्तिमनुशेरत[१] इति न चिन्त्यन्ते ॥२८॥

सू० प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः[२] ॥ २९ ॥

भा०यदाऽयं ब्राह्मणः प्रसङ्ख्यानेऽप्यकुसीदः—ततोऽपि न किञ्चित्प्रार्थयते, तत्राऽपि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते, तदाऽस्य धर्ममेघो नाम समाधिर्भवति ॥ २९ ॥

टी०संस्काराश्च निरोधसंस्कारैः। निरोधसंस्काराणान्त्वबाह्यविषयत्वं दर्शितं, निरोधोपायः प्रायश्चिन्तनीय इत्यत आह—"ज्ञानसंस्कारास्तु" इति। परवैराग्यसंस्कारा इत्यर्थः ॥ २८ ॥

तदेवं सूत्रकारो व्युत्थाननिरोधोपायं प्रसङ्ख्यानमुक्त्वा प्रसङ्ख्याननिरोधोपायमाह-सू०"प्रसं-समाधिः" ॥२९॥ ततोऽपि = प्रसङ्ख्यानादपि, न किञ्चित् = सर्वभावाऽधिष्ठातृत्वादि, प्रार्थयते, प्रत्युत तत्राऽपि क्लिश्नाति, परिणामित्वदोषदर्शनेन विरक्तः, सर्वथा विवेकख्यातिरेव भवति। एतदेव विवृणोति-"तत्राऽपि"इति। यदा व्युत्थानप्रत्यया भवेयुस्तदा नायं ब्राह्मणः सर्वथा विवेकख्यातिः, यतस्तस्य न प्रत्ययान्तराणि भवन्ति ततः सर्वथा विवेकख्यातिरिति। तदास्य धर्ममेघः समाधिर्भवति = एतदुक्तं भवति-प्रसङ्ख्याने विरक्तस्तन्निरोधमिच्छन् धर्ममेघं समाधिमुपासीत, तदुपासने च सर्वदा विवेकख्यातिर्भवति। तथाच तन्निरोद्धुं पारयतीति ॥ २९ ॥

टि० (१) अनुशेरते = प्रतीक्षन्त इति यावत्। अधिकारसमाप्तौ चित्तेन सहैव ज्ञानसंस्काराणां नाशात्तन्निरोधाय साधनचिन्ता नास्तीति भावः।

(२) प्रसङ्ख्यानं = विवेकजज्ञानं, तत्राप्यकुसीदस्य = विरक्तस्येत्यर्थः। प्रसङ्ख्यानफलमलिप्सोः योगिनः व्युत्थानसंस्काराभावात् योगान्तरायाऽभावाच्च सर्वथा = निरन्तरं विवेकख्यात्युदयाद् हेतोर्धर्ममेघनामा सम्प्रज्ञातयोगकाष्ठारूपः समाधिर्भवतीत्यर्थः। धर्मः = प्रत्यगब्रह्मैक्यसाक्षात्कारः, तं मेहति = सिञ्चति वर्षतीति धर्ममेघः। यदाहुः"अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम्" इति।

सू० ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

भा०तल्लाभादविद्यादयः क्लेशाः समूलकाषं[1]कषिता भवन्ति, कुशलाऽकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति, क्लेशकर्म निवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति । कस्माद् । यस्माद्विपर्य्ययो भवस्य कारणम् । न हि क्षीणविपर्य्ययः कश्चित्केन चित् क्वचिज्जातो दृश्यत इति ॥ ३० ॥

सू० तदा[2] सर्वावरणमलापेतस्य ज्ञानस्याऽऽनन्त्या-ज्ज्ञेयमल्पलम् ॥ ३१ ॥

भा०सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्याऽऽनन्त्यं भवति। आवरकेण तमसाऽभिभूतमावृतज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्त्तितमुद्घाटितं ग्रहणसमर्थं भवति । तत्र यदा सर्वैरावरणमलैरपगतमलं

टी०तस्य च प्रयोजनमाह-सू०"ततः क्लेशकर्मनिवृत्तिः"॥३०॥कस्मात्पुनर्जीवन्नेव मुक्तो भवति । उत्तरं-"यस्माद्" इति क्लेशकर्मवासनेद्धः किल कर्माशयो जात्यादिनिदानम्, न चाऽसति निदाने निदानी भवितुमर्हति, यथाऽऽहाऽत्र भगवानक्षपादः—"वीतरागजन्माऽदर्शनाद्" इति ॥ ३० ॥

अथैवं धर्ममेघे सति कीदृश चित्तमित्यत आह-सू०"तदा-अल्पम् ॥ ३१ ॥ आव्रियते चित्तसत्त्वमेभिरित्यावरणानि, मलाः=क्लेशकर्माणि, सर्वे च ते आवरणमलाश्चेति सर्वावरणमलाः, तेभ्योऽपेतस्य चित्तसत्त्वस्य, ज्ञानस्य =ज्ञायतेऽनेनेत्यनया व्युत्पत्त्या, आनन्त्याद्=अपरिमेयत्वाज्ज्ञेयमल्पम् । यथा हि शरदि घनपटलमुक्तचन्द्राऽर्चिषः परितः प्रद्योतमानस्य प्रकाशाऽऽनन्त्यात्प्रकाश्या घटादयोऽल्पाः प्रकाशन्ते एवमपगतरजस्तमसश्चित्तसत्त्वस्य प्रकाशानन्त्यादल्पं प्रकाश्यमिति। तदेतदाह—"सर्वैः"इति। एतदेव व्यतिरेकमुखेन स्फोरयति—"आवरकेण तमसाऽभिभूतम्" इति । क्रियाशीलेन रजसा प्रवर्त्तितमत एवोद्घाटितं = प्रदेशादपनी-

टि० (१) मूलं क्लेशसंस्कारास्तैः सह यथास्यात्तथा क्लेशाः कषिता = नष्टाः, छिन्ना वा भवन्तीत्यर्थः, एवं प्रारब्धातिरिक्ताः कर्माशयाः क्लेशाख्यमूलेन सह हता भवन्तीत्यर्थः ।

(२) तदा = जीवन्मुक्त्यवस्थायाम्, "अल्पम्" = यदि हि पञ्चविंशतितत्त्वाऽतिरिक्तमन्यदपि वस्तु तिष्ठेत् तदा तदपि प्रकाश्येत । ज्ञेयस्यैव तु अल्पतया अन्यन्न प्रकाश्यते। न तु सत्त्वस्याऽल्पतयेति भावः ।

भा० भवति तदा भवत्यस्याऽऽनन्त्यं, ज्ञानस्याऽऽनन्त्याज्ज्ञेयमल्पं सम्पद्यते, यथाऽऽकाशे खद्योतः। यत्रेदमुक्तम्-"अन्धो मणिमविध्यत्तमनङ्गुलिरावयत्। अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयद्" इति ॥ ३१ ॥

सू० ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥

भा० तस्य धर्ममेघस्योदयात्कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते। न हि कृतभोगापवर्गाः परिसमाप्तक्रमा क्षणमप्यवस्थातुमुत्सहन्ते ॥ ३२ ॥

---

टी० ततम इत्यर्थः। अत एव सर्वान् धर्मान् = ज्ञेयान् मेहति = वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यते। नन्वयमस्तु धर्ममेघः समाधिः सवासनक्लेशकर्माशयप्रशमहेतुः। अथ सत्यप्यस्मिन् कस्मान्न जायते पुनर्जन्तुरित्यत आह— "यत्रेदमुक्तम्" इति। कारणसमुच्छेदादपि चेत्कार्य्यं क्रियते हन्त भो मणिवेधादयोऽन्धादिभ्यो भवेयुः प्रत्यक्षाः। तथाचानुपपन्नार्थतायामाभाणको लौकिक उपपन्नार्थः स्याद्। अविध्यदन्धो मणिमिति[१]। आवयद् = ग्रथितवान्। प्रत्यमुञ्चत् = पिनद्धवान्, अभ्यपूजयत् = स्तुतवानिति ॥ ३१ ॥

ननु धर्ममेघस्य पराकाष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघातमपहन्तु व्युत्थानसमाधिसंस्कारान् क्लेशकर्माशयान्, गुणास्तु स्वत एव विकारकरणशीलाः कस्मात्तादृशमपि पुरुषं प्रति देहेन्द्रियादि नारभन्त इत्यत आह— सू० "ततः=नाम्" ॥ ३२॥ शीलमिदं गुणानां यदमी यं[२] प्रति कृतार्थास्तं प्रति न प्रवर्त्तन्त इति भावः ॥ ३२ ॥

---

टि० (१) अन्धो वज्रेण मणिं सच्छिद्रमकरोद् इत्यर्थः, पिनद्धवान्=कण्ठाभरणं कृतवान् इत्यर्थः, विज्ञानभिक्षुस्तु प्रकारान्तरेणेदं भाष्यं योजयाम्बभूव। तथाहि—एतादृशं सर्वज्ञत्वं लोकेऽतीवाश्चर्य्यमन्धमणिवेधादिवद् इति बौद्धोपहासमुखेन दर्शयति—"यत्रेदम्" इति। यत्र=क्षुद्राणामपि जीवानां योगबलादेतादृशसर्वज्ञत्वे, बौद्धैरिदं दृष्टान्तजातमसम्भवदर्शनायोक्तमुपहसद्भिरित्यर्थः। किन्तत्, तदाह—"अन्ध" इत्यादि। दृष्टान्तचतुष्टयस्याऽयमाशयः—अनाद्यविद्यामूढचित्तैः साङ्ख्याद्यभिमतसूक्ष्मार्थानामवधारणरूपं वेधनमेवाऽऽदावशक्यं, ततश्च तस्य सूक्ष्मार्थस्याऽविरलवृत्तिसन्तानेन सूत्रेण ग्रथनमप्यशक्यं, ततोऽपि सर्वथा विवेकख्यातिरतीवाऽशक्या, ततश्च तादृशचित्तस्य परिपूर्णज्ञानत्वेन स्तुतिरप्यशक्येति। आस्तिकैस्तु श्रुतिस्मृतिप्रामाण्येनैतत्सर्वं श्रद्धेयमिति भावः। सर्ववेदव्याख्याकृन्माधवाचार्य्यस्तु श्रुतिरियमित्याह। (२) ननु गुणानामखिलपरिणामक्रमे समाप्ते सति न कोऽपि बद्धः स्यादित्यत आह—"यम्प्रति कृतार्था" इति।

अथ कोऽयं क्रमो नामेति,

**सू०क्षणप्रतियोगी परिणामाऽपरान्तनिर्ग्राह्यः क्रमः॥३३॥**

भा०क्षणानन्तर्यात्मा परिणामस्याऽपरान्तेन=अवसानेन गृह्यते क्रमः[1]नह्यननुभूतक्रमक्षणा नवस्य पुराणता वस्त्रस्याऽन्ते भवति। नित्येषु च क्रमो दृष्टः[2]। द्वयी चेयं नित्यता, कूटस्थनित्यता परिणामिनित्यता च। तत्र कूटस्थनित्यता पुरुषस्य, परिणामिनित्यता गुणानाम्। यस्मिन् परिणम्यमाने तत्त्वं न विहन्यते तन्नित्यम्[3]। उभयस्य

---

टी०अत्रान्तरे परिणामक्रमं पृच्छति"अथ कोऽयम्"इति। सू०"क्षण-क्रमः" ३३ परिणामक्रमः क्षणप्रतियोगी=क्षणः प्रतिसंबन्धी यस्य स तथोक्तः। क्षणप्रचयाश्रय इत्यर्थः। न जातु क्रमः क्रमवन्तमन्तरेण शक्यो निरूपयितुं, न चैकस्यैव क्षणस्य क्रमः। तस्मात् क्षणप्रचयाश्रयः परिशिष्यते, तदिदमाह-"क्षणानन्तर्यात्मा"इति। परिणामक्रमे प्रमाणमाह-"परिणामस्य"इति। नवस्य हि वस्त्रस्य प्रयत्नसंरक्षितस्याऽपि चिरेण पुराणता दृश्यते, सोऽयं परिणामस्यापरान्तः=पर्य्यवसाने, तेन हि परिणामस्य क्रमः। ततः प्रागपि पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलस्थूलतरत्वादीनां पौर्वापर्य्यमनुमीयते। एतदेव व्यतिरेकमुखेन दर्शयति-"न हि"इति। अननुभूतः=अप्राप्तः क्रमक्षणो यया सा तथोक्ता। नन्वेष क्रमः प्रधानस्य न सम्भवति, तस्य नित्यत्वादित्यत आह-"नित्येषु च" इति। बहुवचनेन सर्वनित्यव्यापितां क्रमस्य प्रतिजानीते। तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्यव्यापितां क्रमस्योपपादयति-"द्वयी" इति। ननु कूटस्थं स्वभावादप्रच्युतमस्तु नित्यं, परिणामि सदैव स्वरूपात् च्यवमानं कथं नित्यमित्यत आह-"यस्मिन्" इति। धर्मलक्षणा-

---

टि० (१) क्षणाऽनन्तर्य्यात्मा क्रम इत्यन्वयः,=क्षणाऽव्यवहितपरिणामधारा परिणामक्रमशब्दार्थ इति भावः। तत्र प्रमाणप्रदर्शनपरं सूत्राऽवयवं व्याचष्ट-"परिणाम" इति।

(२) नित्येषु स्वतोऽपरान्ताभावेऽपि विकाराणामपरान्तैरेव प्रतिक्षणपरिणामो दृष्टः=अनुमित इत्यर्थः॥

(३) तत्त्वं=स्वस्वरूपं, न विहन्यते=नातीतावस्थाऽऽपन्नं भवति, इत्यर्थः। अतीततासून्यत्वमात्रं नित्यस्य सामान्यं लक्षणम्। तच्च गुणपुरुषोभयसाधारणमित्याह--"उभयस्य"=इति। =गुणपुरुषयोरित्यर्थः।

भा० च तत्त्वाऽनभिघातान्नित्यत्वम्। तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्य्यवसानो, नित्येषु धर्मिषु गुणेषु[१] अलब्धपर्य्यवसानः, कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता * क्रमेणैवाऽनुभूयत इति तत्राप्यलब्धपर्य्यवसानः[२] शब्दपृष्ठेनाऽऽस्तिक्रियामुपादाय कल्पित इति। अथाऽस्य संसारस्य स्थित्या गत्या[३] च गुणेषु वर्त्तमानस्याऽस्ति क्रमसमाप्तिर्न वेति ।

---

टी० ऽवस्थानामुदयव्ययधर्मत्वं, धर्मिणस्तु तत्त्वादविघात एवेति। अथ किं परिणामापरान्तनिर्ग्राह्यता सर्वक्रमस्य, नेत्याह—"तत्र गुणधर्मेषु बुद्ध्यादिषु" इति। यतो लब्धपर्य्यवसानः धर्माणां विनाशात् प्रधानस्य तु परिणामक्रमो न लब्धपर्य्यवसानः। ननु प्रधानस्य धर्मरूपेण परिणामादस्तु परिणामक्रमः पुरुषस्य त्वपरिणामिनः, कुतः परिणामक्रम इत्यत आह—"कूटस्थनित्येषु" इति। तत्र बद्धानां चित्ताऽव्यतिरेकाभिमानात्तत्परिणामाध्यासः मुक्तानां चास्तिक्रियामुपादायाऽवास्तवोऽपि परिणामो मोहकल्पितः, शब्दस्य पुरःसरतया तत्पृष्ठो विकल्पोऽस्ति—क्रियामुपादत्त इति। गुणेष्वलब्धपर्य्यवसानः परिणामक्रम इत्युक्तं तदसहमानः पृच्छति—"अथ" इति। स्थित्येति महाप्रलयावस्थायां, गत्येति सृष्टौ। एतदुक्तं भवति—यद्यानन्त्यान्न परिणामसमाप्तिः संसारस्य, हन्त भोः कथं महाप्रलयसमये सर्वेषामात्मनां सहसा समुच्छिद्येत, कथञ्च सृष्ट्यादौ सहसोत्पद्येत संसारः। तस्मादेकैकस्याऽऽत्मनो मुक्तिक्रमेण सर्वेषां विमोक्षादुच्छेदः सर्वेषां संसारक्रमेणेति प्रधानपरिणामपरिसमाप्तिः। एवञ्च प्रधानस्याऽप्यनित्यत्वप्रसङ्गः। न चाऽपूर्वसत्त्वप्रादुर्भाव इष्यते येनानन्त्यं स्यात् तथा सत्यनादित्वव्याहतेः सक-

---

* स्वरूपाऽस्तिता च तत्तत्क्षणमात्रं, तत्क्रमश्च पुरुषेष्वप्यस्ति। इदानीं स्थित्वा पश्चात् स्थास्यतीति व्यवहारात्। अन्यथा सर्वकालसम्बन्धरूपनित्यताऽनुपपत्तेश्चेति विज्ञानदेवः।

टि० [१] अत्र "परिणामाऽपरान्तनिर्ग्राह्यः क्रमः" इत्यनुषञ्जनीयम्। [२] अत्र क्रम इति शेषः। स च क्रमोऽस्त्यादिक्रियामादायैव शब्दपृष्ठेन = शब्दाऽनुसारिणा व्यवहर्त्रा कल्पितो भवतीत्यर्थः। [३] स्थित्या गत्या = सृष्टिप्रलयप्रवाहेन गुणेषु वर्त्तमानस्य संसारस्य क्रमसमाप्तिरस्ति न वा। अस्ति चेदलब्धपर्य्यवसानोक्तिविरोधो, नास्ति चेत्परिणामक्रमसमाप्तिर्गुणानामिति पूर्वविरोध इत्यभिप्रायः पृच्छतः।

भा० अवचनीयमेतत्।कथम्, अस्ति प्रश्न एकान्तवचनीयः—सर्वो जातो मरिष्यति, ओं भो इति।अथ सर्वो मृत्वा जनिष्यत इति विभज्य वचनीयमेतत्-प्रत्युदितख्यातिःक्षीणतृष्णः कुशलो न जनिष्यत, इतरस्तु जनिष्यते। तथा मनुष्यजातिः श्रेयसी, न वा श्रेयसीत्येवं परिपृष्टे, विभज्यवचनीयः प्रश्नः। पशूनुद्दिश्य श्रेयसी, देवानृषींश्चाधिकृत्य नेति। अयन्त्ववचनीयः प्रश्नः।संसारोऽयमन्तवानथाऽनन्त इति, कुशलस्याऽस्ति संसारक्रमसमाप्तिर्नेतरस्येति १), अन्यतरावधारणेऽदोषः। तस्माद्व्याकरणीय एवाऽयं प्रश्न इति ॥ ३३ ॥

---

टी० लशास्त्रार्थभङ्गप्रसङ्ग इतिभावः। उत्तरमाह—"अवचनीयम्" इति।अनुत्तराहमेतद्। एकान्तत एव तस्याऽवचनीयतां दर्शयितुमेकान्तवचनीयं प्रश्नं दर्शयति—"अस्ति प्रश्न" इति।सर्वो जातो मरिष्यतीति प्रश्नः। उत्तरम्—'ॐ भो' इति सत्यं भो इत्यर्थः। अविभज्य वचनीयमुक्त्वा प्रविभज्य वचनीयं प्रश्नमाह—"अथ सर्व इति" विभज्य बचनीयतामाह "विभज्य" इति। विभज्यवचनीयमेव प्रश्नान्तरं विस्पष्टार्थमाह—"तथा मनुष्यजाति" इति। अयन्तु = अयन्त्ववचनीय एकान्ततः—न हि सामान्येन कुशलाकुशलपुरुषसंसारस्यान्तवत्त्वमनन्तवत्त्वं वा शक्यमेकान्ततो वक्तुं, यथा प्राणभृन्मात्रस्य श्रेयस्त्वमश्रेयस्त्वंवा नैकान्ततः शक्योऽवधारयितुम् । यथा २) जातमात्रस्य मरणमेकान्तः।विभज्य पुनः शक्याऽवधारणमित्याह—"कुशलस्य" इति। अयमभिसन्धिः—
क्रमेण मोक्षे सर्वेषां मोक्षात्संसारोच्छेद इत्यनुमानं, तच्चागमसिद्धमोक्षाश्रयम् । तथाचाभ्युपगतमोक्षप्रतिपादकागमप्रमाणभावः कथं तमेवाऽऽगमं प्रधान विकारनित्यतायामप्रमाणीकुर्य्यात्। तस्मादागमबाधितविषयम् एतदनुमानं, न

---

टि० [१] इति—शब्दो हेत्वर्थे। कुशलस्येत्यधिकरणस्य शेषत्वविवक्षया षष्ठी, तथाच कुशले पुरुषे गुणकृतस्य संसारक्रमस्य समाप्तिर्नेतरस्मिन्निति यतोऽतो गुणसृष्टिप्रलयप्रवाहोच्छेदानुच्छेदान्यतराऽवधारणे दोष, उच्छेदे सृष्टिप्रवाहस्याऽनाद्यनन्तत्वबोधकशास्त्रबाधः । अनुच्छेदे न कोऽपि मुच्येतेति योगादिप्रतिपादकशास्त्रवैय्यर्थ्यमिति भावः । एतच्च भिक्षुव्याख्यानमनुरुद्ध्योक्तं, वाचस्पत्यानिरीक्षणे तु अदोष इति छेदो भातीति। [२] यथा जातमात्रस्य मरणमेकान्तः = नियतो, नैवं प्राणिमात्रस्य श्रेयस्त्वमश्रेयस्त्वं वा नियमेनाऽवधारयितुं शक्यमिति यथा एवमेव सामान्येन कुशलाऽकुशलपुरुषसंसारस्याऽन्तवत्त्वमनन्तवत्त्वं वा न शक्यमवधारीयतुमित्यर्थः । कथन्तर्हि अवधारणीयामित्यत आह "कुशलस्य" इति ।

भा०गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तं, तत्स्वरूपमवधार्य्यते—

सू० पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं[१] स्वरूपप्रतिष्ठा वा चितिशक्तिरिति॥३४॥

भा०कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः=कार्य्यकारणात्मनां गुणानां तत्कैवल्यं, स्वरूपप्रतिष्ठा=पुनर्बुद्धिसत्त्वाऽऽनभि

टी०प्रमाणम्।श्रूयते हि श्रुतिस्मृतीतिहासपुराणेषु[२] सर्गप्रतिसर्गपरम्परायाअनादित्वमनन्तत्वं चेति।अपि च सर्वेषामेवात्मनां संसारस्य न तावद् युगपदुच्छेदः संभवी।न हि पण्डितरूपाणामप्यनेकजन्मपरम्पराभ्यासपरिश्रमसाध्या विवेकख्यातिप्रतिष्ठा,किं पुनः प्राणभृन्मात्रस्य, स्थावरजङ्गमादेरेकदाऽकस्माद् भवितुमर्हति। न च कारणाऽयौगपद्ये कार्य्ययौगपद्यं युज्यते।क्रमेण तु विवेकख्यातावसंङ्ख्येयानां क्रमेण मुक्तौ न संसारोच्छेदः, अनन्तत्वाज्जन्तूनामसंख्येयत्वादिति सर्वमवदातम् ॥ ३३ ॥

कैवल्यरूपाऽवधारणपरस्य सूत्रस्याऽवान्तरसङ्गतिमाह-"गुणाऽधिकार" इति। सू०"पुरुषार्थशून्याना गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति" ॥३४॥ कृतकरणीयतया पुरुषार्थशून्यानां गुणानां यः प्रतिप्रसवः = स्वकारणे प्रधाने लयः तेषां कार्य्यकारणात्मकानां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते । मनोऽस्मितायाम्, अस्मिता लिङ्गे, लिङ्गमलिङ्ग इति योऽयं गुणानां कार्य्यकारणात्मनां प्रतिसर्गः तत्कैवल्यं = यं कंचित् पुरुषं प्रति प्रधानस्य मोक्षः। स्वरूपप्रतिष्ठा पुरुषस्य वा मोक्ष इत्याह—"स्वरूपप्रतिष्ठा" इति।

टि० (१) "भूयश्चाऽन्ते विश्वमायानिवृत्तिः" "तरतिशोकमात्मविद्" इत्यादिश्रुतिसिद्धमात्यन्तिकप्रपञ्चोपरमरूपं मुक्तिलक्षणमाह—"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यम्"इति। "स यो ह वै तत्परमं ब्रह्मवेद ब्रह्मैव भवति" इत्यादिश्रुतिसिद्धं स्वरूपसुखाप्तिरूपं द्वितीयं मुक्तिलक्षणमाह—"स्वरूपप्रतिष्ठा वा चितिशक्तिः" इति। केचित्तु आद्यदलेन बुद्धेः कैवल्यमुक्तमन्यदलेन तु पुरुषस्य कैवल्यमिति प्राहुः। (२) 'न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा, "अनादिर्भगवान् कालो नाऽन्तोऽस्य द्विज विद्यते,अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा" इत्यादिस्मृत्यादिषु सर्गादिपरम्परायाः नित्यत्वं श्रूयत इत्यर्थः।

भा० संबन्धात्पुरुषस्य चितिशक्तिरेव केवला[१], तस्याः सदा तथैवा-ऽवस्थानं कैवल्यमिति ॥ ३४ ॥

इति श्रीपातञ्जले योगशास्त्रे साङ्ख्यप्रवचने कैवल्यपादश्चतुर्थः ॥ ४ ॥

---

टी० अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तिर्नचासौ मोक्ष इत्यत आह—"पुनः" इति । सौत्र इति—शब्दः शास्त्रपरिसमाप्तौ ॥ ३४ ॥

मुक्त्यर्हचित्तं[२] परलोकमेयज्ञसिद्धयो धर्मघनः समाधिः ॥
द्वयी च मुक्तिः प्रतिपादिताऽस्मिन् पादे प्रसङ्गादपि चान्यदुक्तम् ॥ १ ॥

निदानं[३] तापानामुदितमथ तापाश्च कथिताः
सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि ॥
कृतो मुक्तेरध्वा गुणपुरुषभेदः स्फुटतरः
विविक्तं कैवल्यं परिगलिततापा चितिरसौ ॥ २ ॥

इति[४] श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां तत्त्व-वैशारद्यां कैवल्यपादश्चतुर्थः समाप्तः ॥ ४ ॥

---

टि० (१) पुरुषस्य पुनर्बुद्धिसत्त्वाऽनभिसम्बन्धाद् या केवला चितिशक्तिरूपता सा स्वरूपप्रतिष्ठा इत्यर्थः । तस्याः=चितिशक्तेः । (२) पादार्थसङ्ग्राहकं श्लोकं पठति—"मुक्त्यर्ह" इति । अस्मिन् चतुर्थे पादे षष्ठेन सूत्रेण मुक्तियोग्यं चित्तमुक्तम् । परलोकश्च मेयश्च ज्ञश्चेति परलोक-मेयज्ञाः, तेषां सिद्धय उक्ता इति । तत्र परलोकसिद्धिर्दशमसूत्रेणोक्ता । मेयसिद्धिः=बाह्यार्थ-सद्भावसिद्धिः । सा च "वस्तुसाम्य" १५ इत्यादि सूत्रेषूक्ता । ज्ञसिद्धिः=चित्ताऽतिरिक्तचिति-शक्तिसिद्धिः । सा च "न तत्स्वाभासम्" १९ इत्यादिसूत्रेषूक्ता । धर्मघनः = धर्ममेघः समाधिः, स च "प्रसङ्ख्याने" २८ इति सूत्रेणोक्तः । द्वयी मुक्तिः = "ततः क्लेशकर्मनिवृत्तिः" इति ३० सूत्रेण जीवन्मुक्तिः प्रतिपादिता । "पुरुषार्थ" ३४ इति सूत्रेण च विदेहमुक्तिः प्रतिपादिता, यद्वा अन्तिमसूत्रेण गुणानां प्रतिप्रसवः, स्वरूपप्रतिष्ठा चेति कैवल्यद्वयमुक्तमित्यर्थो बोध्यः । प्रसङ्गादन्यत् = प्रकृत्यापूरादि, उक्तमित्यर्थः ।

(३) पादचतुष्टयार्थसङ्ग्राहकं श्लोकमाह "निदानम्" इति । तापाः = क्लेशाः, तेषां निदानम्, = आदिकारणं विपर्ययज्ञानवासनादिरित्यर्थः । यद्वा तापाः = दुःखान्याऽऽध्या-त्मिकादीनि तेषां निदानं गुणपुरुषसंयोग इत्यर्थो बोध्यः । स्पष्टार्थोऽयं श्लोकः ।

(४) इति-शब्दः पूर्वोपन्यस्तग्रन्थार्थक इति, न समाप्त इत्यनेन पौनरुक्त्यम् ॥

यायजूकदुरापं यज्जञ्जपूकजनप्रियम् ।
तन्महःप्रीतिनेदं निरमायि सुटिप्पणम् ॥

इति श्रीशाश्वतोदासीनमताऽनुगत-पूज्यपादश्रीसत्प्रकाशशिष्यबालरामकृतमल्पविवरणम् ॥ ४ ॥

